तन्न्यूनानां वालाभाद्गुत्तीर्णेभ्यः परीक्षार्थिभ्यः यावत्कृपागुणदशकं दत्त्वोत्तीर्णत्वेन कर्तुं विद्यापीठसमित्या अस्त्यधिकारः। परं च शारीरशास्त्रं द्रव्यगुणशास्त्रं रोगविज्ञानं कायचिकित्सा इत्येतान् विषयान् विहाय अन्येष्वेव विषयेषु सत्यावश्यके एकस्मिन्नेव कृपागुणा देयाः। एतेषां विषयाणां नितरां महत्त्वपूर्णत्वाद् एषु कृपागुणा न देयाः। पश्चाधिककृपागुणदानप्रसंगे तु सर्वविषयाणां गुणयोगः सम्यग् विचारणीयः।

( ङ ) परीक्षाप्रश्नपत्राणां मुद्रणस्य प्रबन्धः स्वयमेव मन्त्रिणा कार्यः। अथवा विद्यापीठतः प्राप्ताधिकारेण केनापि सदस्येन सम्यग् गूढतया करणीयः। यतः न केनचिदपरेण प्रश्नपत्राणि अवलोकनीयानि।

## ११. मन्त्रिणः कार्याणि

( क ) निखिलभारतवैद्यसम्मेलनस्य विद्यापीठसम्बन्धिनां कार्याणामखिलानां निर्वहणे मन्त्री प्रभवति। तेषां यथावत् सम्पादनं तेन विधेयम्।

( ख ) भारतवर्षे आयुर्वेदपाठशालाः कुत्र कुत्र काश्च वर्तन्ते, कीदृशस्तत्पाठ्यक्रमः; कीदृशी तासां स्थितिः, तासां च के के विशेषप्रबन्धा इत्यादयो विषया नियतमवधेया मन्त्रिणा।

( ग ) आयुर्वेदसम्बन्धिनामावश्यकीयग्रन्थानां निर्माणे संकलनेऽनुसंधाने प्रकाशने च निखिलभारतवैद्यसम्मेलनस्य स्थायिसमित्या सर्वदोद्युक्तया तथा प्रयत्नान्तरेण तादृशकार्यसाधिन्या च भाव्यम्।

( घ ) आयुर्वेद-सम्बधिकार्येषु समुत्साहवतां वैद्यसम्मेलनोद्देशनिर्वहणनिरतानां स्वोद्योगयोग्यताभिरायुर्वेद-गौरवाभ्युदयचिकीर्षूणां क्रियाकुशलानां पुंसां काले काले सम्यक् परिचयमुपलभ्य यथोचितप्रश्रय लैस्तान् विद्यापीठ-सम्मानितान् कुर्यात्। तत्प्रान्तीयमन्त्रिमण्डलसाहाय्येन तत्सूचिकां च संचित्य कार्यकारिण्याः समित्याः सम्मत्या निखिलभारतवैद्यसम्मेलनतः कमपि समुचितं उपाधिम्, पदकम्, प्रशंसापत्रं वा वैद्यसम्मेलनद्वारा विद्यापीठमुपहरेत्।

( ङ ) उचितसमये निखिलभारतायुर्वेदविद्यापीठस्य सम्मत्या परीक्षाभ्यो हायनादेकस्मात् प्राक् विषयस्य पाठ्यग्रन्थानां वा विनिश्चयः, एवं परीक्षातो मासत्रयात् प्राक् परीक्षादिवसानां तत्स्थानादीनां च प्रकाशनम्; सति पाठ्यक्रम-परिवर्तने कर्तव्ये वर्षादेकस्मात् प्राक् तत्सूचनायाश्च प्रकाशनं मन्त्रिणा कर्तव्यम्।

( च ) मन्त्री परीक्षायाः यथाशक्यं मासचतुष्टयात् प्राक् परीक्षकान् गणकान् प्रत्येकस्थानव्यवस्थापकांश्च नियोजयेत्।

( छ ) परीक्षातो मासद्वयात् प्राक् कार्यकारिण्या समित्या परीक्षाप्रश्नपत्राणि संपादनीयानि। तन्मुद्रणस्योचितं प्रबन्धं च विधाय पंचदशदिवसेभ्यः प्राक् तानि मुद्रापयेत्।

( प्रश्नपत्रेषु अन्तर्गता विषया यथा न स्युः परैः ज्ञाताः तथा गोपनीया इति सदस्येभ्यो निवेदनीयम् ) ।

( ज ) व्यवस्थापकेभ्यः आवश्यकानि विज्ञापनपत्राणि, उपस्थितिपत्रकाणि, मौखिकपरीक्षाफलपत्रकाणि, प्रवेशानुमतिपत्राणि, निरीक्षकनिमंत्रणपत्राणि, परीक्षार्थिनामावल्यः, कार्यक्रमपत्रिकाः, कार्यालयमुखविलासपत्राणि, दैनिकवृत्तान्तपत्राणि, केन्द्रव्ययपत्राणि, उत्तरपुस्तकानि मषीशोषकपत्राणि च परीक्षातः सप्ताहादेकस्मात् प्राक् यथा केन्द्राध्यक्षसविधे प्राप्येरन् तथा, प्रश्नपत्राणि तु दिनचतुष्टयात् प्राक् सावहिति सुरक्षितानि कृत्वा ( Through Registered Packet ) प्रेषयेत् । विद्यापीठाय उत्तरपुस्तकानि अन्यानि च पत्राणि सुसंरक्षितानि प्रेषणीयानीति व्यवस्थापकः ज्ञापनीयः ।

( झ ) उत्तीर्णपरीक्षार्थिनां प्रमाणपत्रेषु स्वयं हस्ताक्षराणि कृत्वा निखिलभारतायुर्वेद-विद्यापीठाध्यक्षस्य निखिलभारतवैद्यसम्मेलनस्य सभापतेः प्रधानमन्त्रिणश्च हस्ताक्षराणि कारयित्वा निखिलभारत-वैद्यसम्मेलनसभापतिद्वारा प्रमाणपत्राणि विनियोजयेत् उत्तीर्णेभ्यः ।

(ञ) निखिलभारतायुर्वेद—विद्यापीठस्याधिवेशनकार्यक्रमान् विवृत्य प्रकाशयेत् । तथा निखिलभारतायुर्वेदविद्यापीठस्य सर्वाण्येतराणि कार्याणि सम्पादयेत् । निखिल-भारत—वैद्यसम्मेलनस्य समक्षं निखिलभारतायुर्वेदविद्यापीठस्य वार्षिककार्यविवरणं श्रावयेत् ।

## १२. उपमन्त्रिणां कर्तव्यानि ।

विद्यापीठमन्त्रिणः सर्वेषु कार्येषु साहाय्यदानं तदनुपस्थितौ तत्कार्यसंपादनं च ।

## १३. परीक्षकाणां कर्तव्यानि ।

विद्यापीठपरीक्षाणां प्रश्नपत्राणि निर्मातुम्, तानि निरीक्ष्य गुणान् प्रदातुं च भिन्नभिन्नस्थानीयाः स्वदेशीयाः योग्या विद्वांसो निमन्त्रयेरन्, तेषामिमानि कर्तव्यानि—

(क) परीक्षकत्वमङ्गीकृत्य ततः सप्ताहाभ्यन्तर एव प्रश्नपत्राणि निर्माय प्रत्येकं प्रश्नानां गुणांकांश्च विलिख्य मन्त्रिणे प्रेषयेत् परीक्षकः ।

(ख) उत्तरपुस्तकानि परीक्ष्य तानि तत्फलं च मासाभ्यन्तरे मन्त्रिणे प्रेषणीयम् ।

(ग) परीक्षाफलेन साकमुत्तरपुस्तकानां विषये स्वकीयमाशयमपि विलिख्य मन्त्रिणे परीक्षकः प्रहेतुमधिकृतः ।

## १४. केन्द्रव्यवस्थापकानां कर्तव्यानि ।

येषु स्थानेषु आयुर्वेदविद्यापीठस्य परीक्षाकेन्द्राणि स्थाप्यन्ते तेषु परीक्षाणां समुचितो व्यवस्थापक एको नियुज्यते तस्य च कर्तव्यानि—

(क) स्वकीयस्थाने परीक्षाणां निर्वाहणाय पूर्णः प्रबन्धः कार्यः। यत्र स्थाने परीक्षाः निर्वर्त्यन्ते तस्य स्थानस्य सर्वामपि व्यवस्थां विधाय परिक्षायै नियमितकालस्य मासादेकस्मात् प्राक् मन्त्रिणे सर्वान् विषयान् सूचयेत्। यतो मन्त्री समुचितकाले परीक्षार्थिनो ज्ञापयितुं प्रभवति।

(ख) मन्त्रिसविधादागतानि प्रवेशानुमतिपत्रादिपत्राणि परीक्षार्थिभ्यो यथायोग्यं दत्वा तेषां पृष्ठभागेषु स्वकीयहस्ताक्षरं कारयित्वा प्रत्येकशः स एवायं परीक्षार्थीति प्रत्ययादनन्तरमेव तानि तेभ्यो वितरणीयानि। परीक्षास्थाने च प्रत्यहं परीक्षार्थिनां प्रत्येकशः प्रवेशानुमतिपत्राणि निरीक्ष्यैव तेभ्यः प्रवेशनं देयम्।

(ग) प्रत्यहं परीक्षासमयसमाप्तौ सर्वेभ्योऽपि परीक्षार्थिभ्य उत्तरपुस्तकानि संगृह्य प्रतिपरीक्षं यथाक्रमं च संकलय्य, तस्य तस्योत्तरपुस्तकमुखपृष्ठे स्वकीयमभिप्रायं च विलिख्य केन्द्रव्यवस्थापकेन स्वयमेव सुरक्षितकवचयुक्तानि च तानि कृत्वा तद्दिन एव विद्यापीठकार्यालयाय प्रेषणीयानि।

(घ) परीक्षासप्ताहे प्रत्यहं दैनिकवृत्तान्तं स्वयमेव यथावत् विलिख्य स च विद्यापीठकार्यालयाय प्रेष्यः। अन्त्यदिने तु सर्वाण्यपीतराणि अवशिष्टपत्राणि यथावद्विलिख्य विद्यापीठकार्यालये प्रेषणीयानि।

(ङ) अनुचितं साहाय्यं न यथा परीक्षार्थी अपरेभ्योऽधिगच्छेत्तथा व्यवस्थापकेन यतितव्यम्।

(च) परीक्षाकाले निरीक्षणाय प्रत्यहं समुचितसंख्याकाः निरक्षका नियोक्तव्याः; मन्त्रिणे तन्नामसूचनाऽपि दातव्या व्यवस्थापकैः।

(छ) मन्त्रिणोऽन्तिकादागतप्रत्येकविषयाणां प्रश्नपत्राणामावरणं परीक्षामन्दिरे उपस्थितानां सज्जनानां सम्मुखे सपदि समुद्घाटनीयं परीक्षाकाले।

(झ) परीक्षाविषये इतराण्यपि आवश्यकानि कर्तव्यानि मन्त्रिविज्ञापनानुसारेण करणीयानि व्यस्थापकैः।

(ञ) परीक्षानन्तरमवशिष्टान्युत्तरपुस्तकानि तथाऽन्यवस्तूनि चान्तिके मंत्रिणः प्रेषणीयानि।

## १५. निरीक्षककार्याणि

येषु येषु स्थानेषु भवन्ति निखिलभारतायुर्वेदविद्यापीठस्य परीक्षास्तत्र तत्र व्यवस्थापकाधीनस्थैः निखिलभारतविद्यापीठनियुक्तैः निरीक्षकैस्तदा उत्तरलेखनोद्यताः परीक्षार्थिनो निरीक्ष्यन्ते। तेषां कर्तव्यानि—

(क) व्यवस्थापकत्यादेशानुसारेण परीक्षार्थिनां निरीक्षणं कार्यम्। यतः प्रश्नोत्तरलेखनकाले परीक्षार्थिनः साहाय्यमनुचितं न प्राप्नुयुः।

(ख) परीक्षार्थिनामावश्यकतां विचारयद्भिस्तेभ्य उत्तरपुस्तकं, मषीकां, तृषितेभ्यश्च सलिलमित्यादि ददद्भिर्निरीक्षकैरुचितं साहाय्यं प्रदातव्यम्।

(ग) परीक्षास्थाने नियतकाले उपस्थितिः, व्यवस्थापकनिश्चितसमयपर्यन्तं तत्र स्थितिः कर्तव्या निरीक्षकैः।

(घ) परीक्षाकाले नैतादृशानि कार्याणि कुर्यात् यैः परीक्षायां निरीक्षणे वा आपत् संभवेत्।

(ङ) अनुचितं साहाय्यं प्राप्तुं प्रयतमानस्य परीक्षार्थिन उत्तरपुस्तके कश्चन संकेतविशेषो विधेयः, अपधाधिक्ये व्यवस्थापकाय विज्ञाप्य तद्बहिष्कारो वा विधेयः।

## १६. गणकस्य कर्तव्यानि।

परीक्षकसन्निधेरागतपरीक्षाफलपत्रकाणां गुणांकानेकीकृत्य नियमेन परीक्षार्थिनां परीक्षाफलानि तेषामुत्तीर्णत्वश्रेणीश्च निश्चेतुं निखिलभारतायुर्वेदविद्यापीठं कांश्चिदपि विदुषः नियोजयति, तेषामिमानि कर्तव्यानि।

(क) परीक्षकेभ्यः प्राप्तान् गुणांकान् कोष्ठेषु पृथक् पृथक् वितीर्य परीक्षार्थिना-मुत्तीर्णानुत्तीर्णत्वयोः सम्यक् निरीक्षणं कार्यम्; उत्तीर्णतालिका सुनिर्मिता आयुर्वेद-विद्यापीठस्याधिवेशने प्रेषणीया गणकैः।

(ख) सत्यावश्यके कस्मैचित्परीक्षार्थिने कृपागुणान् दत्वा तदुत्तीर्णताविषयेऽधि-वेशने प्रस्तावोपस्थितिः कार्या।

(ग) उत्तीर्णानां सूचिका पृथक् कृत्वा भूयो निरीक्ष्य मन्त्रिणोऽन्तिके प्रेष्या।

(घ) आवश्यकतया गुणांकप्रेषणविषये परीक्षकाः प्रार्थनीयाः।

(ङ) गुणांकानां पुस्तकाकारं रूपादीनि वा सम्यक् विधाय कार्यकारिण्या समित्या तदङ्गीकरणोपाया विचिन्तनीयाः।

## १७. परीक्षार्थिनां विज्ञप्तिः।

निखिलभारतायुर्वेदविद्यापीठस्य परीक्षादातृभिः अधोलिखिता विषयाः स्मरणीयाः।

(क) परीक्षास्थाने नियतसमय एव परीक्षार्थिभिरूपस्थातव्यम्।

(ख) परीक्षार्थिभ्यः परीक्षास्थान एव प्रश्नोत्तराणि लिखितुमेकमलिखितपुस्तकम् समपीकमेकमपीपात्रश्चापि दीयेत। परन्तु लेखन्यः स्वकीया एवानेतव्याः।

(ग) पुस्तकानां दक्षिणपृष्ठेष्वेवोत्तराणि लेख्यानि। वामभागे पृष्ठोत्तरीयो भागः त्यक्तव्यश्च। वामपृष्ठे लिखितस्य परीक्षणं न भवेत्। प्रत्येकस्य प्रश्नस्य उत्तरं नूतने पृष्ठे लेख्यम्।

(घ) प्रवेशानुमतिपत्रप्रश्नपत्रोत्तरलेखनपुस्तकमपीशोषणपत्राणि लेखनीं च विहाय इतराणि वस्तूनि, पुस्तकादीनि वा परीक्षार्थिभिर्बहिष्कर्तव्यानि, उत्तरपुस्तकानां पृष्ठ-खण्डनमपि न कार्यम्। परीक्षकैरदर्शनीयस्य कस्यचिल्लेखनखण्डस्य पृष्ठस्य वा चतुर्दिक्षो रेखाः कर्तव्याः। समाप्तैकोत्तरपुस्तकाः द्वितीयपुस्तकाय प्रार्थितनिरीक्षकाः परीक्षार्थिनः द्वितीयपुस्तकाधिकारिणो भवन्ति। लेखनसमाप्तौ पुस्तकद्वयस्यैकता कर्तव्या।

(ङ) काले मिथः संभाषिणः प्रश्नोत्तरलेखनेऽनुचितसाहाय्यचिकीर्षवः परीक्षार्थिनः परीक्षास्थानतो बहिष्करिष्यन्ते । तथा ते तद्वर्षभाविनीमवशिष्टां च परीक्षां दातुमपि नानुमतिं प्राप्स्येरन् ।

(च) परीक्षाफलं प्रकटीक्रियते आगामिवैद्यसम्मेलनतः पूर्वम् सम्मेलनस्य वैद्यसम्मेलनपत्रिकाख्ये मुखपत्रे, वैद्यकपत्रेष्वितरेषु सार्वजनिकपत्रेषु वा । उत्तीर्ण-परीक्षार्थिनां प्रमाणपत्राणि वैद्यसम्मेलने एव वितीर्यन्ते । परीक्षोदर्कपुस्तकं नियतमूल्येन ग्राह्यं सर्वैः ।

(छ) केषु विषयेष्वनुत्तीर्णोऽस्मि इति कश्चन परीक्षार्थी समितिं गुरुद्वारा पृच्छेदिति तदधिकारः । कस्यचिद्विषयस्य गुणाङ्केषु जातभ्रमः परीक्षाफलप्रकाशनतो मासद्वयान्तरे कार्यकारिण्यां समित्यां प्रतिप्रश्नपत्रं रूप्यकद्वयं संप्रेष्योत्तरपुस्तकानि पुनः शोधयितु-मधिकृतोऽभवेत् , स्वान् गुणांकान् पृच्छता च परीक्षार्थिनाष्टावाणकाः प्रेषणीयाः । किंतु एतत्पुनःसंशोधनं गुणांकानां हस्तदोषविषयकमेव स्यात् न तु उत्तरपुस्तकानां पुनः-परीक्षणं न वा कृपागुणदानमित्यवश्यं मनसि करणीयम् ।

(ज) केनापि हेतुना तद्वर्षस्य परीक्षायामनुपस्थितस्य परीक्षार्थिनः शुल्करूपेण प्रेषितद्रव्यं न प्रत्यर्प्यते समित्या ।

## १८. उत्तरपुस्तकानि ।

(क) येषु पुस्तकेषु परीक्षार्थिन उत्तराणि लिखेयुः तानि पुस्तकानि विद्यापीठं ददाति । तेषामावरणपृष्ठानि मुद्रितानि स्युः । तेषु परीक्षार्थिना यल्लेखनीयं तच्च स लेखनारंभे सम्यक् लिखेत् ।

(ख) उत्तराणि स्वच्छानि, निश्चितकाले समाप्यानि लेख्यानि । कालान्ते एव उत्तरपुस्तकानि निरीक्षको गृह्णाति ।

## १९. शुल्कप्राप्तिसूचनम् ।

(क) साकमावेदनपत्रैः परीक्षार्थिभिः प्रेषितानां शुल्करूप्यकाणां प्राप्तिस्वीकार-लिखितपत्रं कार्यालयेन दीयते ।

(ख) साकमेवावेदनपत्रैः परीक्षार्थिनां कृते आवश्यकं सूचनापत्रमपि मुद्रितं भवेत् यस्मिन् परीक्षादानविषये परीक्षार्थिनां सर्वाण्यपि कार्याणि स्पष्टीकृतानि भवेयुः ।

## २०. निखिलभारतवर्षीयायुर्वेदविद्यापीठस्य

# पाठ्यक्रमविवरणम् ।

१. आयुर्वेदविद्यापीठस्य परीक्षासु ज्ञेयविषयाणामेव प्राधान्यं स्यात् न ग्रन्थानाम् , अन्यत्र चरकसुश्रुतवाग्भटेभ्यः । त्रयाणां पुनरेषां निर्दिष्टविषयज्ञानाय यथाप्रयोजन-मवश्यपठनीयता स्यात् आयुर्वेदविशारदाचार्यपरीक्षार्थिभिः ।

२. निर्दिष्टविषयांशज्ञानार्थं यस्य यावन्तोंऽशा अवश्यपठनीयास्तेषां दिक् अत्रैवाग्रे सविस्तरं द्रष्टव्या। तत्र तत्र निर्दिष्टा ग्रन्थांशास्तु विशारदपरीक्षार्थिभिर्न सर्वत्र सर्वे किन्तु यथाप्रयोजनं विषयज्ञानाय पठनीयाः। आचार्यपरीक्षार्थिभिस्तु सर्वेऽपि। अथ कोऽपि विषयांशो निर्दिष्टग्रन्थांशेषु न चेत् लभ्यते स ग्रन्थान्तराद्वा गुरूपदेशाद्वा ज्ञातव्यः।

३. संस्कृतज्ञानां द्विविधा परीक्षा विद्यते। सामान्यपरीक्षा, विशिष्टपरीक्षा च। तत्र सामान्यपरीक्षा—"आयुर्वेदविशारद" इति। गुरुसकाशे वर्षचतुष्टयं यथानियम-मध्ययने समापिते तत्र प्रवेशाधिकारः। विशिष्टपरीक्षा—"आयुर्वेदाचार्य" इति। यत्र विशारदपरीक्षोत्तीर्णानाम् अन्यत्र तत्सदृशपरीक्षोत्तीर्णानां वा वत्सरद्वयानन्तरमेव प्रवेशाधिकारः।*

४. अल्पसंस्कृतज्ञानाचामर्थे "भिषक्" इत्येका परीक्षा विद्यते नाम, प्रश्नाश्चात्र लघुतराः स्युः, उत्तराणि च परीक्षार्थिभिः स्वस्वप्रान्तीयभाषया लेख्यानि।

## 'भिषक्–' परीक्षाविषयाः।

१. स्वस्थवृत्तम्—भावप्रकाशस्य पूर्वखण्डः—बालप्रकरणम्, चर्य्याविधिः।

२. रोगविज्ञानम्—भावप्रकाशस्य पूर्वखण्डः—षष्ठप्रकरणम्।

मध्यमखण्डः—ज्वराधिकारात् बालरोगाधिकारं यावत्। माधवनिदानं संपूर्णम्, शार्ङ्गधरसंहितायाः पूर्वखंडे सप्तमोध्यायः।

३. शारीरशास्त्रम्—भावप्रकाशस्य पूर्वखण्डः सृष्टिप्रकरणात् गर्भप्रकरणं यावत् प्रसूतिप्रकरणं च, शार्ङ्गधरसंहितापूर्वखण्डः—पंचमषष्ठाध्यायौ।

४. द्रव्यगुणशास्त्रम्—भावप्रकाशस्य पूर्वखण्डः पंचमं प्रकरणम् मिश्रवर्गात् मान–परिभाषां यावत्। शार्ङ्गधरसंहिता—पूर्वखण्डः प्रथमतश्चतुर्थाध्यायपर्यन्तः।

५. कायचिकित्सा—भावप्रकाशस्य पूर्वखण्डः—स्नेहविधेः स्वेदविधिं यावत्। मध्यमखण्डस्य समस्तचिकित्साभागः, उत्तरखण्डस्य रसायनवाजीकरणाधिकारौ। शार्ङ्गधरसंहितायाः—समग्रो मध्यमखण्डस्य। उत्तरखण्डस्य—१—११ अध्यायाः। १३ अध्यायश्च।

६. रसशास्त्रम्—भावप्रकाशस्य पूर्वखण्डः—पंचमप्रकरणम् ( धातुमारणविशोधनं यावत् ) शार्ङ्गधरसंहिताया मध्यमखण्डः—एकादशद्वादशाध्यायौ।

---

* जयपुरीयशास्त्रिपरीक्षोत्तीर्णाः, इंद्रप्रस्थीयवनवारीलालायुर्वेदविद्यालयतो विशारदपरीक्षोत्तीर्णाः, विहारोत्कलराजकीयायुर्वेदमध्यमोत्तीर्णाः, डी० ए० व्ही० कॉलेज लाहौरतः कविराज-परीक्षोत्तीर्णाः।

७. शल्यतन्त्रम्—भावप्रकाशस्य पूर्वखण्डः—शोणितस्राव—लेपविधिः, मध्यमखण्डः—विद्रधिः, व्रणः, भग्नम्, नाडीव्रणः, भगन्दरः। शार्ङ्गधरसंहितायाः—उत्तरखण्डस्य १२ अध्यायः।

८. अगदतन्त्रम्—भावप्रकाशस्य मध्यमे खण्डे विषाधिकारः विषचिकित्सा।

## आयुर्वेदविशारदपरीक्षानिर्दिष्टविषयाणां विवरणविस्तरः।

### १. विषयः—स्वस्थवृत्तम्।

**ज्ञेयांशाः—**

दिनचर्या, रात्रिचर्या, ऋतुचर्या, आहारविधिः, वेगविधारणम्, सद्वृत्तम्। शिशुपालनविधिः।

पानीयजलविचारः, जलदूषणहेतवस्तत्प्रतिषेधश्च। जलशोधनम्, वासस्थानविचारः, वायुसञ्चारप्रयोजनादिविचारः, मलमूत्रसङ्करादीनां दूरीकरणविधयः, जनपदोद्ध्वंसकारणानि। संक्रामकरोगाः, संक्रमणप्रकारः, संक्रमणप्रतिषेधोपायाश्च।

**ग्रंथांशाः—**

चरक० सूत्र०–५।६।७।८।९ अध्यायाः
सुश्रुत० सूत्र०–६।२०।४६ अध्यायाः
सुश्रुत० उत्तर०–६४ अध्यायाः
सुश्रुत० चिकि०–२४ अध्यायाः
वाग्भट० सूत्र०–२।३।४।६।८ अध्यायाः
मन्वादिधर्मशास्त्रोक्तं स्वस्थवृत्तञ्च।
अधोलिखितग्रन्थानामन्यमञ्च—

१ "दीर्घायुसूत्रम्" (कृष्णाचार्यकृतम्) २ "स्वास्थ्यतत्त्वम्" (डॉ० हरिनाथघोषकृतम्-वंगभाषायाम्) ३ Notter and Firth's HYGIENE.

### २. विषयः—रोगविज्ञानम्।

**ज्ञेयांशाः—**

(क) प्रकृतविकृतवातादीनां स्वरूप-स्थान-लक्षणादीनि। दूष्यविज्ञानम्। व्याधिविज्ञानम्। निदानपञ्चकम्। रोगपरीक्षा। परीक्षोपायाः। मलमूत्रनाडीजिह्वानेत्रहृदयफुफ्फुसोदरादीनां स्थूलतः परीक्षाविधयः।

---

वडोदाराज्यस्य मध्यमायुर्वेददक्षिणापरीक्षोत्तीर्णाः, पीलीभीतस्य वैद्यभूषणपरीक्षोत्तीर्णाः, ग्वालियरराजकीयमध्यमायुर्वेदपरीक्षोत्तीर्णाः, आचार्यपरीक्षां दातुमर्हाः।

(ख) सामान्यरोगेषु सामान्यज्वरभेदाः, विषमज्वरभेदः ; सान्निपातिकज्वरविशेषाः, ( प्लेगादिपरिचयसहिताः ) अतिसारः, प्रवाहिकाः, ग्रहणी, अग्निमांद्यम्, अजीर्णम्, अम्लपित्तम्, विषूचिका, क्रिमिरोगाः, शूलम्, उदावर्त्तः, यकृद्रोगः, हिक्का, राजयक्ष्मा, रक्तपित्तं, छर्दिदाहतृष्णारोचकाः, मूर्च्छा, अपस्मारः, संन्यासः, वातव्याधयः, वातरक्तं, कुष्ठानि, उन्मादः, पानात्ययः, उरुस्तम्भः हृद्यन्त्ररोगाः। वृक्करोगाः, शोथः, मूत्रकृच्छ्म्, मूत्राघातः, पूयमेहः श्लीपदगलगण्डगण्डमालादयः, मेदोरोगः, मसूरिकाविस्फोटकशीतपित्तादयः, उपदंशः, फिरङ्गरोगः, ( Syphilis ) क्षुद्ररोगाः, ।

(ग) अरिष्टविज्ञानम् ।

( स्त्रीरोगेषु रजोदोषः, प्रदर—योनिव्यापदः गर्भस्रावादयश्च ।

ग्रंथांशाः—

चरक० सू०—११।१२।१७।१८।१९।२०।२४।२८ अध्यायाः

चरक० निदान०—( समग्रम् ) चरक० इन्द्रिय०—समग्रम् )

चरक० चिकित्सा० १—२० यावत् २२।२४।२७।२८।२९ अध्यायाः

सुश्रुत० सूत्र०—६।१४।१५।२१।२४।२९।३०।३१।३२।३३।३५ अध्यायाः सुश्रुत० निदान० ( समग्रम् )

सुश्रुत० उत्तर०—३५।३९।४०।४१।४२।४३।४४।४५।४६।४७।४८।४९।५०।५१ ५२।५३।५४।५५।५६।५७।५८।५९।६६। अध्यायाः

वाग्भट० ( अष्टाङ्गहृदयम् ) सूत्र० ११।१२।१३।१४ अध्यायाः—

वाग्भट० शरीर०—५।६ अ०

वाग्भट० निदान०—( समग्रम् )

वाग्भट० उत्तर०—३१।३३ अ० गुरूपदेशाश्च ।

## ३.—विषयः—शारीरशास्त्रम् ।

( शवच्छेदादिलब्धप्रत्यक्षज्ञानमूलम् )

ज्ञेयांशाः—

(क) शरीरोत्पत्तिः, शुद्धाशुद्धशुक्रार्तवलक्षणम्, शरीरज्ञानस्य प्रयोजनं शारीरपरिभाषा च ।

(ख) अस्थिविवरणे-अस्थ्नां प्रयोजनम्, उपादानं, भेदाः । अस्थिसंख्यानम् । नव्यप्राचीनमतसमन्वयः, अस्थ्नां स्थूलपरिचयः ।

(ग) संधिविवरणे सन्धिपदार्थः, सन्धिभेदः सन्धिकार्याणि । श्लेष्मधरा कला । सन्धिबन्धिन्यः, स्नायवः, सन्धीनां स्थूलपरिचयः ।

(घ) पेशीविवरणे पेशीनां स्वरूपं, भेदाः कार्याणि च कण्डराणां स्वरूपं, पेशीनां प्रभवनिवेशकार्यादिषु स्थूलपरिचयः ।

(ङ) रक्तसंवहनविवरणे-हृद्यन्त्रस्य स्थानं, स्वरूपं, क्रियाः । तत्सम्बन्धिन्यः सिरा धमन्यश्च । सिरा–धमनी–रसायनीनां सामान्यं विवरणम् । रक्तसंवहना क्रिया । शोणितलसीकयोः स्वरूपम्, लसीकाग्रन्थयः ।

(च) श्वासयन्त्रविवरणे स्वरयन्त्रतालुगलक्लोमफुफ्फुसानां विवरणम् । फुफ्फुसच्छदा कला, उरोगुहान्तस्था अन्ये विशेषाः, श्वासक्रियायाः प्रयोजनं, तत्सम्पादनप्रकारश्च ।

(छ) अन्नविपाकक्रियाविवरणे—मुखविवरं, जिह्वा, लालाग्रन्थयः, दन्तवेष्टौ, अधिजिह्वोपजिह्वके, काकलकम् । अन्नमार्गः आमाशयः, क्षुद्रान्त्राणि–( "ग्रहणी"–पदार्थः ) बृहदन्त्रम् ( "उण्डुक"—पदार्थः ) अन्त्रधरा महाकला ( वपा ) अन्नमलस्था ग्रन्थय, यकृत्, पित्ताशयः अग्न्याशयः, प्लीहा च इत्येतेषां स्थान-संस्थानकार्यादिविवरणम् । अन्नविपाकक्रियाविज्ञानम् ।

[ज] मूत्रयन्त्रादिविवरणे-वृक्कौ, मूत्रस्रोतसी, [ गवीन्यौ ] मूत्राशयः मूत्रप्रसेकः शिश्नं, पौरुषग्रन्थिः; शुक्रस्रोतसी, शुक्राधारौ, फलकोषौ, बीजकोषौ बीजस्रोतसी, गर्भाशयः, अपत्यपथश्चेत्येतेषां स्थानसंस्थानादिविज्ञानम् ।

[झ] समस्तिष्कनाडीविज्ञाने-मस्तिष्कं, तदावरणयः कलाः, अनुमस्तिष्कं, (पृष्ठवंश) सुषुम्नाकाण्डश्चेत्येषामाभ्यन्तरविशेषाः, नाडीनां स्वरूपभेदाः, क्रियावैशेष्यश्च । इडा-पिङ्गलयोः स्थानम्, नाडीग्रन्थयः, नाडीचक्राणि च ।

[ञ] इन्द्रियविभागे—नेत्रगुहा, नेत्रगोलके, दृष्टिनाडीनेत्रपेश्यः, अश्रुग्रन्थिः, अश्रुमार्गः, घ्राणेन्द्रियं, घ्राणमार्गः, श्रोत्रेन्द्रियं, श्रुतिमार्गः, श्रुतिपटहः, श्रुतिशम्बूकं, श्रुतिनाडी चेत्येषां स्थानसंस्थानकार्यविवरणम् । निखिलसंज्ञाचेष्टाविवेकश्च ।

[ट] वैद्यकोक्तं मर्मस्थानविज्ञानम् ।

**ग्रन्थांशाः—**

चरकसुश्रुतवाग्भटशारीराणामुपयोगिनोंऽशाः ।
प्रत्यक्षशारीरञ्च ( कविराजगणनाथसेनकृतम् ) ।

## ४. विषयः—द्रव्यगुणशास्त्रम् ।

( परिभाषाभेषजपरिचयादिसहितम् )

**ज्ञेयांशाः—**

(क) द्रव्य–गुण–रस–वीर्य–विपाक–प्रभावपदानामर्थः गुणवाचकानां मृदुतीक्ष्णा-दिपदानामर्थाः, रसवीर्यविपाकानां प्रकारा गुणाश्च ।

(ख) जलवर्गः, दुग्धवर्गः, घृतवर्गः, तैलवर्गः, मधुवर्गः, इक्षुवर्गः, मद्यवर्गः, शूकधान्यवर्गः, शमीधान्यवर्गः, मांसवर्गः; शाकवर्गः, पुष्पवर्गः, फलवर्गः, कन्दवर्गः, लवणवर्गः, कृतान्नवर्गः, आहारोपयोगिवर्गः ।

**ग्रन्थांशाः—**

चरकसंहिता ( सूत्रस्थानम् ) ४।२५।२६।२७ अध्यायाः सुश्रुतसंहितां ( सूत्रस्थानम् )—३७।३८।४०।४१।४२।४५।४६ अध्यायाः ।

सुश्रुतसंहिता ( चिकित्सास्थानम् )—३० अध्यायः ।

अष्टाङ्गहृदयसंहिता ( सूत्रस्थानम् ) ५।६।१०।१५ अध्यायः ।

(ग) अधोलिखितानां प्रसिद्धभेषजानां यथासम्भवं स्वरूपज्ञानं, गुणाः, प्रसिद्धपर्य्यायाश्च—

**ज्ञेयांशाः —**

औद्भिदेषु त्रिफला, त्रिमदः, चातुर्जातं, पञ्चपर्णं, दशमूलं, तृणपञ्चमूलं, अम्लवर्गः, अष्टवर्गः, पटोलं, पर्प्पटकं, तुलसीभेदाः, निर्गुण्डी, केतकी, ब्राह्मी, मण्डूकपर्णी, इक्षुः, हपुषा, गोरक्षमुण्डी, इंद्रवारुणी, मदनफलं, कोपातकी, पंचवल्कलं, क्षाराष्टकं, वासा, भार्गी, लवङ्गं, यावनी, शतपुष्पाद्वयं, कुष्ठं, शृङ्गी, ताम्बूलं, कुस्तुंबुरु, शठी, तालीसपत्रं, जीरकद्वयं, देवदारु, दुरालभा, पुनर्नवा, बलाचतुष्टयं, अश्वगंधा, विदारी, वृद्धदारुकं, भल्लातकं, त्रिवृत्, एरण्डः, दन्ती, आरग्वधः, जयपालं, दारुहरिद्रा, [ दार्वीरसाञ्जनं ] निम्बः, गुडूची, अगुरु, कुंकुमं, चन्दनद्वयं, जटामांसी, पलाण्डुः, रसोनं, कट्फलं, कर्पूरं, उशीरं, हिंगु, अशोकं, सारिवा, सप्तपर्णं, अहिफेनं, गुञ्जा, भङ्गा, वत्सनाभादिशृङ्गिकविषजातयः, विषमुष्टिः 'धत्तूरं, गुञ्जाफलानि, अपराणि च गुरूपदिष्टानि भेषजानि ।

जान्तवेषु—कस्तूरी, गोरोचना, पूतिखटाशी, पित्तपञ्चकं, मृगशृङ्गम्, अम्बरं, मुक्ता-प्रवालशंख-शुक्त्यादीनि च ।

**ग्रन्थांशाः—**

भावप्रकाशान्तर्गतो निघण्टुभागः, अथवा निघण्टुशिरोमणिः, अथवा अपरः कोऽपि निघण्टुग्रन्थः ।

पार्थिवेषु—रस-महारस-साधारणरस-लोहोपलोह-रत्नोपरत्नादीनि फेनाश्म ( संखिया ), अभ्रकं, शिलाजतु, मृद्दारशृङ्गकं सौवीराद्यञ्जनानि च ।

**ग्रथांशाः—**

रसरत्नसमुच्चयस्य पूर्वार्द्धम् आयुर्वेदप्रकाशो वा ।

(घ) परिभाषायाम्—

मागधमानं, कालिङ्गमानं परीक्षार्थिनां स्वस्वदेशप्रचलितमानं शुष्कार्द्रभेदेन द्रव्यमानं, पञ्चविधकषायकल्पना, द्रव्याणां ग्रहणीयाङ्गानि, ग्रहणक्रमः, विषोपविषशोधनं, द्रव्यसंरक्षणविधिः, क्षीरपाकविधिः, यवाग्वादिसाधनं, घृततैलासवारिष्टलेहमोदकादीनां निर्माणविधयश्च ।

ग्रंथांशाः—

भावप्रकाशीया शार्ङ्गधरीया वा परिभाषा, परि-भाषाप्रदीपः, गङ्गाधरी परिभाषा, भेषजकल्पः—इत्येषामेकतमो ग्रन्थः।

ज्ञेयांशाः—

(ङ) पदार्थविद्यादिपाश्चात्यशास्त्रे स्थूलपरिचयः।✽
(Elementary knowledge in Physics and Chemistry.)

ग्रंथांशाः—

स्वगुरूपदिष्टो ग्रन्थः।

## ५. विषयः—कायचिकित्सा।

ज्ञेयांशाः

स्नेह-स्वेद-वमन-विरेचन-रूनिहानुवासनोत्तरवस्ति-लंधनवृंहणादिविधयः (यथा-सम्भवमभ्याससहिताः) रोगविज्ञानोक्तानां सर्वेषां रोगाणां चिकित्साविधयः। रसायन-वर्जीकरणप्रयोगाश्च। स्त्रीबालरोगचिकित्सा च।

ग्रंथांसाः—

चरक० सू०—१।२।३।९।१०।१३।१४।१५।१६।२२।२३।२९।३०। अ०।
चरक० चिकि०—१—२० यावत् ।२२।२४।२७।२८।२९। अ०
चरक० कल्पस्थानम्—(समग्रम्)
चरक० सिद्धिस्थानम्—(समग्रम्)
सुश्रुत० सूत्र०—४३।४४ अ०
सुश्रुत० चिकित्सा०—४।५।७।९।१०।११।१२।१३।१४।१९।२०।२१।२६ अध्यायमारभ्य ४० अध्यायं यावत्।
सुश्रुत० उत्तर०—२६।२९।४० अध्यायतः ५९ अ० यावत्।
वाग्भट० सूत्र०—१६ अ० तो २४ अ० यावत्।
वाग्भट० चिकित्सा०—१ अध्यायतो १२ अध्यायं यावत्।
१४ अध्यायतो २२ अध्यायं यावत्।
वाग्भट० कल्पस्थानम्—(समग्रम्)
वाग्भट० उत्तर-स्थानम्—३२।३५।४० अ०

## ६ विषयः—रसशास्त्रम्।

ज्ञेयांशाः—

(क) रसशोधनप्रकाराः हिंगुलाद् रसाकृष्टिः। गन्धकशोधनम्। कृष्णभस्म वा कज्जली। रसपर्प्पटी, रससिन्दूरम्, मकरध्वजः। रसे षड्गुणगन्धकजारणम्,

✽ एष विषय ऐच्छिकः (Optional.)

रसकर्पूरम् । लोह–ताम्र–नाग–वङ्ग-सुवर्ण-रजतयशदानां शोधनमारणे । अभ्रकभेदाः, अभ्रकस्य शोधनम्, निश्चन्द्रभस्मीकरणञ्च । हरितालमनःशिलाशोधनम् । रसमाणिक्यम् । मण्डूरमाक्षिकखर्पराणां परिचयः शोधनमारणे च । अञ्जन-तुत्थ-कासीसादीनां शोधनम् । साधारणपुटपाकार्थं त्रिफलादिगणः । विशिष्टपुटपाकार्थमेरण्डादिगणः किरातादिगणश्च । सर्वलोहानां निरुत्थीकरणार्थं मित्रपञ्चकादि । मुक्ता–प्रवाल–शंख–शुक्त्यादीनां शोधनमारणे । विविधप्रकारपुटानां डमरु-दोला-वालुका-पातालादीनां प्रसिद्धयन्त्राणां च परिज्ञानम् ।

ग्रंथांशाः—

रसरत्नसमुच्चयः, रसेन्द्रचिन्तामणिः, रसेन्द्रसारसंग्रहः, वैद्यचिन्तामणिः, वसवराजीयम्–*–इत्येषामन्यतमो ग्रंथः ।

(ख) सिद्धौषधकल्पनाधिकारोक्तानां प्रसिद्धौषधानां निर्माणविधय, उपयोगाश्च ।

## ७. विषयः—शल्यतन्त्रम् ।

ज्ञेयांशाः—

सामान्यव्रणादिज्ञानम्, सद्योव्रणानां भग्नादिसहितानां विज्ञानं चिकित्सा च । व्रणालेपनबन्धनादिविधयः । यन्त्रशस्त्रविज्ञानम् । यन्त्रशस्त्रपिचुप्लोतादीनां वह्निवाष्पादिसंयोगेन शोधनविधयः ( Sterilisation Asepsis & Antisepsis ) अग्रोपहरणम् । व्रणितोपासनम् । अष्टविधशस्त्रकर्मणां स्थूलतः परिज्ञानम् । शल्योद्धरणम् । जलौकावचारणम् । अग्निकर्म क्षारकर्म्म । शोणितमोक्षणम् । क्षतजवीसर्पः ( Erysephelas ) तदुपक्रमश्च ।

ग्रंथांशाः—

चरक० शारीर०—६।७ अ०

चरक० चिकित्सा० २२।२५।२६ अ०

सुश्रुत० सूत्र०–१ अध्यायतो–१९।२२।२३।२५।२६।२७।२८।३४।३६।३९ अ०

सुश्रुत० शारीर०—५।६।७ अ०

सुश्रुत० चिकित्सा०—१।२।३।६।८।१६।१७।१८।२२।३५ अ०

वाग्भट० सूत्र०—२५ अध्यायतो ३० अध्यायं यावत् ।

वाग्भट० शारीर०—३।४ अ०

वाग्भट० चिकित्सा० १३।१८ अ०

वाग्भट० उत्तर०—८ अध्यायतो ३० अध्यायं यावत्, गुरूपदेशाश्च

* सिद्धसांप्रदायिकोऽयं ग्रन्थ आन्ध्रभाषातात्पर्यसमेतो नागपुरवास्तव्यैः वैद्यभूषण पण्डित गोवर्धनशर्म छांगाणी महाशयैः देवनागराक्षरैर्महता प्रयत्नेन प्रकाशितः । मूल्यं पञ्चरूप्यकम् ।

## ८. विषयः—अगदतन्त्रम् ।

ज्ञेयांशाः—

त्रिविधविषविज्ञानम् । सविज्ञाना सर्पदष्टचिकित्सा अलर्कविषचिकित्सा च । वृश्चिकादिदष्टचिकित्सा । अहिफेनभङ्गा—गञ्जाधुस्तूर वत्सनाभ-विषनाभ-विषमुष्टि-फेनाश्म (संखिया) तालमनःशिलादिप्रसिद्धविषजुष्टानां सविज्ञानचिकित्सा । अन्नपानरक्षा ।

ग्रंथांशाः—

चरक० चिकित्सा०—२३ अ०
सुश्रुत० कल्प०—( समग्रम् )
वाग्भट० उत्तर०—३५।३६।३७।३८ अध्याया गुरूपदेशाश्च ।

## ९. विषयः—प्रसूतितन्त्रम् धात्रीविद्यासहितम् ।

ज्ञेयांशाः—

गर्भिणीचर्या, पुंसवनविधिः, गर्भलक्षणानि, गर्भस्य मृतामृतपरीक्षा, मूढगर्भपरिज्ञानं तच्चिकित्सा च, गर्भस्रावपातयोः चिकित्सा, सूतिकासन्निपातः, अपराऽपतने दोषाः, प्रसूतायाः प्रायोभाविनो रोगाः तच्चिकित्सा च, योनिव्यापदस्तच्चिकित्सा च ।

ग्रंथांशाः—

चरकसंहितायाः शारीरे २–३–४–५–६–७–८ अध्यायाः ।
चरकसंहितायाः चिकित्सिस्थाने ३० अध्यायः ।

सुश्रुतसंहिताया निदानस्थाने अष्टमोऽध्यायः, शारीरे २–३–४–१० अध्यायाः, चिकित्सास्थाने १५।१६ अध्यायौ, उत्तरतन्त्रे ३८ अध्यायः ।

अष्टांगहृदयस्य शारीरे १–२ अध्यायौ, उत्तरतन्त्रे ३३–३४ अध्यायौ । डॉ० म्हसकरमहाशयैः संकलितं आयुर्वेदीयं प्रसूतितंत्रम् ( आयुर्वेदमहामण्डलकार्यालयतः प्रकाशितम् ) ( विशेषज्ञानोपपत्तये ) कविराजयामिनीभूषण-संगृहीतं प्रसूतितन्त्रम् ( संस्कृते ) डॉ० गोखलेलिखितं सूतिकाशास्त्रांचीं मूलतत्वें इति ( मराठी भाषायाम् ) यद्वा० डॉ० प्रसादीलाल झा० महोदयलिखितं प्रसूतिशास्त्रम् ( हिन्दीभाषायां ) यद्वा डॉ० गोखलेलिखितमनूदितं च ( हिन्दीभाषायां ) प्रसूतितन्त्रम् ।

## १० विषयः—तर्कसांख्य०—

संस्कृतभाषाज्ञानम्, न्यायसांख्यशास्त्रप्रवेशः—

ज्ञेयांशाः—

संस्कृतभाषया निबन्धलेखः । सांख्यकारिका, तर्कसंग्रहश्च ।

# आयुर्वेदाचार्यपरीक्षाविषयाः ।

## १. विषयः—व्यवहारायुर्वेदः ।

( Medical Jurisprudence )

**ज्ञेयांशाः—**

व्यवहाराधिकरणोपयोगिनां विषयाणां स्थूलपरिचयः, आशुमृतकपरीक्षाविषयकं स्थूलं ज्ञानञ्च । यथा-शवस्यास्त्रछिन्नव्रणानां मरणप्राक्परयोर्निर्णयः, शवस्य कोथक्रिया, समयनिर्णयः, कोथक्रिया कैः कारणैः त्वरैव भवति । वयोनिर्णयः कथं कार्यः । गलपाशस्य स्वकृतपरकृतनिर्णयः । दग्धस्य साध्यासाध्यत्वम् । तृतीयादिमासेषु गर्भस्य यथावद् रूपम् कीदृग् भवति । बलात्कारस्य विनिर्णयः ।

**ग्रंथांशाः—**

विशेषज्ञगुरूपदेशाः, डॉक्टर देवेन्द्रनाथरायकृतः आयुर्वेदव्यवहारः ( वंगभाषामयो ग्रंथः ) तद्विषयज्ञानाय आरोग्यसिन्धुकार्यालय ( नानकवाडा कराची ) द्वारा प्रकाशितं "न्यायवैद्यक और विषतन्त्र" इति हिन्दीपुस्तकं, चिकित्सकन्कानपुरतः प्रकाशितं व्यवहारायुर्वेद-पुस्तकं, वंगभाषायां प्रकाशितं महाराष्ट्रभाषायां च प्रकाशितं यत् समुपलभ्यते ।

## २. विषयः—रोगविज्ञानम् ।

**ज्ञेयांशाः—**

वातादितत्त्वानां शरीरसमन्वयेन सूक्ष्मविवेकः । दोषादिगतिविज्ञानम् । हेतुसूत्राणि । लिङ्गसूत्राणि । अभ्यन्तरशारीरविकृतिविज्ञानसहितं वैद्यकप्रसिद्धाप्रसिद्धानां दृश्यमान-रोगाणां विज्ञानम् । अरिष्टविज्ञानम् । जीवाणुतत्त्वविज्ञाने स्थूलपरिचयः ।

**ग्रन्थांशाः—**

चरकसुश्रुतवाग्भटानां पूर्वोक्ता एतत्प्रकरणोक्ता अध्यायाः, गुरूपदेशाश्च ।

## ३. विषयः—कौमारभृत्यम् ।

**ज्ञेयांशाः—**

प्रसवादारभ्य शिशोः पालनविधिः, स्तन्यपरीक्षा, स्तन्यशोधनवर्धनोपायः स्तन्याभावे शिशोः पथ्यविधिः, शिशूनां रोगास्तत् प्रतीकारश्च ।

**ग्रन्थांशाः—**

प्रागुपदिष्टाश्चरकसुश्रुतवाग्भटाध्यायाः । विशेषज्ञानाय संस्कृते कुमारतन्त्रं हिंदी-भाषायां कौमारभृत्यं बालचिकित्सा वा द्रष्टव्या ।

## ४. विषयः—प्रसूतितंत्रम् ।

**ज्ञेयांशाः—**

गर्भिणीचर्या, पुंसवनविधिः, गर्भलक्षणानि, गर्भस्य मृतामृतपरीक्षा, मूढगर्भ-परिज्ञानम्—तच्चिकित्सा च, गर्भस्रावपातयोः चिकित्सा, सूतिकासन्निपातः, Septicaeima अपराऽपतने दोषाः, प्रसूतायाः प्रायोभाविनो रोगास्तच्चिकित्सा च, योनिव्यापदस्तच्चिकित्सा च ।

**ग्रंथांशाः—**

विशारदपरीक्षार्थं निर्दिष्टाश्चरकसुश्रुतवाग्भटानामध्यायाः प्रसूतितन्त्रादयो गुरूप-देशाश्च ( कर्मदर्शनसहिताः ) ।

## ५. विषयः—कायचिकित्सा ।

**ज्ञेयांशाः—**

रोगपरीक्षाविधिविषयकं सम्यग्ज्ञानं हृदयफुफ्फुसादिपरीक्षासहितम्, रोगविज्ञानो-क्तानां सर्वेषां रोगाणां चिकित्सासूत्राणि, प्रयोगाश्च । रसायनवाजीकरणप्रयोगेषु विशिष्टज्ञानम् ।

**ग्रंथांशाः—**

चरकसुश्रुतवाग्भटानामेतत्प्रकरणोक्ताः विशारद-परीक्षा-निर्दिष्टाः अध्यायाः, रसतन्त्रोक्ताः स्वदेशप्रसिद्धसंग्रहोक्ताः प्रसिद्धयोगाः, गुरूपदेशाश्च ।

## ६. विषयः—रसशास्त्रम् ।

**ज्ञेयांशाः—**

रसस्य अष्टादशसंस्काराः, गन्धकजारणप्रकारः, धातूनां नानाविधजारणमारणवि-धयस्तदुत्कर्षापकर्षविचारश्च । रसशास्त्रोक्तयन्त्रमूषादिकृत्स्नपरिभाषाज्ञानम्, अभ्रकमाक्षि-करसकहरितालानां सत्वपातनविधयः । नागार्जुनोक्तत्रिविधलौहपाकविज्ञानम् । ज्वरादि-रोगेषु सिद्धिप्रदानां प्रसिद्धरसानां प्रयोगाः ।

**ग्रंथांशाः—**

रसरत्नसमुच्चयः, रसेन्द्रचिन्तामणिः, आयुर्वेदप्रकाश इत्येषामन्यतमो ग्रन्थः रसहृदयतन्त्रञ्च ।

## ७. विषयः—शल्यतंत्रम्–शालाक्यसहितम्, नवशल्यतन्त्रज्ञानोपबृंहितम् ।

**ज्ञेयांशाः—**

विशारदपरीक्षानिर्दिष्टेषु विषयेषु यथाशक्यमभ्याससहितं सम्यग्ज्ञानम् । अर्बुद-विद्रधिवृद्ध्यादीनां शस्त्रचिकित्साविधयः । चेतनाहरणोपायाः [ नव्यतंत्रोक्ताः ] ।

ग्रन्थाशाः—

चरकसुश्रुतवाग्भटानामुपयोगिनोंऽशाः विशेषज्ञगुरूपदेशाश्च (कर्मदर्शनसहिताः)।

८. विषयः—मानसरोगाधिकारः।

ज्ञेयांशाः—

मानसरोगाणां सत्त्वपरिज्ञानम्, आयुर्वेदोक्तानि दार्शनिकतत्त्वानि, संयमादिप्रयोजनम्, मानसरोगाणां चिकित्साविधयश्च।

ग्रन्थांशाः—

चरक० सूत्र०—८।११ अ०
चरक० विमान०—८ अ०
चरक० शारीर०—१।२।३।४।५ अ०
सुश्रुत० शारीर०—१ अ०

९. विषयः—चरकसंहिता।

ज्ञेयांशाः—

सम्पूर्णा संहिता।

१०. विषयः—सुश्रुतसंहिता।

ज्ञेयांशाः—

सम्पूर्णा संहिता।

११. विषयः—अष्टांगसंग्रहः।

ज्ञेयांशाः—

सम्पूर्णा संहिता।

इति आयुर्वेदाचार्यपरीक्षाविषयाः।

२३. सम्मानोपाधिवितरणम्।

आयुर्वेदिकानां नवनवाविष्काराणां विधातारो वैद्यसमाजोपकारिणां ग्रन्थानां रचयितारो महोदयाश्च निखिलभारतवर्षीयायुर्वेदविद्यापीठेन प्रशंसापत्रैः पदकैश्चोपाधिभिर्विभूषिताः सम्मानिताः करिष्यन्ते। न तु तत्संबद्धाभिः संस्थाभिः।

२४. स्थानम्।

निखिलभारतायुर्वेदविद्यापीठस्य प्रधानकार्यलयः प्रायस्तत्रैव स्थास्यति यत्र स्थायिसमितेः कार्यालयो भविष्यति अथवा वैद्यसम्मेलनेन विनिश्चिते स्थाने।

२५. नियमेषु परिवर्तनम्—

(क) निखिलभारतायुर्वेदविद्यापीठस्य कार्यकारिण्या समित्या नियमपरिवृत्तिः

कर्तुं शक्यते । सत्यवसरे आवश्यकनियमोपनियमविज्ञप्तिश्च निर्माय प्रकाश्यते । किंतु तैर्नियमादिभिः सर्वेषामेतेषां नियमानामनुकूलैर्भाव्यम् ।

(ख) निखिलभारतवैद्यसम्मेलनस्य स्थायिसमित्या—आयुर्वेदमहामण्डलेन—उपर्युक्तनियमेषु परिवर्तयितुं प्रभूयते । सम्भावस्तदा स्वीकरिष्यते यदा परिवर्तनपक्षे न्यूनतोऽपि न्यूनमर्द्धसदस्यानां सम्मतयो भवेयुः । पत्रद्वारेणापि सम्मतयो ग्रहीष्यन्ते ।

(ग) नियमानामेषां परिवर्तनप्रस्तावाः निखिलभारतवैद्यसम्मेलनेऽप्युपस्थाप्यन्ते । किन्तूपस्थितप्रतिनिधीनां तुरीयांशहस्ताक्षरैरन्वितास्तेऽवश्यं स्वीकृता भवेयुः ।

## २६. कार्यसञ्चालनम्—

(क) निखिलभारतायुर्वेदविद्यापीठस्य कार्य–निर्वाहपत्रव्यवहारादिषु साधारणतः संस्कृतं हिंदी भाषा वा व्यवहरिष्यते ।

(ख) निखिलभारतायुर्वेदविद्यापीठं स्वकीयप्रबन्धादिषु कार्येषु स्वतन्त्रमेव । केवलं विशेषावश्यकीयकार्येषु निखिलभारत–वैद्यसम्मेलनस्य स्थायिसमित्याः परामर्शाभिलाषि स्वावश्यककार्याणि वैद्यसम्मेलनकार्यालये विज्ञापयिष्यति ।

त्र्यम्बकशास्त्री आपटे,
भिषगाचार्यः ।
विद्यापीठमन्त्री

वैद्यपञ्चानन कृष्णशास्त्री कवडे,
प्रधानमन्त्री.
कार्यालयः पुण्यपत्तनम् २.

# वैद्यसम्मेलन के सभापतियों की सूची

| संख्या | नाम | सम्मेलन-स्थान | सन् |
| --- | --- | --- | --- |
| (१) | श्री कुँवर सरयूप्रसाद सिंह बहादुर बहराँव इस्टेट ( इलाहाबाद ) | नासिक | १९०७ |
| (२) | आयुर्वेदनिधि श्री पण्डित गङ्गाधर भट्ट राजवैद्य जयपुर | पनवेल | १९०८ |
| (३) | महामहोपाध्याय कविराज श्रीगणनाथ सेन सरस्वती विद्यासागर एम. ए. एल्. एम. एस्. कलकत्ता | इलाहाबाद | १९११ |
| (४) | वैद्यरत्न कविराज योगेन्द्रनाथ सेन एम. ए. विद्याभूषण, कलकत्ता | कानपुर | १९१२ |
| (५) | लेफ्टिनेंट कर्नल के. आर. कीर्तिकर आई. एम. एस्. बंबई | मथुरा | १९१३ |
| (६) | आयुर्वेद मार्तण्ड श्री पं० लक्ष्मीराम स्वामी आयुर्वेदाचार्य जयपुर, | कलकत्ता | १९१४ |
| (७) | कविराज श्रीयामिनीभूषण राय एम. ए. एम. बी. कलकत्ता | मद्रास | १९१५ |
| (८) | हिज हाइनेस महाराज श्रीराम वर्मा कोचीन | पूना | १९१६ |
| (९) | वैद्यरत्न श्री पण्डित डी. गोपालाचार्लु मद्रास | लाहौर | १९१८ |
| (१०) | कविराज श्रीउमाचरण भट्टाचार्य बनारस | देहली | १९१९ |
| (११) | महामहोपाध्याय कविराज गणनाथसेन सरस्वती विद्यासागर एम. ए. एल्. एम. एस्. कलकत्ता | इन्दौर | १९२० |
| (१२) | कविराज हाराणचन्द्र चक्रवर्ति राजवैद्य राजशाही ( बंगाल ) | बंबई | १९२१ |
| (१३) | श्री पण्डित कृष्णशास्त्री कवडे बी. ए. पूना | राजमहेन्द्री | १९२२ |

| संख्या | नाम | सम्मेलन–स्थान | सन् |
|---|---|---|---|
| (१४) | वैद्यरत्न कविराज योगेन्द्रनाथसेन एम. ए. विद्याभूषण कलकत्ता | कोलम्बो (सिलोन) | १९२३ |
| (१५) | आयुर्वेदमार्तण्ड वैद्य यादवजी त्रिकमजी आचार्य बंबई | हरद्वार | १९२५ |
| (१६) | महामना श्री पण्डित मदनमोहन मालवीय, वाइस चांसलर बनारस हिन्दू युनिवर्सिटी | जयपुर | १९२६ |
| (१७) | आयुर्वेद पञ्चानन श्री पं० जगन्नाथ-प्रसादजी शुक्ल प्रयाग | पटना | १९२७ |
| (१८) | श्री पण्डित कृष्णशास्त्री देवधर नासिक | फतेहपुर (शेखावाटी) | १९२८ |
| (१९) | केप्टन जी. श्रीनिवास मूर्ति बी. ए. बी. एल्. एम. बी. एण्ड. सी. एम. वैद्यरत्न मद्रास | नासिक | १९२९ |
| (२०) | वैद्यरत्न श्री पण्डित रामप्रसाद शर्मा राजवैद्य, पटियाला | करांची | १९३० |
| (२१) | महामहोपाध्याय कविराज गणनाथ सेन सरस्वती एम. ए. एल्. एम्. एस्. विद्यासागर, कलकत्ता | मैसोर | १९३१ |
| (२२) | आयुर्वेदमार्तण्ड वैद्य यादवजी त्रिकमजी आचार्य. बंबई | ग्वालियर | १९३२ |
| (२३) | डाक्टर लक्ष्मीपति बी. ए. एम. बी, एण्ड. सी. एम. मद्रास | बीकानेर | १९३३ |
| (२४) | भिषङ्मणि कविराज प्रतापसिंह रसायनाचार्य, सुपरिंटेंडेंट आयुर्वेदिक फार्मेसी हिंदू युनिवर्सिटी, बनारस | शिकारपुर (सिंध) | १९३: |



श्रीमान् कुंवर सरजूप्रसाद नारायणसिंहजी बहादुर बरांव स्टेट इलाहाबाद ।
अध्यक्ष-नि. भा. व. १ वैद्यसंमेलन नासिक ( सन १९०७ )।

१

श्री कुँवर सरयूप्रसाद सिंह बहादुर

बहराँव इस्टेट ( इलाहाबाद )

सभापति निखिल भारतवर्षीय

## प्रथम वैद्य सम्मेलन

नासिक

सन् १६०७ ई०

खेद है कि आपका चित्र, चरित्र और भाषण अप्राप्य है।



श्रीमान् स्व. वा. राजवैद्य पं. गङ्गाधर भट्ट जयपुर।
अध्यक्ष, नि. भा. व. २ वैद्यसंमेलन पनवेल (सन १९०८)।
अध्यापक, आयुर्वेदविभाग महाराजा संस्कृत कालेज जयपुर।



❀ श्रीहरिः ❀

## आयुर्वेदनिधीनां निखिलभारतीय द्वितीय वैद्यसंमेलनाधिवेशनाध्यक्षाणां
# स्वर्गीय-राजवैद्य-कविवर श्रीगङ्गाधरभट्ट शास्त्रिणां
## संक्षिप्तमेवोपलब्धं जीवन-चरित्रम् ।



आयुर्वेदमार्तण्ड श्रीलक्ष्मीरामस्वामिमहाभागानां जयपुरवास्तव्यानां प्रधानविद्यागुरोः श्रीश्रीकृष्णरामभट्टमहाभागस्यैककः पुत्रः पवित्रचरित्रचणः प्रशंसनीयसद्गुणगणः समधिगतसर्वजनानुरागः श्रीगङ्गाधरभट्टमहाभागः समभूत् । सोऽयं महाभागः १९०८ तमे ईसवीयवत्सरे पनवेलनगरे निखिलभारतीय वैद्यसंमेलनस्य सभापति पदमलमकरोत् ।

महाभागोऽयं द्वात्रिंशदुत्तरैकोनविंशतिशततमे विक्रमवत्सरे माघकृष्णाष्टम्यां निज-जननीजनकसुखखनिं जनिं लेभे । शैशव एवाऽयमध्ययने प्रवृत्तः स्वपितृचरणेभ्य आयुर्वेदं तेभ्यस्तेभ्यो विद्वत्तल्लजेभ्यश्च न्यायसाहित्यव्याकृत्यादिकमधिजगे, लेभे च निखिलेष्वप्येषु विषयेषु विपश्चिदपश्चिमचमत्कारिणीमभिस्पृहणीयपाण्डित्यसंपत्तिं व्युत्पत्तिम् । कवित्वशक्तिरस्य सहृदयहृदयहारिण्यासीत् । चिकित्सायामयमतिनिपुणोऽपि समये-समये भयङ्करव्याधिविनिवर्त्तने प्रत्यक्षीकृतप्रभावोऽपि निरपेक्षतया निश्चिन्ततया च नासिद्धशतत्परः । स्वभावेनायं सर्वसुहृत् स्पष्टवक्ता शुद्धहृदयश्चासीत् शिवभक्त-शिरोमणिरयं भङ्गाभक्तो बभूवाभियोगप्रियश्च । शास्त्रार्थेष्वस्य दुर्धर्षता जयपुरीय-पण्डितसमाजेन बहुशो न न साक्षात्कृता । रामानुजसंप्रदायपरमाचार्यैः प्रतिवादि-भयङ्करमठाधीश्वरैः श्रीमदनन्ताचार्यस्वामिभिः सहास्य जयपुरे शास्त्रार्थसंरम्भारम्भो बभूव विदुषामपि विस्मयोत्पादने हेतुः । अखिलभारतवर्षीयायुर्वेदसंमेलनेनास्य वैदुष्येण संतुष्यास्मै 'आयुर्वेदविद्यानिधि' रित्युपाधिरर्पितः । स्वपितृचरणप्रारब्धस्य कच्छवंश-महाकाव्यस्य शेषोंशः समपूर्यतैनेन । एतद्विरचितेषु परश्शतेषु मुक्तकपद्येषु कानिचन संप्रत्यपि सन्ति सुधीजनकण्ठभूषणायमानानि । तेषु द्वित्राणि पद्यानीहोद्दिधीर्षामो येनैतदीयं काव्यकौशलं सहृदयैः प्रत्यक्षीक्रियेत ।

तत्र प्रथमतो यमकचमत्कृतिदर्शनाय जयपुरराजगुरोर्गालवाश्रमाचार्यस्य बहुविद्या-निधेर्मल्लविद्यायामप्यप्रतिमल्लस्य श्रीहरिवल्लभमहाभागस्य वर्णनमाकर्ण्यताम्—

मल्लविद्याविदा येन दायेन कृतकीर्तिना ।
पात्यन्ते बद्धकौपिनाः कौ पीना मल्लतल्लजाः ॥

अथार्थत्रयनिदर्शनपरः श्लेषोऽप्यवलोक्यताम्—

जनताभविकैकभाजनं कृतिनं चन्द्रमसं तथाऽऽगमम् ।
स्वपदस्य रसेन निर्भरं सकलङ्कोऽपि जनो न पश्यति ॥

भूतपूर्वजयपुरपुरन्दरस्य तदानीं वर्त्तमानस्य श्रीमाधवसिंहमहाराजस्य प्रत्यन्तदेशे परोत्तं धर्मरक्षणमुपवर्णयत् प्रसादगुणपूर्णमप्येकं पद्यं निशम्यताम्—

दुष्काले क्षुभितां प्रजामवितवान्, प्रत्यन्तदेशं व्रजन्
धर्मं यश्च ररक्ष, यस्य यशसां पूरेण पूर्णं जगत् ।
श्रीमान् धर्मधुरन्धरः स च धराधीशाग्रणीर्माधवः
कल्पान्तं (?) कुलदेवतावदुदयाद्रेः शृङ्गमारोहतु ॥

सोऽयं कविकुलरत्नं विद्वदग्रणीर्वैद्यविद्याविशारदश्चाल्पल्प एव वयसि चतुःसप्तत्युत्तरैकोनविंशे विक्रमवत्सरे कैलासवाससुखमनुभवितुं त्वरितो बभूवेति निवेदयतां नः शतधा विदीर्यते हृदयम् ।

संप्रत्यस्य तनुजन्मा श्रीनरहरिशास्त्री जयपुरराजकीयसंस्कृतपाठशालायामायुर्वेदमध्यापयति संततिसुखं चानुभवतीति किमतिविस्तरेण । ❀



❀ अस्य महानुभावस्य भाषणमप्राप्यमस्ति ।



**श्रीमान् महामहोपाध्याय कविराज गणनाथ सेन शर्मा,**
प्राणाचार्य, विद्यासागर, सरस्वती, वैद्यावतंस एम्. ए. एल्. एम्. एस् कलकत्ता।
अध्यक्ष, नि. भा. व १ वैद्य संमेलन प्रयाग, ११ इन्दौर
( १९२१ ) और २१ मायसोर ( १९३० )।
प्रिन्सिपल, श्रीविश्वनाथआयुर्वेदमहाविद्यालय, कलकत्ता।



श्रीधन्वन्तरये नमः।

निखिलभारतीय वैद्य-सम्मेलनके तृतीय अधिवेशन प्रयागके सभापति,
कलकत्तेके स्वनाम धन्य चिकित्सक

कविराज

## श्रीयुत गणनाथ सेन एम्० ए० एल्० एम्० एस्०
## विद्यानिधि, कविभूषण महाशयकी

# वक्तृता।

---

## पूर्वाभास।

हमारे परम माननीय स्ववैद्य सुरगुरु-समान सभ्य महोदय गण,

इस प्रयागकी पुण्य भूमिमें भारतवर्षके नाना स्थानोंसे आये हुए आयुर्वेदोत्साही-चिकित्सक और पण्डित माहाशयोंके इस महासम्मेलनमें मेरे समान साधारण मनुष्य-का सभापतिके आसनपर बैठना बहुत ही धृष्टता का कार्य है; क्योंकि मुझसे अधिक विद्वान्, अधिक बुद्धिमान् एवं वयोवृद्ध अनेक महोदय यहाँ उपस्थित हैं। उनके सामने यथार्थ ही मैं अतितुच्छ हूँ। तथापि स्वागत कारिणी समितिके अनुरोध तथा आप महानुभावोंकी कृपादृष्टिका अवलम्बन कर अतिविनीत भावसे मैं इस पदको ग्रहण करता हूँ; और आशा करता हूँ कि, मेरे इस अपराधको आप लोग क्षमा करेंगे। मेरे विचारमें सभापति होना और सभाका दास होना दोनों एक ही बात है। सुतरां इसी विचारको हृदय में रखकर आप लोगोंकी सेवा करनेका मैं साहस करता हूँ।

आज बड़े ही आनन्दका दिन है कि समग्र भारतकी प्राचीन विद्याओंके उद्धारक महामान्य भारत सम्राटके अभिषेकोत्सवके समीप समयमें लुप्तप्राय आयुर्वेदके गौरव-की रक्षा करनेके लिये आप लोग यहाँ सम्मिलित हुए हैं।

कहनेसे हृदय विदीर्ण होता है कि, आज इस आनन्द सम्मिलन-दिनमें आयुर्वेदके गौरवरवि समग्र भारत प्रिय और श्रद्धेय चिकित्सक चूड़ामणि हमारे जेष्ठ भ्रातृ-सदृश महामहोपाध्याय कविराज विजयरत्न सेन महाशय हम लोगोंके मध्यमें नही हैं। कविराजजी अपने पुण्य कार्य्योंसे अवश्यही दिव्यलोकको प्राप्त हुए हैं। किन्तु उनके

देहान्तसे आयुर्वेदको जो हानि पहुँची है सो असीम और अकथनीय है। जो कुछ हो, स्वर्गस्थ कविराज जीके हृदयमें शेष मुहूर्त तक कलकत्तेकी नवीन स्थापित आयुर्वेद सभाकी उन्नतिके लिये जैसा उत्साह जाग रहा था उससे हमें आशा है कि, हमारे इस महासम्मिलनके ऊपर उनका शुभाशीर्वाद निरन्तरही वर्षित होता रहेगा।

## आयुर्वेदसे पृथ्वीका उपकार।

अति प्राचीन कालसे आयुर्वेदके गौरव और प्रभावके द्वाराही साक्षात् या परोक्ष भावसे समग्र पृथ्वीकी रक्षा होती आरही है। चाहे बहुत हों अथवा अल्पज्ञ हों पर आयुर्वेद चिकित्सक ही इस विद्याके प्रभावसे आजभी भारतवर्षके प्रतिनगर, प्रतिग्राम, प्रतिमहल्लोंमें प्राचीन महर्षियोंके कणामात्र ज्ञानका आश्रय लेकर असंख्य प्राणियोंको प्राणदान करते हैं। यद्यपि ज्ञानकणा गर्वित केवल पाश्चात्य विद्यामात्रसे अन्धीभूत कोई कोई मनुष्य वैद्योंका उपहास करके उन्हें "सूंठ मिरचैया वैद्य" ( Quacks ) कहते हैं। किन्तु उनके कहनेसे क्या आयुर्वेदका महत्त्व कम हो सकता है? कभी नहीं। यद्यपि आयुर्वेद कलामात्र अभी नहीं है, तथापि साक्षात् प्राणदान करके दृढ़ प्रमाणोंसे आयुर्वेदकी प्रामाणिकता दिन पर दिन बुद्धिमानोंके चित्तपर अधिकतर प्रतिभासित होती जा रही है। आयुर्वेद प्रत्यक्ष शास्त्र है; इसका फल प्रत्यक्ष प्रमाणोंसे प्रमाणित होता है। कविने यथार्थ ही कहा है—"अन्यानि शास्त्राणि विनोदमात्रं, न तेषु किञ्चिद् भुवि दृष्टमस्ति। चिकित्सित ज्योतिष तन्त्रवादाः पदे पदे प्रत्यय मावहन्ति॥" बात भी ऐसी ही है। काव्यके मधुर रससे प्यास नहीं जाती, व्याकरणकी धातु शुद्धिसे शरीरकी धातु शुद्धि नहीं होती, उसी भाँति आतुरके सामने सूखे ब्रह्मवादसे उसका दुःख दूर नहीं होता, आधिव्याधियोंके दूर करनेमें यदि कोई शास्त्र समर्थ है तो केवल चिकित्सा शास्त्र ही है। और चिकित्सा शास्त्रोंके बीचमें आयुर्वेद ही मणिके सदृश चमकता हुआ अब भी सबसे अधिक संख्यक रोगियोंकी आधिव्याधिको दूर करता है।

## आयुर्वेदसे भारतकी रक्षा।

समस्त भारतकी जन संख्याके हिसाबसे आज भी भिन्न मतावलम्बी चिकित्सकोंकी संख्या बहुत अल्प है। यदि समग्र भारतवर्षसे आयुर्वेदीय चिकित्सा विलुप्त हो जाय तो यह कभी सम्भव नहीं है कि इन थोड़ेसे भिन्न मतावलम्बी चिकित्सकोंसे भारतकी प्रजाओंकी प्राणरक्षा हो सके। अतएव यह तो अवश्य ही मानना पड़ेगा कि अभी तक भारतकी अधिकांश प्रजा महर्षियोंके ज्ञान और तपके अमृतमय फलस्वरूप इस आयुर्वेदकी कृपासे रक्षित हो रही है। परन्तु हम लोगोंको सोचना चाहिये कि, आयुर्वेदकी यथार्थ महिमा और उसके गौरवकी रक्षा करनेको हम लोग समर्थ हैं वा

नहीं ? यह विचारणीय बात है कि, आयुर्वेदकी कणामात्र महिमासे हम लोग भारतकी अधिकांश प्रजाको प्राणदान करनेमें समर्थ तो हैं ही और अब यदि उसकी पूर्व महिमाकी प्रतिष्ठा फिर हो जाय तो हम न केवल भारतका ही उपकार करेंगे अपि च समस्त पृथ्वी मण्डलका उपकार करनेमें समर्थ हो सकेंगे।

## आयुर्वेदकी प्राचीन महिमा।

वर्तमान समयमें आयुर्वेदकी प्राचीन महिमाका स्मरण करनेसे भी हम लोगोंका बहुत कुछ उपकार है, परन्तु दुःख और लज्जाका विषय यह है कि हम लोग हाथ पर हाथ धरे एक दूसरेका मुँह देखते हुए उन प्राचीन महर्षियोंकी अयोग्य सन्तान बन रहे हैं। सामान्य रीतिसे वनमें वास करके स्वच्छन्दजात तृणगुल्मादिसे हमारे पूर्व पुरुष जिन जिन असाध्य वस्तुओंका साधन करके तालपत्रों एवं भूर्जपत्रों पर लिखित पोथियोंसे जितना लाभ संसारको पहुँचाते थे और दुर्ज्ञेय तत्त्वोंकी मीमांसा बातकी बातमें कर लेते थे, उतना सुन्दर सुसज्जित आलमारियोंमें भरी हुई शीशियोंकी बहुमूल्य औषधियोंसे और स्टेथसकोप (Stethescope) माइक्रसकोप (Microscope) आदि असंख्य वैज्ञानिक यन्त्रोंसे भी संसारका वह उपकार और तत्त्वोंकी वैसी मीमांसा करनेमें हम समर्थ नहीं होते। यह हमारी अत्युक्ति नहीं है, क्योंकि अरिष्ट लक्षणादिके जो कुछ अद्भुत ज्ञान और विधि अब तक भी आयुर्वेदमें पाये जाते हैं, उनके फलको देखकर समग्र जगत् विस्मित होता है।

## पाश्चात्य विद्वानोंकी सम्मति।

आयुर्वेदकी उज्ज्वल प्रभाकी कणामात्रको देखकर जगत्के लोगोंके चित्तमें कैसा विस्मय उत्पन्न होता है, उसका थोड़ा परिचय अपने वक्तव्यकी अवतरणिकामें देता हूँ। भागलपुर डिविजनके भूतपूर्व कमिश्नर (प्रसिद्ध राजपुरुष) श्रीयुत स्काइन साहबने लिखा है कि, "It is wonderful to note the comparatively advanced views held by the Sages of your country and how completely they had anticipated discoveries which we mondours flatter ourselves are due to the enlightenment of this age." अर्थात् "यह बहुत ही आश्चर्यका विषय है कि भारतके महर्षि लोग अनेक शताब्दियोंके पूर्व ही जिन विषयोंका पूर्णज्ञान प्राप्त कर चुके थे, वर्त्तमान समयमें पाश्चात्य देशवासी पण्डित लोग उन्हीं विषयोंमें उतना ही ज्ञान प्राप्त करके अपनेको नवीन ज्ञानके आविष्कर्त्ता समझ कर घमण्ड करते हैं।"

## डाक्टरीमें आयुर्वेदीय औषधियोंका बहुल-प्रचार।

फिलाडेलफिया—अमेरिकाके सुप्रसिद्ध बहुदर्शी डाक्टर जार्ज क्लर्क एम. ए. एम. डी. महाशय ने लिखा है।

"As I go over each fasciculus I arrive at one conclusion and that is this :—if the Physicians of ths present day would drop from the Pharmacopia all the Modern Drugs and Chemicals, and treat their petients according to the method of Charaka, there would be less work for the undertakers, and fewer chronic invalids in the world." अर्थात् "मैं चरकके प्रत्येक अध्यायको पढ़ता हुआ एक ही सिद्धान्तमें उपनीत होता हूँ। वह सिद्धान्त यह है कि यदि वर्त्तमान समयके चिकित्सकगण समग्र फर्माकोपिया तथा नवाविष्कृत औषधियोंका परित्याग कर केवल चरकोक्त चिकित्सा प्रणालीका ही अवलम्बन करें तो अकाल-मृत्युकी संख्या बहुत घट जायगी और अनेक प्रकारके रोगोंसे पीडित जीर्ण रोगी बहुत कम देखनेमें आवेंगे।" इसी प्रकार आयुर्वेदके विषयमें डाक्टर हर्नलि, डाक्टर वाइज् आदि गुणग्राही पाश्चात्य महानुभावोंके मत बहुत मिलते हैं, नमूनेके तौर पर केवल दो ही मत मैंने उद्धृत किये हैं। फिर यह भी देखिये कि वृटिश-फर्म्माकोपियाके परिशिष्टमें वर्त्तमान समय हमारे आयुर्वेद हीसे यवतिक्ताक ( कालमेघ वंग० ) सप्तपर्ण, अर्कमूल, वासा ( अरूसा ) विडङ्ग, विल्व, दारुहरिद्रा, धत्तूर, हरीतकी, गन्धतृण कुटकी, गुडूची ( गिलोय ) त्रिवृत ( निशोत ), अनन्तमूल आदि कितनी ही औषधी गृहीत हुई हैं। मकरध्वजकी महिमा भी ऐसी है कि, इस समय कलकत्ता मेडिकल कालेजके भूतपूर्व प्रिन्सिपल और डाइरेक्टर जनरल ( अब मेडिकल सर्विस ) डॉक्टरोंके सम्राट स्वरूप स्वयं डाक्टर ल्युकिस साहब मकरध्वज प्रयोग करते हैं। मैं इस बातका साक्षी हूँ। क्योंकि श्रद्धास्पद डाक्टर ल्युकिस डाक्टरीमें मेरे अध्यापक थे। इसी तरह मधुमेहमें शिलाजतुका प्रयोग करनेका उपदेश भी डाक्टर ल्युकिस साहबने मेडिकल कालिजके "लेक्चर रूम" में दिया था। इस प्रकार आयुर्वेदकी महिमा केवल अपने प्रभावसे दिनोंदिन समुद्र पार तक उद्भासित होरही है, और हमलोग जैसे तैसे पेट पोषनेके अतिरिक्त आयुर्वेदकी उन्नतिके लिये कुछ भी प्रयत्न नहीं करते। इसी लिये हमने यह बात कही है कि, यथार्थही आयुर्वेदाचार्य्य महर्षियोंके हमलोग सर्वथा अयोग्य उत्तराधिकारी हैं। परन्तु बहुतही हर्षकी बात है कि इस समय आयुर्वेदकी उन्नतिके लिये भारतके सब प्रान्तोंमें अपूर्व जागृति दिखाई देरही है और आयुर्वेदीय चिकित्सकोंकी अपने शास्त्र पर श्रद्धा एक नयी रीतिसे बढ़ती जारही है। विदेशीय विद्वानोंकी आयुर्वेद पर श्रद्धा देख कर आयुर्वेदीय चिकित्सा पर भारतवासी अब स्वयं विशेष प्रेम करने लगे हैं। हमारी समझमें ईश्वरका यह विशेष अनुग्रह और प्रणोदना है, इसीसे देश देश और प्रान्त प्रान्तमें आयुर्वेदकी उन्नतिके लिये सभा समितियों द्वारा प्रयत्न हो रहा है। आजका यह "वैद्य-सम्मेलन" भी इसी जागृतिका—इसी प्रयत्नका—फल है।

## भारतवर्षीय ज्ञानका प्रधानत्व और सब विज्ञानोंका पितृ स्वरूपत्व।

हम भारतवासी हैं, हमारे लिये "प्राचीन भारत" इन शब्दोंमें क्याही अपूर्व आह्लादिनी शक्ति भरी हुई है कि, इनके उच्चारण मात्रसे ही हमारे चित्तमें प्राचीन कालकी कितनीही अपूर्व स्मृतियाँ उद्भासितहो आती हैं। इतिहासकी सृष्टिके भी घोर अन्धकारमें हमारी दृष्टि जहाँ तक पहुँचती है, वहाँ भारतके छिन्न भिन्न विध्वस्त पूर्व गौरवके साची स्वरूप कितने ही मणि माणिक्य अवभी प्रकाशमान होरहे हैं। केवल हमारीही नहीं प्रत्युत पृथ्वीके सर्व देशवासियोंकी दृष्टिमें दिनपर दिन भारतका गौरव प्रतिभात होता जारहा है। कोई दिन ऐसा था कि, ग्रीकके अधिवासियोंको पाश्चात्य पण्डितोंने जगद्गुरु और आदि सभ्य होनेका गौरव दिया था; क्याही आनन्दका विषय है कि आज उन मिसर और ग्रीक देशवासियोके भी यथार्थ गुरु ये वृद्ध भारतवासी ही थे, इस वातको पाश्चात्य पण्डितगण भी भलीभाँति मानने लगें हैं। वड़े वड़े भाषातत्त्व विद् स्वीकार कर रहे हैं कि प्राचीन और अर्वाचीन समस्त भाषाओंकी मूल भाषा देववाणी (संस्कृत) ही है—इस देववाणीके सदृश और सुव्यवस्थित तथा विज्ञानसम्मत भाषा दूसरी नहीं है। दर्शन शास्त्रोंमें हमारे भारतवासियोंके चरम दर्शन उत्तर मीमांसाकी मीमांसाको आज समस्त पृथ्वी मण्डल श्रेष्ठ ज्ञान कह कर मुक्त कण्ठसे स्वीकार करता है। चिकित्साशास्त्रमें भारतीय चिकित्साविज्ञान सम्पूर्ण चिकित्सा विज्ञानोंका आदि मूल वा पितृ स्वरूप है, यह भी अव ऐतिहासिक लोग स्वीकार कर रहे हैं। परन्तु भारतीय चिकित्सा-विद्या ( आयुर्वेद ) के मूल सूत्रोंसे किस प्रकार अन्य चिकित्सा विज्ञानोंकी सृष्टि हुई है, और अब तक आयुर्वेदके कितने ही मूल सूत्रोंके न जाननेसे दूसरे चिकित्सा विज्ञानोंमें जो कितनी ही त्रुटियाँ हैं, इन वातों की गम्भीर गवेषणा ऐतिहासिक लोगोंको नहीं प्रत्युत वैद्य लोगोंको ही करनी परमावश्यक है।

## आयुर्वेद शब्दका अर्थ और भेदक लक्षण।

आयुर्वेद शब्दका अर्थ चिकित्सा शास्त्र है, इसे केवल भारतका ही चिकित्सा शास्त्र नहीं अपिच सम्पूर्ण पृथ्वीका चिकित्सा शास्त्र कहना चाहिये; क्योंकि इस शास्त्र के अनुसार चिकित्सा करनेसे मनुष्य केवल भारतवासियोंको ही नहीं वरञ्च समग्र जगत्को भी वहुत ही लाभ पहुँचा सकता है। संक्षेपतः आयुर्वेदका लक्षण इस प्रकार है—

"आयुर्हिताहितं व्याधेर्निदानं शमनं तथा।
विद्यते यत्र विद्वद्भिरायुर्वेदः स उच्यते॥"

अर्थात् आयुका हित और अहित रोगोंके कारण और चिकित्सा, यह सब विषय जिस शास्त्रमें निर्णीत हैं उसी शास्त्रका नाम आयुर्वेद है। इतना ही पर्य्याप्त नहीं क्योंकि ये

विषय तो पृथ्वीके सभी चिकित्सा शास्त्रोंमें वर्णित हैं। इसलिये आयुर्वेदका भेदक लक्षण ( समानासमान जातीय व्यावर्तक लक्षण ) यह भी और कहा गया है:—

"अनेन पुरुषो यस्मात् आयुर्विन्दति वेत्ति च।
तस्मान्मुनिवरैरेष आयुर्वेदः प्रकीर्तितः॥"

अर्थात् इस शास्त्रसे मनुष्यदीर्घ आयु लाभ करता है, और आयुको जानता है, इसीलिये इसका नाम आयुर्वेद है। इसका अभिप्राय यह है कि, पृथ्वीमें आयुर्वेदके अतिरिक्त जितने चिकित्सा शास्त्र हैं, उनमें दीर्घजीवन लाभके अपूर्व उपाय रसायनादि और आयु जाननेके उपाय अरिष्ट लक्षणादि कहीं भी उपदिष्ट नहीं हैं, इससे सूक्ष्मदर्शियोंके चित्तमें स्पष्ट प्रतीत होता है कि आयुर्वेदका प्रतिपाद्य विषय सब चिकित्सा शास्त्रोंसे अधिक और गौरवान्वित है। आयुर्वेदीय चिकित्साका प्रयोजन केवल रोगविनाश ही नहीं है, प्रत्युत निरोग शरीरमें दीर्घजीवन लाभ करना आयुर्वेद-कल्पतरुका अमृतमय फल है। देखिये, अब भी ऋतुहरीतकी, च्यवनप्राश, अमृत भल्लातक, मकरध्वज, वसन्त कुसुमाकर आदि महौषधियोंके प्रभावसे वृद्धावस्थामें यौवन धारण करके कितने ही मनुष्य आयुर्वेदके इस गौरवके साक्षी हो गये हैं, और अरिष्ट लक्षण देखकर अब भी कितने ही वैद्य रोगीकी अवश्य मृत्यु बतलाकर भिन्नमतावलम्बी चिकित्सकोंको विस्मित करते हैं।

## आयुर्वेदकी विशालता।

आयुर्वेद शब्दका व्युत्पत्तिगत अर्थ और भी विशाल है। आयुर्वेद केवल मनुष्योंका ही चिकित्सा शास्त्र है ऐसा नहीं—तरुलता, पशु-पक्षी प्रभृतिकी चिकित्सा भी आयुर्वेदकी अङ्गीभूत है। इसलिये वृक्षायुर्वेद, गजायुर्वेद, अश्वायुर्वेद आदि आयुर्वेदके नाना अङ्ग कहे गये हैं। यद्यपि हमारे भारतवासियोंकी अधन्यता और दुर्भाग्यसे उन अङ्गोंके बड़े बड़े ग्रन्थ विलुप्त होगये तथापि अग्निपुराण, शालिहोत्र आदि ग्रन्थोंमें उन अङ्गोंका अच्छा परिचय मिलता है। आयुर्वेदके आचार्य्य लोग तरुलतादिको स्थावर प्राणी कहते हैं, कैसी आनन्दकी बात है कि, आज हमारे भारतवासी प्रसिद्धनामा वैज्ञानिक डाक्टर श्रीजगदीशचन्द्र वसु महाशयने अपनी वैज्ञानिक परीक्षाओंके द्वारा तरुलतादिको स्थावर प्राणी सर्वथा सिद्ध करके महर्षियोंके विज्ञानकी महिमा दिखलायी है। परन्तु वर्तमान समयमें आयुर्वेद केवल मनुष्योंका ही चिकित्सा शास्त्र इस संकीर्ण अर्थमें प्रसिद्ध है, और इसी अर्थको आज मैं अपने वक्तव्यमें कह रहा हूँ।

आयुर्वेदकी उत्पत्ति कब हुई थी इस प्रश्नका उत्तर सुश्रुतमें इस प्रकार मिलता है:—

## आयुर्वेदका अनादित्व।

"इहखल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्वयम्भूः" इत्यादि। अर्थात् "आयुर्वेद नामक अथर्ववेदके

इस लक्षश्लोकमय उपाङ्गको स्वयम्भू ब्रह्माने प्रजा सृष्टिके प्रथमही बनाया था।" वस्तुतः वेदको यदि अनादि और नित्य स्वीकार किया जाय तो आयुर्वेदको भी नित्य और अनादि अवश्य स्वीकार करना पड़ेगा। महर्षि चरक भी कहते हैं कि—"भिषजा-पृष्टेनैव चतुर्णां वेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या।" (च. चि. ३० अ.) भगवान् वेदव्यास अपने "चरण व्यूह" नामक ग्रन्थमें कहते हैं—

"सर्व्वेषामेव वेदानामुपवेदा भवन्ति ऋग्वेदस्य आयुर्व्वेद उपवेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदः, अथर्ववेदस्य शस्त्रशास्त्राणि।" इन बातोंमें यद्यपि जरा कुछ विरोध है तथापिसिद्धान्त यह है कि, चारों वेदोंमें ही आयुर्वेदके विषय सूक्ष्मरूपसे पाये जाते हैं। अतएव ब्रह्मवैवर्त्त पुराणमें स्पष्ट लिखा है—" ऋग्यजुः सामाथर्वाख्यान् दृष्ट्वावेदान्प्रजापतिः। विचिन्त्य तेषामर्थं वै आयुर्व्वेदं चकार सः।" सभ्य महाशयोंकी धैर्य्य च्युतिके भयसे वेदके अधिक मन्त्र यहाँ नहीं कहेंगे तथापि दिग्दर्शन मात्रके लिये कई एक मन्त्र सुनाना उचित जान पड़ता है।

## वेदोंमें आयुर्वेद।

"यद यातं दिवोदासाय वर्त्तिर्भरद्वाजायाश्विना हयन्ता।
रेव दुवाह सचनो रथोवांवृपभश्च शिंशुमारश्च युक्ता॥" (ऋ.मं.१सू.१६)

इस मन्त्रमें आयुर्वेदके आचार्य्य दिवोदास और भरद्वाजके नाम अश्विनी कुमारोंके साथ निर्दिष्ट हैं और इसी मन्त्रसे यह भी प्रतिपन्न होता है कि ऋग्वेदके इस मन्त्रके प्रादुर्भावके समय दिवोदास और भरद्वाज सुपरिचित थे। (यद्यपि इससे यह शङ्का हो सकती है कि, तब ऋग्वेद अनादि कैसे? इस प्रश्नकी मीमांसा करनेका यह स्थल नहीं है, क्योंकि वेदमें वशिष्ठ और विश्वामित्रादिके भी नाम मिलते हैं तथापि यहाँ हमें आयुर्वेदकी प्राचीनता प्रतिपन्न करना ही प्रयोजन है) और देखिये

"युवं च्यवानं जरसोऽमुमुक्तं।" (ऋ. मं. ७ सू. ७७)

अश्विनी कुमारोंने जराजीर्ण च्यवन ऋषिको पुनर्यौवन प्रदान किया था। यह कथा वर्त्तमान आयुर्वेदमें भी प्रसिद्ध है।

"सद्योजङ्घा मायसीं विश्पलायै
धने हितं सर्त्त वै प्रत्य धत्ताम्।"

अर्थात् खेल नामक राजाके संग्राममें विश्पला नाम्नी एक स्त्रीका पैर कट कर गिर गया था और अश्विनीकुमारोंने उसको कृत्रिम (बनावटी) पैर चढ़ाकर ज्योंका त्यों कर दिया था। "यस्यौषधिः प्रसरताङ्गमङ्ग परुस्परु" (शु. य. १२ अ.) इस मंत्रमें शरीरके एक अंगमें औषध प्रयोगसे और और अङ्गोंका रोग कैसे आरोग्य होता था' इसका वृत्तान्त बीजरूपसे वर्णित है। "दधि मधु घृतं सनीय प्राशयति जातरूपम्" दध्नः सौम्य मथ्यमानस्ययोऽणिमा स ऊर्द्ध्वं समुदीषति तत्सर्पि र्भवति, एवमेव खलु

समाधिमात्रसहायाः कारुण्यरसपरिप्लुतमानसाः तपःप्रभावाधिगतदिव्यचक्षुरवधारिताशेषजगत्सारासारविशेषाः प्रत्यक्षमिव परोक्षमप्यधिमन्तुमीशास्तत्रभवन्तो महर्षयः— 'आतुराणामवस्थान्तरेषु स्थानविशेषेषु च बहुविधा भवन्ति विकृतयो न ता विशेषेण परिच्छेत्तुं शक्यन्ते, तासामेकैकस्या अपि वयोबलदेशकालादिविशेषै रूपान्तरत्वेनासंख्येयत्वात्' इति सम्यगालोच्य सर्वेऽपि रुग्विशेषा एष्ववान्तर्भवन्ति इति च सम्यगनुभूय वातपित्तकफत्रैविध्येन सञ्चिक्षिपुः, तत्तद्विशेषान् परिज्ञातुं च मार्गं दर्शयामासुः।

यद्यपि शब्दस्पर्शरूपरसगन्धादिविशेषैरेव सिद्धो व्यवहारो लोकस्य, न हि तावचन्त्रीस्वनरूपशब्दविशेषाकाङ्क्षायां शब्दत्वसामान्यात् भेरीशब्दो मानसमभिहन्तुमीष्टे, प्रत्युत ग्लानिं जनयति। न वा कृष्णमृद्रूपपृथिवीविशेषापेक्षायां पृथिवीत्वसामान्येन शिकतालोष्टादि प्रयुज्यमानं कार्यं साधयति। न वा मधुरात्मकरसविशेषापेक्षायां रसत्वसामान्यादम्लं प्रयुज्यमानं प्रीतिमुत्पादयति। न वा व्यायामरूपक्रियास्थाने क्रियात्वसामान्यादासना वा सुखमुत्पादयति। इति सामान्योपदेशमपहाय विशेषोपदेश एव कर्तुं न्याय्यः। तथा तत्तद्विशेषाणामानन्त्येन एकस्यापि द्रव्यविशेषस्य वक्तुमशक्यतया आचार्याणां सामान्योपदेशेऽभिरुचिः। यथैकैव पृथिवी—कृष्णपीतश्वेतादिवर्णभेदेन, शर्करावालुकाश्मलोष्टकाष्ठ घटपटकटादि स्वरूप भेदेन, तत्रापि देशकालादिभेदेन, अचिरचिरजन्मादिभेदेन, पुनर्जलविशेषसेचनासेचनभेदेन, सूर्यतापप्राप्त्यप्राप्तिभेदेन, पुनश्च वातविशेषाघाताना‍घादिभेदेन तत्तद्विशेषगुणवत्त्वाद् वक्तुमशक्या किं पुनरितरे। यथाह चक्रपाणिः—

न तावद्भेजादीनामशेषविशेषः प्रत्यक्षज्ञेयः सर्वपदार्थानां प्रत्यक्षाविषयत्वात्। अन्वयव्यतिरेकाभ्यां तु सर्वपदार्थावधारणं दुष्करमेव, यत एकमेव मधु स्वरूपेण जीवयति मारयति चोष्णम्, समघृतञ्च कफप्रकृतेर्हितमहितं वातप्रकृतेः, आनूपे सात्म्यमसात्म्यं मरौ शीते सेव्यमसेव्यं ग्रीष्मे, हितमवृद्धे वृद्धे चाहितम्, अल्पं गुणकरम् आबाधकरमत्युपयुक्तम्, आमताङ्गतमुदरे उपक्रमविरोधित्वादतिविभ्रमकरं काकमाचीयुक्तं च, माषकं पक्कं निकुचेन सहोपयुक्तं मरणाय तथा बलवीर्य्यवर्णतेजउपघाताय भवतीत्येवमादि, इति।

एवमेव दोषा अपि यथा—वायू रौक्ष्येण कुपितो हृदि यं व्याधिमुपजनयति, आमाशये ततोऽन्यम्, यकृति इतरम्, प्लीहि परम्, अन्त्रेऽन्यम्। एवं पक्वाशये वस्तौ नेत्रवर्त्मनि दृष्टौ पक्ष्मसु कर्णादिषु चान्यान्यमेव व्याधिं जनयति। तथैव लाघवेन शैत्येन खरत्वेन सौक्ष्म्येण चलत्वेन सौषिर्य्यादिना, पुना रौक्ष्यलाघवाभ्याम्, द्वित्रिचतुरादिसंमिलितगुणैर्वा तत्तत्स्थानेषु तत्तद्विशिष्टमेव व्याधिं जनयति। एवं पित्तकफेऽप्यूह्यम्। तथा च

स एव कुपितो दोषः समुत्थान विशेषतः।
स्थानान्तराणि च प्राप्य विकारान् कुरुते बहून्॥ इत्युक्तम्।

अतस्त्रिविधशिष्यबुद्धिहितकरः सामान्योपदेशस्तत्तद्विशेषविज्ञानाय दिग्दर्शनोपदेशश्च न्याय्य एव। तथा च भगवान् पुनर्वसुस्त्रिशोथीये—

साध्याश्चैवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः ।
मृदुदारुणभेदेन ते भवन्ति चतुर्विधाः ॥
त एवापरिसंख्येया भिद्यमाना भवन्ति हि ।
रुजावर्णसमुत्थानस्थानसंस्थाननामभिः ॥
व्यवस्था करणं तेषां यथा स्थूलेषु संग्रहः ।
तथा प्रकृतिसामान्यं विकारेषूपदिश्यते ॥ इति ।

तदेवं दोषाणां हेतुलिङ्गौषधैर्व्याख्यातैः सर्वव्याधीनामपि हेतुलिङ्गौषधानि प्रायो व्याख्यातानि भवन्ति सामान्यतः, अन्यत्र विकृतिविषमसमवायात् । तत्र दोषाणां वातादीनामुक्तद्रव्यगुणकर्मणां समानगुणैः समानगुणभूयिष्ठैर्वा कालार्थकर्मभिरविधिसेवितैः सञ्चयप्रकोपादिलक्षणा वृद्धिर्भवति रोगहेतुः । ततः प्रकुपिता दोषाः प्रकोपणानुरूपं स्थानसंश्रयादिकं लब्ध्वा यथाबलं स्वानि लिङ्गानि वितन्वते । यदुक्तम्—

यथाबलं यथास्वं च दोषा वृद्धा वितन्वते ।
रूपाणि जहति क्षीणाः समाः स्वं कर्म कुर्वते ॥ इति ।

तेषामेव च विपरीतैर्विपरीतगुणभूयिष्ठैर्वा औषधान्नविहारदेशकालादिभिर्यथाविधिसेवितैरुपशाम्यति तत्प्रकोपस्तत्प्रकोपजो व्याधिश्च । यदुक्तम्—

विपरीतगुणैर्देशमात्राकालोपपादितैः ।
भेषजैर्विनिवर्तन्ते विकाराः साध्यसंमताः ॥ इति

तत्र सामान्यतो वातादिप्रकोपणप्रशमनानि—

उष्णेन युक्ता रूक्षाद्या वायोः कुर्वन्ति सञ्चयम् ।
शीतेनकोपमुष्णेन शमं स्निग्धादयो गुणाः ॥
शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते ।
उष्णेन कोपं मन्दाद्याः शमं शीतोपसंहिताः ॥
शीतेन युक्ताः स्नेहाद्याः कुर्वते श्लेष्मणश्चयम् ।
उष्णेन कोपमुष्णेन शमं रूक्षादयो गुणाः ॥

इति वाग्भटोक्तदिशा ज्ञेयानि । तथा सर्वरोगनिदाने—'अथ तिक्तकटुकषाये' त्याद्यारभ्य 'आहारपरिणामान्तेषु च वायुः प्रकोपमापद्यते' इत्यनेन वातस्य, 'कट्वम्लुलवणे' त्यादिना 'विदाहकालेषु च पित्त' मित्यन्तेन पित्तस्य, 'मधुराम्लुलवणे' त्यादिना 'भुक्तमात्रेषु च श्लेष्मा' इत्यन्तेन श्लेष्मणश्च विशेषतः प्रकोपणानि प्रोक्तानि । तथा 'सर्वेषां तु मिश्रीभावात् तथानशनात्यशनादिना प्रसूतानां च मिथ्योपचारात् सन्निपात' इत्यन्तेन सन्निपातस्य प्रकोपणान्यपि पृथगुक्तानि ।

एवं दोषाणां प्रकोपणानि प्रदर्शयता सर्वरोगाणामेव प्रकोपणान्यभिहितानि । तथा च श्लोकः—

प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ।
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ इति

लिङ्गानि च वातादीनां प्रदर्शितान्येव । औषधानि च—दोषोपक्रमणीये संग्रहस्यैकविंशतितमेऽध्याये—'वातस्योपक्रमः स्नेहः स्वेद' इत्यारभ्य 'स्त्रीसम्पर्कवर्ज्यश्च हैमन्तो विधि' रिति पर्यन्तं वातोपक्रमविशेषः, तथा 'पित्तस्य सर्पिष्पान' मित्यादिना दिवास्वप्नवर्ज्यश्च ग्रैष्मो विधि' रित्यन्तेन पित्तस्य विशेषोपक्रमः, तथा 'श्लेष्मणः पुनर्विधिविहितानि' इत्यादिना 'सुखार्थमेव वासन्तिको विधि' रित्यन्तेन श्लेष्मण उपक्रमविशेषः प्रदर्शितः । तथा तत्रैव—

उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्त्तितः ।
संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥
ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते ।
मरुतो योगवाहित्वात् कफपित्ते तु शारदः ॥
योज्याः षट्वम्लमधुरा वायौ क्रुद्धे रसाः क्रमात् ।
पित्ते तिक्तस्ततः स्वादुः कषायश्च रसो हितः ॥
कटुकः प्राक् ततस्तिक्तः कषायोन्तः कफामये । इति

यथा चासंख्येयानामपि व्याधीनां संख्येयवातादिमयत्वेऽपि तत्संसर्गविकल्पविस्तरस्य तथा तदंशांशविकल्पविस्तरस्य चानन्त्यात् पुनरेकस्याप्यानन्त्यं सम्भवति, तथैव प्रकोपणप्रशमनद्रव्याणां स्वरूपतोऽप्यसंख्येयानां संख्येयरसादिमयत्वेऽपि तद्भेदानां रसानुरसादिकल्पनया तारतम्यादिकल्पनया च पुनरप्यानन्त्यं भवतीति दिक् ।

वातादिभेदाश्च द्विषष्टिराकरेषु प्रदर्शिता एव । तेषामपि रसादिदूष्यसंसर्गात् कोष्ठशिरास्नाय्वादिविविधमार्गाश्रयणात् तारतम्याच्च पुनरप्यानन्त्यं सम्भवति । तथा चोक्तम्—

संसर्गाद्रसरुधिरादिभिस्तथैषां दोषांस्तु क्षयसमताविवृद्धिभेदैः ।
आनन्त्यं तरतमयोगतश्च यातान् जानीयादवहितमानसो यथास्वम् ॥ इति

तत्र रसादि सप्तधातूनामेव द्वित्र्यादिसंसर्गादष्टाविंशत्यधिकशतभेदा भवन्ति, तेषां पुनः परस्परसंसर्गादानन्त्यमेव । तथा च सिद्धभेषजमणिमालायाम् ।

वसुद्वयक्षमाभिदा रसादिसप्तधातुजाः ।
विदूषयन्त्यहो मला द्विषष्टिधा द्विषष्टिधा ॥ इति

एवं दोषभेदानामानन्त्यप्रकारदिक् प्रदर्शिता भवति । एवमेव त्रिषष्टी रसभेदाः चरके आत्रेयभद्रकाप्यीये सुश्रुते चोत्तरतन्त्रीयरसभेदे विकल्पाध्याये वर्णितास्तथा सिद्धभेषजमणिमालायां विस्तरतः सोदाहरणा उदाहृताः श्रीगुरुचरणैस्तेऽपि पुनरनन्ता भवन्ति । यथोक्तं वाग्भटे—

ते रसानुरसतो रसभेदास्तारतम्यपरिकल्पनया च ।
सम्भवन्ति गणनां समतीता दोषभेषजवशादुपयोज्याः ॥ इति

एवं यः प्रतिरोगं व्याधिनिश्चये दोषविकल्पान् भेषजनिश्चये च रसविकल्पान् यथार्थं व्यवहरति, स दारुणानपि विकारान् गन्धर्वपुरवदाशु नाशं नयति, जीविताभिसरश्चोच्यते । तथा चरकेऽपि ।

यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित्।
न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु ॥ इति

यद्यपि यावन्ति द्रव्याणि तावन्त एव तेषां स्वादविशेषा गुणविशेषाश्च, नह्येकमपि द्रव्यं स्वादेन गुणेन वा द्रव्यान्तरे सर्वाकारं समानम्, तथा हि—मधुराणि खलु गुडाक्षोटद्राक्षापरूषमोचचोचादीनि, अम्लानि दाड़िमामलकतिन्तिड़िकादीनि, न परस्परं समस्वादगुणानि, किन्तु विलक्षणस्वादान्युपलभ्यन्तेऽनुभवकुशलैः। तथापि भूतोत्कर्षापकर्षकृतोऽयमणीयान् भेदो न विवक्ष्यते, कार्यकाले प्रायः समानफलदर्शनात्। तथा वाग्भटेनाप्येवमेव समाहितम्।

मधुरस्कन्धनिर्दिष्टघृततैलगुणादिषु ।
गुणस्वादादिभेदेन रसषट्कं न युज्यते ॥
अस्तु भेदादसंख्यत्वमैक्यं वा स्वादलक्षणात्।
भूतोत्कर्षापकर्षेण भेदो योऽल्पेन कल्प्यते ॥
सङ्कीर्णत्वात् फले चासौ तुल्यत्वान्न विवक्ष्यते।
गुर्वादीनां विशेषेऽपि स्वजातेरनतिक्रमात् ॥
संख्याभेदो यथा नास्ति रसानामपि स क्रमः।
दृष्टं मुखप्रलेपादि यत्सर्वेषु घृतादिषु ॥
न च तद्दाड़िमाद्येषु षड्वातो रसाः स्मृताः।
आनन्त्यैकत्वयोश्च स्यान्न विचित्रार्थतन्त्रणम् ॥ इति



अधुना द्रव्याणां रसगुणवीर्यविपाकादिविषये किञ्चिदभिधीयते। त्रिविधं खलु द्रव्यम्—जाङ्गमम्, औद्भिदं, पार्थिवं चेति। तत्र घृतदुग्धदधिमूत्रशकृद्रसरोचनाविषाणशङ्खशुक्तिमधुवसामज्जपित्तास्थिस्नायुनखखुरप्रभृतीनि जाङ्गमद्रव्याणि। वनस्पतिवानस्पत्यौषधिवीरुद्भेदेन चतुर्विधं विविधमप्यौद्भिदमेवोच्यते। धातव उपधातवो रसा उपरसा लवणानि मणयः सिकतासुधा स्फटीगैरिकाञ्जनप्रभृतयः पार्थिवानि। त्रिविधमप्येतन्निखिलं द्रव्यजातमाहृतं रसगुणवीर्यविपाकप्रभावद्वारैव सर्वं गुणं दोषं वा जनयति। अतो रसादय एव विवेचनीयाः।

रसाः षट्—मधुराम्ललवणतिक्तकटुकषायाः। तत्र भूजलयोर्बाहुल्यान्मधुरो रसः, भूतेजसोरम्लः, जलतेजसोर्लवणः, वाय्वाकाशयोस्तिक्तः, वायुतेजसोः कटुकः, वायूर्व्योः कषायः। तेषां स्वादुरास्वाद्यमानो मुखमुपलिम्पति, इन्द्रियाणि प्रसादयति, देहं प्रह्लादयति, षट्पदपिपीलिकादीनामपीष्टतमः। अम्लस्तु जिह्वामुद्वेजयति, उरःकण्ठं विदहति, मुखं स्रावयति, अक्षिभ्रुवं सङ्कोचयति, दशनान् हर्षयति, रोमाणि च। लवणो मुखं विष्यन्दयति, कण्ठकपोलं विदहति, अन्नं प्ररोचयति। तिक्तो विशदयति वदनं, विशोधयति कण्ठं, प्रतिहन्ति रसनाम्। कटुको भृशमुद्वेजयति जिह्वाग्रं, चिमचिमायते कण्ठकपोलं, स्रावयति मुखाक्षिनासिकं, विदहति देहम्। कषायस्तु जड़यति जिह्वां, बध्नाति कण्ठं, पीड़यति हृदयम्। देशो ह्यानूपो मधुररसयोनिः। जाङ्गलश्च कटुकरसयोनिः।

आनूपसाधारणश्च लवणाम्लयोर्योनिः। कालश्च शिशिरस्तिक्तं प्रबलयति, वसन्तः कषायं, ग्रीष्मः कटुकम्। वर्षा अम्लं प्रबलयति, शरल्लवणं, हेमन्तो मधुरमिति। तथा मधुरतिक्तकषायाः शीताः। कट्वम्ललवणा उष्णाः। मधुराम्ललवणाः स्निग्धा गुरवश्च। कटुतिक्तकषाया रूक्षा लघवश्च। लवणाम्लमधुरा वातहराः। कषायतिक्तकटुकाश्च वातकराः। तिक्तस्वादुकषायाः पित्तहराः। कट्वम्ललवणाश्च पित्तकराः। कटुतिक्तकषायाः श्लेष्महराः। मधुराम्ललवणाश्च श्लेष्मकराः। मधुरलवणौ मधुरविपाकौ। अम्लोऽम्लविपाकः। कटुतिक्तकषायाश्च कटुविपाका इति रसद्वारैव द्रव्याणां वीर्यविपाकादिविज्ञानमपि प्रायो भवति।

यद्यपि रसेषु गुणरूपेषु गुर्वादिगुणयोगो न सङ्गच्छते, 'निर्गुणास्तु गुणाः स्मृता' इति नियमात्, तथापि तत्साहचर्याद्वुपदेशसौकर्यार्थं च रसेषूपचर्यते। तदुक्तं चरके—

गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक्।
विद्याद् द्रव्यगुणान् कर्तुरभिप्रायाः पृथग्विधाः॥ इति

किञ्च कुत्रचिद्रसद्वारा द्रव्यगुणज्ञानं भवति, कुत्रचिच्च न भवति, तत्साहचर्यापवाद-दर्शनात्। तथा च—

ये रसा वातशमना भवन्ति यदि तेषु वै।
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्॥
ये रसाः पित्तशमना भवन्ति यदि तेषु वै।
तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्मकारिणः॥
ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै।
स्नेहगौरवशैत्यानि बलासं वर्द्धयन्ति ते॥ इति सुश्रुतः।

तथा चरकेऽपि—

शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः।
तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः॥
तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः।
वीर्यतो विपरीतानां पाकतश्चोपदेक्ष्यते॥ इति

यथा क्षीरमदिरामरिचादीनाम्। तथा च क्षीरे मधुररसविपाके शीतवीर्ये च मधुर-रसवत् श्लेष्मकोपनत्वं वातपित्तशमनत्वं च, एवं मदिरामरिचयोरपि वाच्यम्। तादृश-साहचर्यविरहस्थले च क्वचिद्रसाधिक्येन कार्यकारित्वं, क्वचिद्वीर्याधिक्येन, क्वचिच्च विपाकाधिक्येन। यथा—मधु मधुरं श्लेष्माणं शमयति कटुविपाकितया सकषायत्वा-द्रौक्ष्याच्च वातं जनयति शीतवीर्यत्वाच्च। तथा यवोऽपि—इत्यादीनि बहून्युदाहृतानि, अष्टाङ्गसंग्रहे १७ अ०।

गुर्वादयो गुणाश्च विंशतिः। यथोक्तं वाग्भटेन—

गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः।
गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः॥ इति

तत्र द्रव्यस्य बृंहणे कर्मणि शक्तिर्गुरुः, लङ्घने लघुः, शमने मन्दः, शोधने तीक्ष्णः, स्तम्भने हिमः, स्वेदने उष्णः, क्लेदने स्निग्धः, शोषणे रूक्षः, रोपणे श्लक्ष्णः, लेखने खरः, प्रसादने सान्द्रः, विलोड़ने द्रवः, श्लथने मृदुः, दृढ़ने कठिनः, धारणे स्थिरः, प्रेरणे चलः, विवरणे सूक्ष्मः, संवरणे स्थूलः, क्षालने विशदः, लेपने पिच्छिलः, इति। व्यवायी द्रवेऽन्तर्भूतः, विकाशी खरे, आशुकारी चले, प्रसन्नः स्थूले। सुगन्धदुर्गन्धौ तु मन्दतीक्ष्णविशेषौ, इन्द्रियोद्वेजनप्रसादनद्वारा शोधनशमत्वादिति हेमाद्रिः।

तत्र शीतोष्णस्निग्धरूक्षगुरुलघुमृदुतीक्ष्णा इत्यष्टौ गुणा वीर्य्यसंज्ञा भवन्ति शक्त्युत्कर्षविवर्त्तनादिहेतुभ्यः। तथा चाष्टाङ्गहृदये—

गुर्वाद्या वीर्य्यमुच्यन्ते शक्तिमन्तोऽन्यथा गुणाः।
परसामर्थ्यहीनत्वाद् गुणा एवेतरे गुणाः॥ इति

पूर्वोक्ता गुर्वाद्या अष्टौ गुणा यदोत्कृष्टशक्तयः सन्तो द्रव्यं समधिशेरते तदा वीर्य्यशब्दवाच्याः। यदा तूत्कृष्टशक्तियुक्ता न भवन्ति तदा सामान्यगुणा एव। ये च गुर्वादिविशिष्टा द्वादशगुणास्ते स्वभावेनैव परसामर्थ्यहीना उत्कृष्टशक्तिरहितास्तेऽपि सामान्यगुणशब्दवाच्याः। ते न कचिदपि वीर्य्याख्यां लभन्त इतीन्दुः। तेषु वीर्य्येषु तीक्ष्णोष्णावाग्नेयौ। गुरुशीतौ पृथिव्यम्बुगुणभूयिष्ठौ। अम्बुगुणभूयिष्ठः स्नेहः। तोयाकाशगुणभूयिष्ठं मृदुत्वम्। वायुगुणभूयिष्ठं रौक्ष्यम्। अग्न्याकाशसमीरणगुणभूयिष्ठं लघुत्वम्। तत्र गुरूष्णस्निग्धा वातघ्नाः। मृदुशीतौ पित्तघ्नौ। लघुतीक्ष्णरूक्षाः श्लेष्मघ्नाः। एषां गुणवीर्य्याणां कर्माणि सुश्रुतसूत्रस्थाने ४६ तमेऽध्याये द्रष्टव्यानि।

अथ विपाकः। विपाको नाम—

जाठरेणाग्निना योगाद् यदुदेति रसान्तरम्।
रसानां परिणामान्ते स विपाक इति स्मृतः॥ इत्युक्तलक्षणः।

स च त्रिधा मधुराम्लकटुकभेदात्। तत्र मधुराम्लयोर्द्रव्ययोर्मधुरो विपाकः। अम्लोऽम्लस्य। कटुतिक्तकषायाणां च कटुकः। कर्म चैषां रसानुरूपमेव। यदुक्तं—'रसैरसौ तुल्यफल' इति।

विशेषश्चात्र—

शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः।
मधुरः सृष्टविण्मूत्रो विपाकः कफशुक्रलः॥
पित्तकृत्सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः॥

इति चरकप्रदर्शितो द्रष्टव्यः। सुश्रुते च द्विविध एव विपाको निर्दिष्टो मधुरः। कटुकश्च। तत्र मधुराख्यो गुरुः, कटुकाख्यो लघुरिति। एवं च गौरवलाघवभेदेन द्विविधः। चरकेऽपि—

तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा। इति

तत्र मधुरो विपाकः पृथिव्यम्बुगुणभूयिष्ठो वातपित्तघ्नश्च श्लेष्मकरश्च। कटुको

विपाकश्च तेजोऽनिलाकाशगुणभूयिष्ठः श्लेष्मघ्नश्च वातपित्तकरश्च। गुरुपाकः सृष्टविण्मूत्रतया कफोत्क्लेशेन चानुमेयः। लघुर्बद्धविण्मूत्रतया मारुतकोपेन चानुमेय इति। द्रव्यगुणविशेषेण चास्याल्पमध्ययभूयस्त्वमुपलक्षयेदित्यष्टाङ्गसंग्रहोक्तसूत्रदिशा ऽत्र विशेषोऽपि द्रष्टव्यः।

तथाहि—

यत्र रसेन सदृशो विपाको मधुराम्लकटुकानां द्रव्याणां प्रधानरससमानगुणाना-मुत्कृष्टत्वाद्विपाकस्योत्कृष्टत्वं कल्पनीयम्। एवं मध्यत्वान्मध्यत्वम्। स्वल्पत्वाच्च स्वल्पत्वम्। यत्र तु रसाद्विपरीतो विपाको लवणतिक्तकषायाणां तत्र रसविपरीतानां गुणानामुत्कृष्टत्वा-दुत्कृष्टत्वं कल्पयेद्विपाकसदृशानाम्। एवं मध्यत्वमल्पत्वं च। चक्रपाणिश्च—द्रव्याणां मधुरत्वमधुरतरत्वमधुरतमत्वादिगुणवैशेष्याद्धेतोर्विपाकस्याल्पमध्यभूयिष्ठतामुपलक्षयेदित्याह।

विपाकविषये पाराशरमतमन्यादृगेव, तथा च तद्वचनम्—

पाकास्त्रयो रसानामम्लोऽम्लं पच्यते कटुः कटुकम्।
चत्वारोऽन्ये मधुरं सङ्कीर्णरसास्तु सङ्कीर्णम्॥

अनेन च पराशरः—तिक्तकषाययो र्मधुरपाकित्वमिच्छति। अन्ये पुनराचार्यास्तावेव कटुकविपाकाविच्छन्ति। तन्मतं दूषयितुकामः पराशरः पुनरिदमाह—

कटुतिक्तकषायाणां कटुको येषां विपाक इति पक्षः।
तेषां पित्तविघाते तिक्तकषायौ कथं भवतः॥ इति

ये चाचार्य्याः कटुतिक्तकषायाणां कटुविपाकित्वमिच्छन्ति, तेषां तिक्तकषाययोः पित्तहरत्वं न सम्भवति। तन्मते तु तयोर्मधुरविपाकित्वात् पित्तहरत्वं सम्भवतीति तदभिप्रायः। तच्च न चतुरस्रमिति मन्यामहे, यतः पित्तहरत्वं रसस्यैव स्वरूपम्। कटुस्तु विपाको यत्र स्वल्पो भवति न तत्र कटुः स्वकार्यं करोति, यद्यद्द्रव्ये रसादीना-मिति न्यायात्। तथा च तिक्तरसस्य कटुविपाकस्यापि निम्बस्य पित्तहरत्वमेव। यत्र विपाकस्य कटोराधिक्यं तत्र तस्य पित्तकरत्वमेव। यथा—तिक्तरसेऽपि द्रव्ये कटोर्विपाकस्याधिक्यात् बृहतीद्वयस्य पित्तकरत्वमेवं कषायेऽपि कल्पनीयम्। एवं रसस्यैव स्वभावः पित्तहरत्वम्। यतश्च तिक्तरसे कषायरसे च द्रव्ये नैसर्गिकेण बलेन रसवीर्याभ्यां विपाकः प्रायेणाभिभूयते। अत उच्यते तिक्तकषायौ पित्तहरावित्यस्माभिः। अतः पराशरमतं त्वचतुरस्रमिवेति इन्दुः।

अथ प्रभावः। प्रभावो नाम द्रव्यस्यात्मा—

रसवीर्य्यविपाकानां सामान्यं यत्र लक्ष्यते।
विशेषः कर्मणां चैव प्रभावस्तस्य च स्मृतः॥

इति चरकोक्तस्वरूपः। तथाऽष्टाङ्गसंग्रहे सू० १७ अध्याये—

मिथोविरुद्धात् वातादीन् लोहिताद्या जयन्ति यत्।
कुर्वन्ति यवकाद्याश्च तत्प्रभावविजृम्भितम्॥

शिरीषादि विषं हन्ति स्वभावं तद्विवृद्धये ।
मणिमन्त्रौषधीनां च यत्कर्म विविधात्मकम् ॥
शल्याहरणपुंजन्मरक्षायुर्धीवशादिकम् ।
दर्शनाद्यैरपि विषं यन्नियच्छति चागदः ॥
विरेचयति यद् वृष्यमाशु शुक्रं करोति वा ।
ऊर्ध्वाधोभागिकं यच्च द्रव्यं यच्छमनादिकम् ॥
मात्रादि प्राप्य तत्तच्च यःप्रपञ्चेन वर्णितम् ।
तच्च प्रभावजं सर्व्वमतोऽचिन्त्यः स उच्यते ॥

इति वचनकदम्बकेन । तथा

रसेन वीर्य्येण गुणैश्च कर्म द्रव्यं विपाकेन च यद् विदध्यात् ।
सद्योऽन्यथा तत् कुरुते प्रभावाद्धेतोरतस्तत्र न गोचरोऽस्ति ॥

इति वचनेनापि । रसादिभिः पूर्वोक्तप्रकारेण ज्ञातद्रव्यगुणकर्मभिर्विधातुमशक्यस्य शमनकोपनस्वस्थहितत्वाद्युक्तानुक्तस्वरूपस्य विविधस्य कर्मणो हेतुः स्वयमज्ञेयहेतुर्नानाविधो द्रव्यधर्मो भावस्वभावात्माऽचिन्त्यत्वेनामीमांस्यत्वेन च वर्ण्यते समर्थ्यते च प्रभावो नाम । केवलमाप्तोपदेशेनैव ज्ञातुं शक्यते सर्वैः । आप्तैश्च द्रव्यप्रयोगेणामितज्ञानविज्ञानसमाधिभिः सहकृतेनेति । सोऽयं प्रभावो वस्तुतो द्रव्यनिष्ठधर्मोऽपि द्रव्यस्वरूपत्वेनैवोच्यते तन्त्रकृद्भिः—

शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा । इति

अमुं हेमाद्रिरेवं व्याख्याति—यद् द्रव्यं समैः समविपरीतैर्वा रसादिभिर्युक्तमपि वातादीन् शमयत्येव तच्छमनं, तद्यथा मधुरशीतापि जीवन्ती कफं शमयति, कटुपाकरसो गुरुः स्निग्धोऽपि रसोनः कफवातौ । यद् द्रव्यं विपरीतैः समविपरीतैर्वा रसादिभिर्युक्तमपि वातादीन् कोपयत्येव तत्कोपनं, यथा—गुरूष्णस्निग्धमधुरमपि फाणितं वातं कोपयति, तैरेव गुणैर्माषः पित्तकफौ । यद् द्रव्यं वातादीनां चयवृद्ध्योर्हेतुरपि स्वस्थस्य न तथा तत्स्वस्थहितं, यथा—गुरुमधुररूक्षशीतोऽपि यवः स्वस्थस्य पित्तं न चपयति, गुरुमधुरस्निग्धशीतमपि क्षीरं स्वस्थस्य कफं न कोपयति । एवं सर्व्वत्रापि प्रभाव उदाहरणीयः ।

अन्ये तु शमनादीन् द्रव्यभेदानाहुः । तत्तु न सम्यक् । द्रव्यभेदत्वे यदेव शमनं तदेव कोपनं तदेव स्वस्थहितमिति सङ्करो न युक्तः । धर्मभेदत्वे तु रसादिसङ्करवद् युक्त इति । तदेतत् त्रिविधमपि वातादिशमनत्वादिभेदैर्भिद्यमानं समासतः सप्तपञ्चाशद्विधं भवति । तद्यथा—वातघ्नम् १ वातघ्नपित्तलम् २ वातघ्नश्लेष्मलम् ३ वातघ्नपित्तश्लेष्मलम् ४ वातघ्नपित्तोदासीनम् ५ वातघ्नश्लेष्मोदासीनम् ६ वातघ्नपित्तश्लेष्मोदासीनम् ७ वातघ्नपित्तलश्लेष्मोदासीनम् ८ वातघ्नश्लेष्मलपित्तोदासीनम् ९ । एवं वातघ्नस्यैव नव भेदा इत्यादि । एषां सर्व्वेषां लक्षणोदाहरणे सिद्धमन्त्रप्रकाशे सिद्धभेषजमणिमालायां च द्रष्टव्ये । सिद्धमन्त्रकारो हि निबन्धान्ते स्वयं ब्रूते—

न सिद्धः सिद्धमन्त्रेण यस्य द्रव्यस्य निर्णयः ।
तस्य नान्यत्र कुत्रापीत्यत्र चित्रमधीयताम् ॥ इति

तथा वातघ्नत्वादिनिर्णये नागेशानुजनारायणनिर्मितेऽन्येषामपि तद्भेदानामानन्त्याय दिक् प्रदर्शिता । तथा च तद्ग्रन्थान्ते श्लोकः—

एषामेव विशेषास्तु तारतम्ये च. या भिदः ।
नाम्नैव सुग्रहा एता अनन्ताश्चेति नोदिताः ॥ इति

अन्यान्यप्यौषधकर्माणि ऊर्ध्वाधोभागोभयभागसंशोधनसंशमन संग्राहकाग्निदीपन-पीड़नलेखनबृंहणरसायनवाजीकरणश्वयथुकरविलयनदहनदारणमादनप्राणघ्नविषप्रशम-नानि तथा तत्तद्रोगहरत्वादीनि च प्रभावोपबृंहितवीर्य्यप्राधान्यादेव भवन्तीति सुधी-भिर्भावनीयम् ।

तदेवं रोगाणां हेतूनामौषधानां च सर्वेषामुक्तप्रकारेण वातादिसम्बद्धत्वाद्वातादीनां च भूतेभ्योऽनतिरिक्तत्वात् तत्त्वतो विवेके स्थूलस्यास्य प्रपञ्चस्य भौतिकत्वमेव । यदुक्तं सुश्रुते—

भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते । इति

तत्र शरीरं रोगाधिष्ठानं पञ्चभूतमयं तत्रस्थं वातादिधातुत्रयं तत्तन्त्रकं साम्य-भावेन वर्तमानं वैषम्यभावेन च वर्तमानं तद्दूषकं वातादिदोषत्रयं सर्व्वरोगोद्भववीज-भूतं पाञ्चभौतिकमेव । तदुद्भवत्वात्तन्मयत्वाच्च सर्व्वे रोगा अपि भूतमयाः । तेषां निदानानि कोपनानि औषधानि शमनानि च भूतमयान्येव । यदुक्तं सुश्रुते द्रव्य-विशेषविज्ञानीये—

गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा ।
स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः ॥ इति

एतेनैतदुक्तं भवति—यावद्भिस्तत्त्वैः शरीरमुत्पद्यते, वर्द्धते, वर्त्तते च, तावन्त्येव तत्त्वानि तदुत्पादकवर्द्धकेषु बाह्येष्वपि द्रव्येषु सन्त्येव, अन्यथोत्पत्तिवृद्ध्यसम्भवात् । तस्मात्—सर्वाणि द्रव्याणि पञ्चविधानि भवन्ति । पञ्चभूतात्मकत्वेऽपि सर्वेषां तत्तद्भूतगुणाधिक्येन तद्व्यपदेशात् । तथा च द्रव्यविशेषविज्ञानीये सुश्रुते—तत्र स्थूलसारसान्द्रेत्यारभ्याधोगतिस्वभावमित्यन्तेन पार्थिवमित्येवं पञ्चविधमपि प्रदर्श्यान्ते प्रोक्तम्—अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद् द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं चाभिसमीक्ष्य स्ववीर्यगुणयुक्तानि द्रव्याणि कर्मकराणि भवन्ति ।

युक्तिसमीचैव च द्रव्याणां कार्यकर्तृत्वावधारणे प्रधानं कारणम् । युक्तिश्च संयोज्य-मानानां बहूनां कारणानां संयोगविशेषादुत्पद्यमानकार्यविशेषज्ञानम् । यथा बहुविधेषु पार्थिवद्रव्येषु एकस्मिन् यन्मानेनोत्कर्षापकर्षभावतो वर्त्तमानानां यादृग्वर्णरसस्पर्श-गन्धादीनां पञ्चानामपि कारणभूतानां यादृशेन प्रकृतसमसमवायेन विकृतिविषमसमवायेन वा मिश्रणेन लोलनेन पाकेन परिणामेन वा यादृग्गन्धवर्णरसस्पर्शादयो जायन्ते कार्य-

द्रव्ये तत्सर्वं ज्ञानं युक्तिशब्दवाच्यम् (साइन्स)। युक्तिश्चायुर्वेदे प्रत्यक्षानुमानवत्प्रमाणम्। तथा च तिस्रैषणीये भगवान् पुनर्वसुः—

बुद्धिः पश्यति या भावान् बहुकारणयोगजान्।
युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया ॥ इति

तथाविधया युक्त्या क्रियमाणे परीक्षणे यादृशो निश्चयो भवति तत्राप्येवंविधो विवेक आवश्यकः—तानि यदा कुर्वन्ति स कालः, यत् कुर्वन्ति तत् कर्म, येन कुर्वन्ति तद्वीर्यम्, यत्र कुर्वन्ति तदधिकरणम्, यथा कुर्वन्ति स उपायः, यन्निष्पादयन्ति तत्फलमिति। युक्तिज्ञानं विना हि द्रव्याणां तत्त्वज्ञो न भवति। तथा च मुनिः—

मात्राकालाश्रया युक्तिः सिद्धिर्युक्तौ प्रतिष्ठिता।
तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा॥
योगमासां तु यो विद्याद्देशकालोपपादितम्।
पुरुषं पुरुषं वीक्ष्य स विज्ञेयो भिषक्तमः॥ इति

तथा अयुक्तिज्ञवैद्यदत्तमौषधग्रहणं निषेधति—

तस्माच्च भिषजा युक्तं युक्तिबाह्येन भेषजम्।
धीमता किञ्चिदादेयं जीवितारोग्यकांक्षिणा॥ इति

तस्माद् युक्त्या युक्तिज्ञाने समादरो विधेयः सप्रयत्नातिशयम्। प्रकृतमनुसरामः—द्रव्याणां पार्थिवत्वादिज्ञानेनापि शमनकोपनज्ञानं संजायते। यथा सुश्रुते—

भूतेजो वारिजैर्द्रव्यैः शममेति समीरणः।
भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम्॥
खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणाम्।
वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः॥
आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्यते।
वसुधाजलजाताभ्यां बलासः परिवर्द्धते॥
एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितम्।
द्विशो वा बहुशो वापि ज्ञात्वा दोषेऽवचारयेत्॥ इत्युक्तम्।

प्रकरणेनामुना दोषाणां सर्वतोभावेन स्वरूपस्थानप्रदर्शनपुरःसरं कुपिताकुपितानां लिङ्गानि प्रदर्शयता उक्तानुक्तज्ञाताज्ञातसर्वव्याधीनामारोग्यस्य च सर्वाणि लिङ्गानि भवन्त्युक्तानि। तथा सर्वेषां हेतूनामौषधानां च रसगुणवीर्यविपाकप्रभावेषु तत्सम्बन्धं समर्पयता सर्वेषां व्याधीनां निदानान्यौषधानि च प्रदर्शितानि भवन्ति। एवं च सर्वेषु व्याधिषु तल्लिङ्गदर्शनं तदौषधप्रशमनं च साधयता आप्तोपदेशश्च सूचयता तदाक्षेपनिरसनपुरःसरं सर्वव्याधीनां ज्ञानसौकर्याय चिकित्सासौकर्याय च तत्कल्पनाया आवश्यकता निरूपिता। एवं त्रिष्वपि हेतुलक्षणौषधेषु आयुर्वेदस्कन्धेषु वातादिसम्बन्धः सर्वथा सूचितः। तथा सर्वेषां हेत्वौषधद्रव्याणामानन्त्याद् वक्तुमशक्यत्वात्तत्सामान्यं रसगुणवीर्यविपाकप्रभावेषु संस्तार्य तत्कर्माणि च सर्वतोभावेन निरूपयता उक्तानुक्त-

ज्ञाताज्ञातसर्वद्रव्याणां रसादिद्वारैव गुणागुणनिश्चयः समर्थितः। पुनश्च विशेषज्ञानाय रसादीनां प्रत्येकं भेदानन्त्यं प्रदर्शयता बुद्धिमतामनन्तकल्पनादिक् प्रदर्शिता। तत्त्वज्ञानार्थं युक्तिज्ञाने 'सायन्स' पदवाच्ये प्रयत्नातिशयः प्रार्थितः॥

पुराकाले भेषजतन्त्रविदां समवाये जाङ्गमौद्भिदपार्थिवान्येव तत्तेषां व्याधीनामुपशमाय प्रायशः परिगृहीतान्यासन्। आसीत्तस्मिन् समयेऽस्माकं जन्मदात्र्या एतस्या रत्नगर्भायाः सृष्टिनियमेन तादृशी दशा यदेतस्यामुत्पन्नाः काष्ठौषधयो महाशक्तिसम्पन्ना आसन्। ततश्च बहुतराणां व्याधीनां प्रतीकारः पूर्वमुक्तैस्त्रिविधैरौषधैरेव संसिद्धोऽभूत्। परं विकासवादस्य सिद्धान्तानुसारं पृथिव्याः शक्तिः सर्वदा एकाकारैव तिष्ठति। शान्ताया इव सुस्थिराया इव क्रियाशून्याया इव जनैः प्रतीयमानाया एतस्याः पृथिव्याः स्तरेषु अहर्निशं जायन्ते महान्ति महान्ति परिवर्त्तनानि। एतस्य परिवर्त्तनस्य प्रभावः पृथिव्याः शक्तेरुपरि भूयसांशेन परिपतति नाम। मन्ये सोऽयं विषयो नाधिकं विस्तरमपेक्षते। विदितमेतत्सर्वं पार्थिविज्ञानविदां सर्वेषामपि सभ्यमहोदयानाम्। अस्तु—परिणामनियमो भूमिशक्तेरुपरि प्रभुर्बभूव। पूर्वं सर्वतः प्रसरणशीलः पार्थिवो रसः समाकुञ्चननियमानुसारं क्वचित् क्वचिद्भूमिगर्भे संघातरूपमभजन्। एवञ्च भूमेरुपरितनानां स्तराणां शक्तिर्न तथापूर्वमभवत्। अतएव भूमिपृष्ठे (न भूमिगर्भे) प्ररोहणशीलानां काष्ठौषधीनां तत्समशीलानामन्यासां चौषधीनां शक्ति न्यूनतामभजत्। सैषा न्यूनता बौद्धसभ्यतायाः समये तत्सामयिकानां सिद्धभिषजां परं विचारस्थानमासीत्। अत एव बौद्धानां मान्यतमः श्रीनागार्जुनो यशोधनव्याडिप्रभृतयश्चान्ये बहवः सिद्धाचार्या रसशास्त्रप्रचारं चक्रुः। यथा च तत्कालीनैर्विवेकिभिर्नियम्यान्तरात्मानमध्यात्मप्रवणैश्चेतोवृत्तिभिः साक्षात्कृत्य नवनवानि दार्शनिकतत्त्वान्याविश्चक्रिरे। सर्वोपनिषत् प्रतिपादितान् लोकमान्यानलौकिकान् वेदान्तसिद्धान्तान् पुन राविष्कुर्वता भगवता श्रीशङ्कराचार्येणाध्यात्मतन्त्रसारे नवीन इव युगः समारेभे च। तथैव च तत्कालीनैस्तन्त्रसिद्धान्तानुयायिभिः सिद्धैरपि भूमौ निगूढानि नवनवानि तत्त्वानि रसोपरसात्मकानि आविष्कुर्वद्भिर्वैद्यकसंसारेऽपि नवीन एव युगः प्रादुर्भावयामासे। तत्प्रभावादायुर्वेदीयानां सिद्धान्तानां परिवृत्तिसहानां चिकित्साप्रक्रियायाश्च भेषजसाधनविधानयोरपि परिवृत्तिः संजातैव कालानुसारं न मूलसिद्धान्तानाम्। एवमेवाद्यापि नवयुगारम्भे मूलसिद्धान्तविरोधमनुरुध्य नवीनान्याविष्कृततत्त्वानि आत्मीयरूपे विपरिणमय्य स्वीक्रियन्तां वैद्यैः।

अथ तपति महीमण्डलं बौद्धभूभुजां प्रतापमार्त्तण्डे नागार्जुनयशोधनव्याडिप्रभृतयः सिद्धाः काष्ठौषधीनां क्रमेण हीनगुणवत्त्वात् ऋषभकादीनां दुर्लभप्रायत्वात् मिलितानामपि कटुतिक्तबहुलतया अधिकमात्रतया च सुखसङ्गिनामरुचिकरत्वात् 'कालविलम्बेन वर्षादिक्लेदादिना गतरसतया कार्यासाधकत्वात् असामञ्जस्यमवालोच्य, सूक्ष्मविवेचनया निखिलातङ्कनिर्हर्णीं सकलपुरुषार्थप्रदायिनीं बाल्यतारुण्यवार्द्धक्यानुकूलां नैकवर्षातिक्रमेऽपि अपरिणामिनीं सर्वयोगवाहिनीमल्पमात्रतया क्षीरपायिनामपि सुखप्रयोगामेकत्र

वस्तुनि शक्तिं चिरमन्वेषयन्तो निखिलदुःखार्णवपारदे पारदे तां निरधारयन्। एवं हि ते पारदं स्तुवन्ति—

अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः॥
मूर्च्छितो जयति व्याधीन् मृतो जीवयति स्वयम्।
बद्धः खेचरतां धत्ते कोऽन्यः सूतात् कृपाकरः॥
सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाध्यम्।
तदपि च शमयति यस्मात् कोऽन्यस्तस्मात् पवित्रकरः॥
रसबन्धश्च स धन्यः प्रारम्भे यस्य सततमिव करुणा।
सिद्धे रसे करिष्ये महीमहं निर्जरामरणाम्॥ इति

एतद्बलेनैव प्राच्याचार्य्यव्यवस्थापितं व्याधीनामसाध्यत्वमपि नाङ्गीकुर्वन्ति। तथा च तेषां वचनम्—

साध्येषु भेषजं सर्वमीरितं तत्त्ववेदिभिः।
असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते॥ इति

किम्बहुना पारदोपसेवनयैव ते मुक्तिमपि कुटीरपरिसरचारिणीं मन्यन्ते। यथा-हुर्जगद्गुरुश्रीशङ्कराचार्य्याणां गुरवः श्रीगोविन्दाचार्य्यपादाः—

तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम्।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात्॥

एवं पारदमेव सकलरोगहरत्वेन पुरुषार्थप्रदातृत्वेन च मुख्यं निर्दिश्य अपराणि रसोपरसधातूपधातुरत्नोपरत्नविषोपविषाणि इतराणि च काष्ठौषधानि प्राण्यङ्गौषधानि च तत्सहकारित्वेन निरदिक्षन्। तत्र रस्यते—सर्वमहारसोपरसधातुभिर्गम्यत इति रसः पारदः। स एक एव। सर्वाण्यपि सत्त्वानि धातूपधातवश्च पारदे लयमुपयान्ति। तथा च श्रीगोविन्दाचार्य्याः—

परमात्मनीव सततं भवति लयो यत्र सर्वसत्त्वानाम्।
एकोऽसौ रसराजः शरीरमजरामरं कुरुते॥
अमृतत्वं हि भजन्ते हरमूर्त्तौ योगिनो यथा लीनाः।
तद्वत् कवलितगगने रसराजे हेमलोहाद्याः॥ इति

महारसा अष्टाविति रसप्रकाशसुधाकरः—गगनम्, माक्षिकम्, वैक्रान्तम्, विमलम्, सस्यकम्, तुत्थम्, शिलाजतु, राजावर्त्तकमिति।

उपरसा अष्टौ—तालकम्, तुवरी ( स्फटी ), गन्धकम् कङ्कुष्ठम्, मनःशिला, सौवीरम्, गैरिकम्, खेचरम् ( कासीसम् ) इति।

साधारणरसाः सप्त—नवसारम्, विड़म्, वराटिका, अग्निजारः, गिरिसिन्दूरम्, दरदम्, वोदारश्टङ्गम ( मुर्दासिङ्ग ) इति।

आयुर्वेदप्रकाशस्तु महारसशब्देन पारदमेव निर्दिशति। उपरससंज्ञया चेमान् व्यव-

हरति। गन्धम्, हिङ्गुलम्, अभ्रम्, तालम्, शिला, स्रोतोऽञ्जनम्, टङ्कणम्, राजवर्त्तम्, चुम्बकम्, स्फटिकम्, शङ्खम्, खटी, गैरिकम्, कासीसम्, रसकम्, कपर्दम्, सिकता, बोलम्, कंकुष्ठम्, सौराष्ट्रीति। तथा समुद्रफेनम्, क्षुद्रशङ्खः, शुक्तिः, कृष्णमृत्पङ्कः, कम्पिल्लः, गौरीपाषाणः (संखिया) नवसागरः, अग्निजारः, गिरिसिन्दूरम्, बोदारश्रृङ्गम्—इत्यादीन्यपि उपरससंज्ञयैव व्याहरति।

धातवश्चायुर्वेदप्रकाशे—

सुवर्णं रूप्यकं ताम्रं वङ्गं यसदसीसकम्।<br>लोहं चैते मताः सप्त धातवो गिरिसम्भवाः॥ इति

ये च पूर्वमुक्ता उपरसाः प्रायस्त एवोपधातव इति। रत्नानि नव, तद्यथा—वज्रम्, विद्रुमम्, मौक्तिकम्, मारकतम्, गारुत्मतम्, वैदूर्यम्, गोमेदः, माणिक्यम्, इन्द्रनीलः पुष्पराग इति। उपरत्नानि तु वैक्रान्तसूर्यकान्तचन्द्रकान्तराजवर्त्तादीनि। विषाणि चाष्टादशप्रकाराणि। तत्र सक्तुको मुस्तकः कौर्मो दार्वीकः सार्षपः सैकतो वत्सनाभः श्वेतश्रृङ्गीत्यष्टौ भैषज्यविधावुपयुक्तानि। कालकूटः मेषश्रृङ्गी, दर्दुरकः, हालाहलः, कर्कोटः, ग्रन्थिः, हारिद्रकः, रक्तश्रृङ्गी, केशरः, यमदंष्ट्रेति दश तु त्याज्यानि। उपविषाणि—अर्कः, सेहुण्डः, धुस्तूरः, लाङ्गली, करवीरकः, गुञ्जा, अहिफेनम्, इति।

तत्र रसस्य चतस्रोऽवस्थाः—शुद्धो मूर्च्छितो बद्धो मृतश्च। तत्साधकाश्चाष्टादश संस्कारास्तत्र स्वेदनमर्दनमूर्च्छनोत्थापनपातनबोधननियमनदीपनानुवासनानि शोधनोपयोगीनि। शुद्धश्च रसो मूर्च्छयितव्यो भवति। तत्प्रकाराश्च बहवो वर्णिता रसशास्त्रे। तेषु सगन्धनिर्गन्धभेदेन रससिन्दूररसकर्पूररूपो द्विविध एव प्रयुज्यते प्रायश्चिकित्साकर्मसु। गन्धकजारणञ्च तदुपयोगि बहिर्धूमान्तर्धूमभेदेन द्विविधम्। तत्र वालुकायन्त्रकच्छपयन्त्रभूधरयन्त्रगर्भयन्त्रादिभिरन्तर्धूमजारणं विधीयते। वालुकायन्त्रेण तु बहिर्धूमजारणम्। अन्तर्धूमजारणप्रभावश्च—

अन्तर्धूमविपाचितशतगुणगन्धेन रञ्जितः सूतः।<br>स भवेत् सहस्रवेधी तारे ताम्रे भुजङ्गे च॥ इत्थं वर्णितः।

तथा—

षड्गुणे गन्धके जीर्णे रसो भवति रोगहा। इत्यादि।

ततश्च गन्धके जारणेन प्रकारान्तरेण वा बुभुक्षितः पारदो बन्धनार्थमुपयुज्यते। तदर्थञ्च हेमाभ्रसत्त्वादिजारणं विधीयते। तत्र च गगनादिग्रासप्रमाणचारणगर्भद्रुतिबाह्यद्रुतियोगजारणाख्यानि कर्माण्युपयुज्यन्ते। जारणञ्च पातनगालनव्यतिरेकेण घनहेमादिग्रासपूर्वकपूर्वावस्थाप्रतिपन्नत्वमित्युक्तलक्षणम्। अभ्रजीर्णस्य लक्षणं च रसार्णवे एकादशपटले—

कपिलोऽथ निरुद्गारी विप्लुषश्चैव मुञ्चति।<br>अग्नौ तिष्ठति निष्कम्पो व्योमजीर्णस्य लक्षणम्॥ इति

तत ऊर्ध्वं च रञ्जनसारणक्रामणाख्याः संस्कारास्तदुत्कर्षाधायकाः । ततश्च वेधः शरीरलौहयोरिति ।

अधुना च गन्धकजारणान्तम् कर्म प्रायो विधीयते वैद्यैः । तदुत्तराणि च हेमाभ्रसत्त्वजारणादीनि विधातुं तज्ज्ञान्वेषणपुरःसरं महान्तमपि परिश्रममवलम्ब्य रसशास्त्रोक्तसाधकलक्षणमनुसृत्य च प्रयत्नपरैरस्मभिर्भाव्यमिति । साधकलक्षणं च रसार्णवद्वितीयपटले—

जितेन्द्रियाः क्लेशसहा नित्योद्यमसमन्विताः ।
शूराश्च कृतविद्याश्च प्रशस्ताः साधकाः प्रिये ॥ इति

सैषा रसचिकित्सा दुर्द्धर्षानपि व्याधिविशेषान् नर्महसितकेन प्रसह्य समुन्मूलयन्ती विपक्षानपि डाक्तरहकीमादीन् स्वगुणैरावर्जयन्ती भारतीयसकलौषधालयभित्तिमञ्जूषा ( अलमारी ) मलंकुर्वाणा सांप्रतमपि विजयते । सर्वथाऽयं रसचिकित्साया एव महिमा स्तुत्यः—यद्विविधशास्त्रकर्मनिपुणमतिभिर्नैकयन्त्रसाहाय्यप्रत्यक्षीकृतशारीरसूक्ष्मावयवप्रदेशैरपि डाक्तरहकीमैः प्रत्याख्यातान् रोगिणः सुखं नयन्त्यरोगतां वैद्या इति ।

अपि च यावन्तः प्रख्यातकीर्तयो यावनवैद्याः मृगाङ्कानन्दभैरवादीन्येव रोगिणो विषमदशायामाश्रयन्ति, दक्षतराश्च मकरध्वजादीनीति दृष्टचरमेवेति ।

एतस्याः पुराकालिकीं समुन्नतिं वर्तमानकालिकीमवनतिञ्च विचारयन् को नाम प्रेक्षावान् शोकानुतप्तहृदयो नोष्णं निःश्वसिति ।

अल्पावशिष्टेष्वपि काष्ठौषधिप्रधानेषु संहिताग्रन्थेषु तेषां सिद्धान्ताः प्रायो हृदयङ्गमा दृश्यन्ते भिषजाम् । रसतन्त्रेषु तु बहूपलभ्यमानेष्वपि न तथा, कुत एतदिति मीमांसाया एवं नोनिर्धारणा संहिताकर्त्तारो हि बभूवुः ऋषयस्ते च त्रिविधशिष्यबुद्धिगम्याभिर्वाग्भिरुपदिदिशुः । रसकर्माविष्कर्त्तारश्च प्रायस्तान्त्रिकाः सिद्धाः, एते हि निजाविष्कारं स्वावबोधार्थं साङ्केतिकशब्दैरुल्लिख्य गोपनीयं प्रयत्नत इति दृढ़प्रत्यया विश्वासभूमिषु निजदीक्षादीक्षितेषु स्वशिष्येष्वेव कथञ्चित् प्रचारयामासुः । इत्येवं क्रमेण कालवैषम्येण वा अधिकारिविरहेण वा रोगिलोकस्यापुण्यपरिणामेन वा अस्माकमधन्यतया वायं नागार्जुनादिसिद्धविचारार्णवगृहीतजन्मा रसकर्मकलानिधिरिदानीं कलामात्र एवावशिष्ट इति । अस्य च पुनरुदयाय विधेयः समुद्यम इति ।

एवं सामान्यतः सर्वाणि हेतुलिङ्गौषधानि व्याख्यातानि । भेषजं द्विविधम्—ऊर्जस्करं, रोगघ्नं च । तत्रोर्जस्करं द्विविधं रसायनं वाजीकरणञ्च । रोगघ्नमपि द्विविधम्—रोगस्य प्रशमनमपुनर्भवकरं च । पुनश्च द्विविधम्—द्रव्यमद्रव्यं च । तत्र द्रव्यं त्रिविधमुक्तं प्राक् । अद्रव्यं पुनरुपवासानिलातपच्छायामन्त्रसान्त्वदानभयोत्त्राससंक्षोभणहर्षणभर्त्सनहसनस्वप्नजागरणसंवाहनादीनि । पुनरपि त्रिविधम्—दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयश्चेति । पुनरपि त्रिविधम्—अपकर्षणं प्रकृतिविघातो निदानत्यागश्चेति । पुनरपि त्रिविधम्—हेतुविपरीतं, व्याधिविपरीतमुभयकारि च । अनौषधमपि द्विविधम्—

बाधनमनुबाधनं च । एवं भेषजं सम्यक् परीक्ष्य पुनश्चिकित्सां कर्तुमारभेत । यदुक्तम्—

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म भिषक् पाश्चाज्ज्ञानपूर्वं समाचरेत् ॥ इति

अथ च रोगभेषजपरीक्षानन्तरं यान्यवश्यं ज्ञातव्यानि, यदधीनं च चिकित्साफलं तान्यपि संक्षेपतो दर्शयितुं प्रकरणान्तरमारभ्यते—

अथ चैवं हेतुलक्षणौषधानामानन्त्यं प्रसमीक्ष्य विवेकपूर्वकं तत्सामान्यमाकलय्य चाभ्यासवशेनावयवप्रभावेण वा रोगप्रभावमौषधप्रभावमुपकल्प्य चिकित्साकर्मारभमाणो भिषक् पूर्वमेव तावत्तत्द्रोगविशेषनिर्द्धारणे तदनुसारमौषधविशेषनिर्द्धारणे च प्रयतेत । तन्निर्द्धारणे यतमानेनानल्पधीधृतिस्मृतिना प्रत्युत्पन्नमतिना वैद्यराजेन दूष्यदेशबलकालानलप्रकृतिसात्म्यसत्त्ववयआहारास्तथा नानाविधाः सूक्ष्मसूक्ष्मास्तत्तदवस्थाश्च सूक्ष्मेक्षिकया समीक्षितव्याः । समीक्ष्यकारिणो हि कुशला भवन्ति आशु च साध्यं साधयन्ति । सुखानुबन्धं व्यापद्रहितमाशुसाध्यसाधनं हि वैद्यस्य स्पृहणीयं कर्म सिद्धिश्च । दूष्यादीनि च रोगनिर्द्धारणे भेषजनिर्द्धारणे च कथमुपयोगं गच्छन्तीत्यनुयोगप्रकारस्तु ज्ञातायुर्वेदरहस्यानामनुभवशीलानामग्रे नात्युपयोक्तोऽपि प्रसङ्गवाशादुदाहृतो न केवलं कौतुकायेति पृथग्दर्शयामस्तदुपयोगम् । तथा हि दूष्यमेव तावद्विवेचयेन्निर्द्धारणाय, दूष्यं नाम रोगारम्भकार्ये प्रधानकारणस्य दोषस्य स्ववृद्धिक्षयविकृतिद्वारा सहकारिकारणम्; यथा प्रमेहे मेदोमांसशरीरक्लेदादि, कुष्ठे त्वग्रक्तमांसलसीकादि, अर्शःसु गुदवलीस्थितत्वङ्मांसमेदांसि, अपस्मारसंन्यासादौ मनोमस्तिष्कादि, इत्येवमादि; तद्वशेन रोगनिर्द्धारणार्थं चरके श्लोकस्थानीयकियन्तःशिरसीये—

घट्टते सहते शब्दं नोच्चैर्द्रवति शूल्यते ।
हृदयं ताम्यति स्वल्पचेष्टस्यापि रसक्षये ॥ इत्यारभ्य—
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।
दुश्छायो दुर्मना रूक्षः क्षामश्चैवौजसः क्षये ॥

इत्यन्तेन ग्रन्थेन धातुमलौजसां क्षयेण दोषसहकारिणा ये रोगा जायन्ते ते प्रदर्शिताः । विधिशोणितीये—'ततः शोणितजा रोगाः प्रजायन्ते पृथग्विधाः' इत्यारभ्य "विकाराः सर्व एवैते विज्ञेयाः शोणिताश्रयाः" इत्यन्तेन स्वहेतुविकृतरक्तप्रभवा विकाराः प्रदर्शिताः । तथा विविधाशितपीतीये—

अश्रद्धा चारुचिश्चास्यवैरस्यमरसज्ञता । इत्यारभ्य—
स्नायौशिराकण्डराभ्यो दुष्टाः क्लिश्नन्ति मानवम् ।
स्तम्भसंकोचखल्लीभिर्ग्रन्थिस्फुरणसुप्तिभिः ॥
मलानाश्रित्य कुपिता भेदशोष प्रदूषणम् ।
दोषा मलानां कुर्वन्ति सङ्गोत्सर्गावतीव च ॥

इत्यन्तेन ग्रन्थेन धातुमलादि वृद्धिविकृतिभवाः सामान्यजा रोगाः प्रदर्शिताः । वातनानात्मजाश्च वातव्याधिचिकित्सिते—

तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः। इत्यारभ्य
इत्युक्तं स्थानभेदेन वायोर्लक्षणमेव च॥ इत्यन्तेन ग्रन्थेन,

तथा तत्रैव—

रक्तावृते सदाहार्त्तिस्त्वङ्मांसान्तरयोर्भृशम्। इत्यारभ्य
अस्वस्थं हृदयं चैव वर्चसा त्वावृतेऽनिले॥

इत्यन्तेन, आवरकत्वेन च दूष्यप्रभवाः रोगाः प्रदर्शिताः। अष्टाङ्गसंग्रहे दोषादिविज्ञानीये—

पित्तं त्वचि स्थितं कुर्याद्विस्फोटकमसूरिकाः।

इत्यादिना—

"कोष्ठगं मदतृड्दाहान् व्यापिनोऽन्यांश्च यक्ष्मणः"

इत्यन्ते न पित्तस्य दूष्यविशेषसम्बन्धजा रोगाः प्रदर्शिताः। तथा तत्रैव "श्लेष्मा त्वचि स्थितः कुर्यात्" इत्यादिना "तांस्तांश्च कफसम्भवान्" इत्यन्तेन कफस्य तत्तत्सम्बन्धप्रभवा रोगा वर्णिताः। तथा सर्पादिविषस्य रसादिधातुसम्बन्धेन सप्तवेगा भवन्ति, ते ते च वेगोद्भवा रोगाः सर्वत्र चरकसुश्रुतादिषु विषकल्पे स्पष्टं प्रोक्ताः। तथा दूष्यसम्बन्धज्ञानात् साध्यासाध्यज्ञानमपि जायते, दूष्येषु कानिचिद्वातसमानगुणभूयिष्ठानि, कानिचिच्च पित्तसमानगुणभूयिष्ठानि, कानिचिच्च श्लेष्मसमानगुणभूयिष्ठानि, तत्र समानगुणदूष्यसम्बन्धेनोपबृंहकबललाभालब्धबलो दोषोऽसाध्यं व्याधिं जनयति। अत एवोक्तं साध्यप्रकरणे "नच तुल्यगुणो दूष्यः" इति, परन्त्वेतत्प्रमेहं विना ज्ञातव्यम्। तत्र हि तुल्यदूष्यत्वेनैव समक्रियत्वं, ततश्च साध्यतेति, अलं विस्तरेण।

एवं हि द्रव्यप्रभावज्ञानं रोगनिर्द्धारणेऽतीवोपयोगि भवति। तथैव भेषजनिर्द्धारणेऽपि दूष्यविशेषकृतिज्ञानं कर्मविशेषप्रतिपत्तिद्वाराप्रयोजकं भवति॥ तथा च वातादिधातुवैषम्यरूपे विकारे तदारब्धे ज्वरादिविकारे च हेतुविपरीतानि व्याधिविपरीतानि उभयविपरीतानि वा तदर्थकारीणि वा द्रव्यगुणकर्माणि [औषधान्नविहाराः] देशकालमात्राभिः सम्यगुपपादितानि उपयोगीनि भवन्ति, तत्रैव च यदा दूष्यादिसहकारिकारणज्ञानमपि यथावद्भवेत्तदा तत्प्रतिपन्नभेषजविशेषोपबृंहितबलानि तान्येवाशुकार्यकराणि सम्पद्यन्ते। यथा अष्टाङ्गसंग्रहस्य दोषोपक्रमणीये—"वातस्योपक्रमः स्नेहः स्वेदो मृदूनि" इत्यादिना वातस्य कुपितस्योपक्रमः प्रदर्शितः। तथा—"पित्तस्य सर्पिष्पानं सर्पिषा स्नेहनम्" इत्यादिना पित्तस्य, तथा श्लेष्मणः, पुनर्विधिविहितानि तीक्ष्णानि संशोधनानि' इत्यादिना श्लेष्मण उपक्रमो वर्णितः। ततश्च—

उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्त्तितः।

इत्यादिना ग्रन्थेन द्विषष्टिदोषभेदानां सामान्येनोपक्रमोवर्णितः, तथा चरकीयविविधाशितपीतीये "रसजानां विकाराणां सर्वं लङ्घनमौषधम्" इत्यादिना "मलजानां विकाराणां सिद्धिश्चोक्ता क्वचित् क्वचित्" इत्यन्तेन ग्रन्थेन, तथाऽष्टाङ्गसंग्रहे दोषादि-

विज्ञानीये "धातवः खलु शारीराः समानैः" इत्यादिना स्वेदक्षयजानभ्यङ्गव्यायाममद्य-स्वप्ननिवातशरणस्वेदैः' इत्यन्तेन् ग्रन्तेन सामान्यतो दूष्योपक्रमः प्रदर्शितः ।

स चायमुपक्रमस्तत्तद्व्याधिप्रतिषेधोक्तचिकित्साक्रमयोजितैस्तत्तद्व्याधिहरभेष-जैर्योजितः सम्यगाशु व्याधिनिर्हरणे समर्थो भवति । पुनश्चापि तेषां तेषां व्याधीनां दूष्यसम्बन्धज्ञाने भवत्येव तत्तत्कर्मप्रतिपत्तिरलं सिद्धये वैद्यस्य । दूष्यसम्बन्धेन तत्तत्कर्मणाञ्च प्रतिपादनं चरके ज्वरचिकित्सिते—

ज्वरे रसस्थे वमनमुपवासञ्च कारयेत् ।
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च ॥
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ।
अस्थिमज्जगते देया निरूहाः सानुवासनाः ॥

इत्यादिना प्रसिद्धमेव । तथा वातव्याधिचिकित्सिते—

शोणितेनावृते कुर्याद्वातशोणितिकीं क्रियाम् ।
प्रमेहवातमेदोघ्नीमामवाते प्रयोजयेत् ॥
स्वेदाभ्यङ्गरसक्षीरस्नेहा मांसावृते मताः ।
महास्नेहोऽस्थिमज्जस्थे पूर्ववद्रेतसाऽऽवृते ॥
अन्नावृते तु वमनं पाचनं दीपनं लघु ।
मूत्रलानि तु मूत्रस्थे स्वेदाः सोत्तरवस्तयः ॥
एरण्डतैलं वर्चस्थे वस्तिः स्नेहाश्च भेदिनः ।

इत्यादि च । तथा तत्रैव—

विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः । इत्यादिना—
प्रत्येकं स्थानदूष्यादिक्रियावैशेष्यमाचरेत् ।

इत्यन्तेन वातव्याधौ तत्तद्दूष्यसम्बन्धेन तत्तद्भेषजविशेषप्रतिपादनमित्यलमुदा-हरणान्तरान्वेषणप्रयासेन । एवं स्पष्टमेव रोगभेषजनिर्द्धारणार्थमावश्यकं दूष्यपरीक्षणमिति ।

देशो द्विविधो ह्यायुर्वेदे वर्णितः । भूमिरातुरश्च, तत्र भूमिदेशावेक्षणं रोगनिर्द्धार-णार्थमेवमुपयुज्यते—'कस्मिन्नयं भूमिदेशे जातः समृद्धो व्याधितो वेति, तस्मिंश्च भूमिदेशे मनुष्याणामिदमाहारजातमिदं विहारजातमिदमाचारजातमेतद्बलमेवंविधं सत्त्वमेवंविधं सात्म्यमेवंविधो दोषः ( मलेरिया-प्लेगकौलेराप्रभृतिरोगाणामुत्पादको यः कश्चित्कारणविशेषः ) भक्तिरियमिमे व्याधयो ( पुराणोदकभूयिष्ठाः सर्वर्त्तुषु च शी-तलाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ) इत्यादयः । 'हितमिदमहितमिद-मिति' इति चरकप्रतिपादितोक्तदिशा देशसमीक्षया रोगविशेषस्य तत्तद्रोगदोषादिवला-वलस्य च निर्द्धारणं भवति, भेषजनिर्द्धारणार्थञ्च भूमिदेशपरीक्षणं तु प्रकरणान्तरे प्रोक्तम् ।

अथातुरस्तु चिकित्साकर्माधिष्ठानमत एव चिकित्साचित्रणाधारपरतया देशत्वेन कल्पितः । समीक्षितश्चायं कार्यदेश आयुःप्रमाणज्ञानद्वारा दोषप्रमाणज्ञानद्वारा च रोग-

निर्द्धारणे बलप्रमाणज्ञानद्वारा च भेषजनिर्द्धारणे उपयुक्तो भवति । बलदोषप्रमाणज्ञान-मायुःप्रमाणज्ञानं चातुरस्य प्रकृतितो विकृतितः, सारतः, संहननतः, प्रमाणतः, सात्म्यतः, सत्त्वतः, आहारशक्तितो, व्यायामशक्तितो, वयस्तश्च परीक्षणाद्भवति । स च परीक्षा-प्रकारश्चरकविमानीयरोगभिषग्जितीये द्रष्टव्यः । भेषजकल्पनाविकल्पो मात्राविकल्पश्च व्याधिव्याधितयोर्बलमपेक्षते, व्याधिबलञ्च 'हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणमि'त्युक्त-दिशा ज्ञेयम् । रोगशरीरजाठराग्निबलानुरूपं हि भेषजं दीयमानमाश्वभिनिर्वर्त्तयति धातुसाम्यम् ।

एतद्धि बलं स्वयमपि रोगभेषजनिर्द्धारणे प्रयोजकं भवति । तथा हि—बलं ताव-दत्र परपरिभवनिमित्तं शरीरमनःसामर्थ्यम्, स्वोचिते कार्ये श्रमाभावप्रयोजकं दाक्ष्यम् । स्वधर्मानुष्ठानाय देहेन्द्रियादिधारणसामर्थ्यम्, कर्मेन्द्रियपाटवम्, रसादिशुक्रपर्यन्त-पुष्टधातुनिमित्तकम्, 'चेष्टासु पाटवं यत्तु बलं तदभिधीयते' इत्युक्तलक्षणम् । सर्व-मप्येतद्बलं विभज्यमानं त्रिविधं भवति । सहजं, कालजं, युक्तिकृतञ्च । सहजं—यच्छरीरसत्वयोः प्राकृतम् । प्राकृतमिति जन्मादिप्रवृत्तं प्राकृतधातुवृद्ध्या हेत्वन्तर-निरपेक्षं वृद्धम्, तद्वृद्धिकरा भावास्त्विमे बलवत्पुरुषे देशे जन्म, बलवत्पुरुषे काले च सुखश्च कालयोगो बीजक्षेत्रगुणसम्पच्च, शरीरसम्पच्च, सत्त्वसम्पच्च, स्वभावसंसिद्धिश्च । अत्र बीजक्षेत्रगुणसम्पत् बीजस्य शुक्रस्य तथा क्षेत्रस्यार्त्तवगर्भाशयरूपस्य गुणानां प्रशस्तधर्माणां सम्पत् । तथा सत्त्वसम्पत्—

अनुत्सेकमदैन्यञ्च सुखं दुःखञ्च सेवते ।
राजसस्तभ्यमानोऽन्यैः सहते नैव तामसः ॥ इति वाग्भटोक्तेः ।

बलभेदेन त्रिविधे सत्त्वे प्रवरसत्त्वेन सह संयोगः । स्वभावसंसिद्धिर्बलजनककर्म-संसिद्धिः । दुर्बलाल्पबलमनुष्यबहुलेऽस्मिन् काले सहजबलस्य क्षयः संजातः, प्रति-दिनं जायते जनिष्यते च, बलवर्द्धयावदुक्तकारणानां पुनः संस्कारे न यतिष्यते देशसमाज नेतृभिर्वैद्यप्रवरैश्च । कालजं कालकृतम् तु विभागजं वयःकृतञ्च, तत्र ऋतुविभागजम्—

आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम् ।
मध्ये मध्यबलं त्वन्ते श्रेष्ठमग्रे विनिर्दिशेत् ॥ इत्युक्तरूपम् ।

वय कृतं यौवनादिप्रभावोद्भवम् । युक्तिकृतं पुनस्तद्यदाहारचेष्टायोगजम् । आहारा-न्मांससर्पिरादेश्चेष्टाया उचितविश्रामव्यायामादेर्योगाद्रसायनवाजीकरणप्रयोगाज्जातम् । तद्वृद्धिकरास्त्विमे भावाः । आहारसम्पच्च, सात्म्यसम्पच्च, कर्म, हर्षश्चेति । तत्र "आहारसम्पत्, बलकराहारलाभस्तदभ्यवहरणशक्तिर्जरणशक्तिश्चेति ।" सात्म्यसम्पत्, तत्र ये घृतक्षीरतैलमांसरससात्म्याः सर्वरससात्म्याश्च ते बलवन्तः क्लेशसहाश्चिरजीविनश्च भवन्ति" इत्युक्तप्रभावा । कर्म व्यायामादि, तदभ्यासान्निजं बलं भवति, व्यायामप्रभावश्च—

"व्यायामदृढगात्रस्य पद्भ्यामुद्वर्त्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥" इति भावमिश्रेण ।

"व्यायामस्निग्धदीप्ताग्निवयस्थबलशालिनम् ।
विरोध्यपि न पीडायै सात्म्यमल्पञ्च भोजनम् ॥"

इति वाग्भटेनापि दर्शितः । तदेतद्वलं "गुर्वल्पव्याधिसंस्थानं सत्त्वदेहबलाबलात् । दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ॥" इत्यादि वाग्भटोक्तदिशा रोगनिर्द्धारणे, तथा सहसा ह्यतिबलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमभिपातयेत्, न ह्यतिबलान्याग्नेय-सौम्यावायवीयान्यौषधान्यग्निक्षारशस्त्रकर्माणि वा शक्यन्तेऽल्पबलैः सोढुम्, अविषह्या-तितीक्ष्णवेगत्वाद्धि सद्यःप्राणहराणि स्युः । एतच्चैव कारणमपेक्षमाणा हीनबलमातुरम-विपादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभिरविभ्रमैरनात्ययिकैश्चोपचरन्त्यौषधैर्विशेषतश्च-नारीः । तथा बलवति बलवद्व्याधिपरिगते स्वल्पमौषधमपरीक्षकप्रयुक्तमसाधकं भवति, इत्यादि रोगभिषग्जितीयोक्तैश्चरकवचनैस्तथा "संशमनानि तु व्याधिबलादधि-कानि तमुपशमय्य व्याधिं व्याधिक्षपितदेहे शीघ्रमन्यमावहन्ति । शरीरबलाधिकानि ग्लानिमूर्च्छामदमोहबलक्षयान् । अग्निबलादधिकानि ग्लानिमग्निसादञ्च ॥". इत्यादि-भिर्भेषजावचारणीयोक्तैरष्टाङ्गसंग्रहवाक्यैश्च स्फुटमेव भेषजनिर्द्धारणेऽप्युपयोगमर्हतीति ।

कालः पुनः संवत्सरश्चातुरावस्था चेति द्विविधो वर्णितो भिषग्विद्यायाम् । द्विवि-धोऽप्ययं रोगभेषजनिर्द्धारणे सहायो भवति । तद्यथा—तत्र संवत्सरो द्विधा त्रिधा षोढा द्वादशधा भूयश्चाप्यतः प्रविभज्यते तत्तत्कार्यमभिसमीक्ष्य, इति । क्षणादिः संवत्स-रान्तः कालो व्याधिनिर्द्धारणे सुतरामुपयुज्यते । त्रिविधेषु रोगकारणेषु कालार्थकर्मरूपेषु काल एव मुख्यः, यत इन्द्रियार्थसंयोगप्रज्ञापराधयोरयोगमिथ्यायोगेभ्य एव रोगा जायन्ते, समयोगाच्चारोग्यम् । शीतोष्णवर्षलक्षणस्य संवत्सरात्मकस्य कालस्य पुनरयोगाति-योगमिथ्यायोगेभ्यो व्यापन्नर्तुकृतेभ्यो जाता रोगा बलवन्तो भवन्ति, कालस्य सर्वतो बलवत्त्वादपरिहार्य्यत्वाच्च । यथा जनपदोद्ध्वंसनीये—

वाताज्जलं जलाद्देशं देशात्कालं स्वभावतः ।
विद्याद्दुष्परिहार्य्यत्वाद्गरीयस्तरमर्थवित् ॥ इति

न केवलं कालस्यायोगादिभ्य एव रोगा जायन्ते, किन्तु कालस्य समयोगेऽपि अपः-रिरक्षणाद्यथर्तुचर्योपेक्षणाच्च जायन्ते । अतएव कालजा रोगा द्विविधा वर्णिता धन्वन्त-रिणा—व्यापन्नर्तुकृता अव्यापन्नर्तुकृताश्च इति । तत्राव्यापन्नर्तुकृता असंरक्षणजाः शीतवातातपादिभिर्जाताः—

चण्डांशोरंशुना शीर्णि तप्ते चण्डेन जायते ।
अंशुघाताभिधो व्याधिः प्राणिनां प्राणपीडनः ॥

इत्यादयो व्याधयः । तथा कालस्वभावजाः—

"चय प्रकोपोपशमा वायोर्ग्रीष्मादिषु त्रिषु ।
वर्षादिषु च पित्तस्य श्लेष्मणः शिशिरादिषु ॥"

इति वातादीनां चयादयः कालसमयोगेऽपि भवन्त्येव, परमृतुचर्यया यथाविध्य-

नुष्ठानेन चयकोपौ न स्वकार्यकरणसमर्थौ भवतस्ततो न हिताहितसेवनं समानमिति। अतएवानागतव्याधिचिकित्साप्रकरणे उपदिष्टमाचार्येण—

ऐमन्तिकं दोषचयं वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले।
घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगान् ऋतुजान्न जातु ॥ इति।

अत एतत् सिद्ध्यति, शीतादिसमयोगेऽपि परिरक्षणादारोग्यमपरिरक्षणाद्व्याधयः सम्भवन्ति। एतदेव कालस्य वैशिष्ट्यम्। तथा तथाविधकालेन दोषप्रकोपज्ञानं तथा तदुत्पन्नव्याधिविशेषज्ञानमपि यथायथं सम्भवति तज्ज्ञानाम्। "वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात्। तथा—'नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम्, इति दिक्।

स एवायं कालो भेषजनिर्द्धारणेऽपि "तत्र साधारणलक्षणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते निरतिरितरेषु" इत्याद्युक्तदिशा उपयुज्यते। आतुरावस्थारूपश्च काल आयुर्वेदे बहुप्रकारो बहुरूपो बहूपयोगो बह्भ्यासबोध्यश्च वर्णितः। तथा चिकित्सा-कर्मणि साधनमसाधनञ्च। व्याधितव्याध्यवस्थाविशेषज्ञानमेव शास्त्रतो गुरूपासनतः कर्मदर्शनतोऽभ्यासतो मननतो लभ्यमाशुसिद्ध्यावहममोघं साधनं वैद्यस्य, सिद्ध्यैव चैतद्ज्ञानमनुमीयते सर्वैः। यदुक्तम्—

सम्यक् प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम्।
सिद्धिराख्याति सर्वैश्च गुणैर्युक्तं भिषक्तमम् ॥—

दीर्घञ्जीवितीये। तथा चरकचिकित्सास्थानान्ते—

मुहुर्मुहुश्च रोगाणामवस्थामातुरस्य च।
अवेक्षमाणस्तु भिषक् चिकित्सायां न मुह्यति ॥ इत्यनेन, तथा
दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत्।
व्याध्यवस्थाविभागज्ञः पश्यन्नार्त्तान् प्रतिक्षणम् ॥
अभ्यासात्प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी।
रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ॥ इति

दोषभेदीयोक्तेन वाग्भटवचनेन च प्रतिपाद्यते यत्तादृशज्ञानलाभे शास्त्रादितोऽपि गुरूपदिष्टमार्गानुसारेण मुहुर्मुहुरातुरावेक्षणमेव मुख्यं साधनमिति। आतुरावस्थया च रोगावस्थानुमीयते इति स्फुटमेवोपयोगित्वं रोगविशेषनिर्द्धारणे आतुरावस्थारूपकालस्येति। तथा चरकविमाने रोगभिषग्जितीये "आतुरावस्थास्वपि तु कार्याकार्यं प्रति कालाकाल-संज्ञा। तद्यथा—अस्यामवस्थायामस्य भेषजस्याकालः कालः पुनरस्येति, एतदपि हि भवत्यवस्थाविशेषेण, तस्मादातुरावस्थास्वपि कालाकालसंज्ञा। तस्य परीक्षा मुहुर्मुहुरा-तुरस्य सर्वावस्थाविशेषावेक्षणं यथावद्भेषजप्रयोगार्थम्, न ह्यतिपतितकालमप्राप्तकालं वा भेषजमुपयुज्यमानं यौगिकं भवति। कालो हि भैषज्यप्रयोगप्राप्तिमभिनिर्वर्त्तयति इति,—" आतुरावस्थारूपः कालः प्रदर्शितः। भेषजनिर्द्धारणेऽस्य कालस्योपयोगः प्रतिपदमुप-लभ्यते चिकित्साकर्मपथिकस्य। कानिचिदुदाहरणानि प्रदर्श्यन्ते। तत्र तावज्ज्वरे—

"ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरा" दित्यारभ्य "इति क्रियाक्रमः सिद्धो ज्वरघ्नः सम्प्रदर्शितः" इत्यन्तं केवलमावस्थिक एव क्रियाकलापः प्रदर्शितः। पुनस्तत्रैव

ज्वरे मारुतजे त्वादावनपेक्ष्यापि हिं क्रमम्।
कुर्यान्निरनुबन्धानामभ्यङ्गादीनुपक्रमान्　　॥ इति
तथा—शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति।
शाखानुसारी तस्याशु मुञ्चेद्बाह्वोः क्रमात् सिराम्॥
वीसर्पेणाभिघातेन यश्च विस्फोटकैर्ज्वरः।
तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत्॥

इत्यादि, तदपवादोऽप्यवस्थावशेनैव प्रदर्शितः। तथा रक्तपित्ते 'वक्ष्यते बहुदोषाणामि'त्यादिना संशोधनभेषजार्हामवस्थां प्रदर्श्य पुन'र्वलमांसपरिक्षीण'मित्यादिना संशमनभेषजार्हावस्था दर्शिता। तथा गुल्मेऽपि अवस्थावशेन 'क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशन'मित्यारभ्य 'व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः' इत्यन्तं श्लोकैर्द्वात्रिंशता क्रियाक्रमः प्रदर्शितः। तथा सर्वदैव शमनभेषजसाध्येऽपि राजयक्ष्मणि।

शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि।
अबलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते॥

इत्युक्त्वापि अवस्थानुरोधात्, "दोषाधिकानां वमनं शस्यते सविरेचनम्। स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम्॥" इति शोधनभेषजस्यापि कालः प्रदर्शितः। इत्येवं प्रतिरोगमातुरावस्थारूपः कालः सम्यगवेक्षितस्तदनुसारमारभ्यमाणे कर्मणि भेषजस्य पर्य्याप्तिमभिनिर्वर्त्तयन् शीघ्रमेव साधयति साध्यम्। तथा च सुश्रुते ३५ अध्याये—

अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया।
क्रिया हीनातिरिक्ता वा साध्येष्वपि न सिध्यति॥ इत्युक्तम्

संयोगिनां निदानदोषदूष्यदेशकालप्रकृतिसात्म्यकोष्ठाग्निबलादीनां प्रत्येकमानन्त्यात् संयोगोऽप्यनन्तविध एव सम्भवति, संयोगविशेष एव चावस्था, इत्यत एकस्यापि रोगस्यानन्ता अवस्थाः सम्भवन्ति। आविष्कृततमाश्च प्रदर्शितास्तत्तदधिकरणेषु। इत्यतः सर्वत्रोपदिष्ट उत्सर्गापवादभावो न्याय्य एव। उक्तमप्यभियुक्तैः—

उत्पद्यते हि सावस्था दोषकालबलं प्रति।
यस्यां कार्यमकार्यं स्यात् कर्म कार्यं विवर्जितम्॥

इत्यादि—इत्यलं बहुना कालविकल्पनेन।

अथानलः—स च त्रिधा भौमदिव्यौदर्य्यभेदात्। तत्राद्यः—काष्ठेन्धनप्रभवं ऊर्ध्वज्वलनस्वभावः पचनस्वेदादिसमर्थश्च। द्वितीयः—उदकेन्धनः पर्य्यग्ज्वलनशीलो वाड़वः विद्युदादिश्च। तृतीयः—उभयेन्धनः पर्य्यग्ज्वलनशीलः भुक्तस्याहारस्य रसादिपरिणामनिमित्तश्च इति। तेष्वत्र "अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते" इति बृहदारण्यकश्रुत्या तथा 'जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते' इति धन्वन्तरिवचनेन च प्रतिपादितश्च-

तुर्विधान्नपरिणामहेतुर्जाठरोऽग्निरभिप्रेतः। यद्यप्याहारपरिणामकरा अपि बहवः सन्ति, यदुक्तं चरके शरीरविचयशारीरे—"आहारपरिणामकरास्त्विमे भावा भवन्ति, तद्यथा—ऊष्मा वायुः क्लेदः स्नेहः कालः समयोगश्चेति। तत्र तु खल्वेषामूष्मादीनामाहारपरिणामकराणां भावानामिमे कर्मविशेषा भवन्ति, तद्यथा—ऊष्मा पचति, वायुरपकर्षति, क्लेदः शैथिल्यमापादयति, स्नेहो मार्दवं जनयति, कालः पर्य्याप्तिमभिनिर्वर्त्तयति, समयोगस्त्वेषां परिणामधातुसाम्यकरः सम्पद्यते इति।" तथापि पचनहेतुरेवोष्मा मुख्यतमः परिणामे। स्वस्थानेषु विजातीयद्रव्यप्रवेशनशक्तिः, प्रविष्टस्य निःसारणशक्तिः, स्वोपादानेषु प्रतिकूलभागपृथक्करणपूर्वकस्वानुकूलभागस्य स्वरूपेण परिणमनशक्तिः, सर्वमेतत्तत्तदग्निशब्दवाच्यम्। तमेवाभिप्रेत्य भगवान् पुनर्वसुरेवमभिष्टौति ग्रहणीचिकित्सिते—

आयुर्वर्णो बलंस्वास्थ्यमुत्साहोपचयौ प्रभा।
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः॥
शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः।
रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते॥ इति

स च शारीरोग्निर्दलभेदेन चतुर्विधो भवति तीक्ष्णो, मन्दः, समो, विषम, इति। तत्र तीक्ष्णोऽग्निः सर्वापचारसहः। यश्च स्वल्पमप्यपचारं न सहते स मन्दः। समश्च खल्वपचारतो विकृतिमापद्यते, अनपचारतस्तु प्रकृताववतिष्ठते। कदाचिदपचारादपि न विक्रियते, कदाचिद्विक्रियते स विषम इति। समाग्निलक्षणे च सम्यग्विपाकरूपं लक्षणं विहाय यदन्यत् क्रियते, तेनैवं विज्ञायते यत्समेनापि नैकाकारः पाक इति। बाह्येनापि च ज्वालाङ्गारात्मकेनाग्निना नैकाकारः सर्वदा पाको भवति। किमुतान्तराश्रयेणोष्मात्मना समेनापि तस्मात्तं प्रयत्नतो रक्षेत्, इति शिराविभागशरीरे वाग्भटः।

तेषु चतुर्षु प्रतीकारसौष्ठवे इदं सुश्रुतवाक्यमनुस्मरणीयम् "तत्र समे परिरक्षणं कुर्वीत, विषमे स्निग्धाम्ललवणैःक्रियाविशेषैः प्रतिकुर्व्वीत, तीक्ष्णे मधुरस्निग्धशीतैर्विरेचनैश्च, एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिः, मन्दे कटुतिक्तकषायैर्वमनैश्च इति। विविधैर्व्यायामयोगैश्च"त्यष्टाङ्गसंग्रहः। तथा सर्वेषां भौतिकाग्नीनां धात्वग्नीनां चायमेव योगक्षेमहेतुर्भवति। तथा च सर्वशरीरपोषणशोषणेऽप्येक एवाधिकृतः। सचायं विशेषतोऽनुपालनीयो हितोपचारेणेति सर्वतन्त्रसिद्धान्तः। तथा च चरके ग्रहणीचिकित्सिते।

अन्नस्य पक्ता सर्वेषां पक्तृणामधिपो मतः।
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः॥
तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः।
पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः॥ इति।

सचायमग्निर्व्याधिभेषजयोर्निर्धारणेऽप्युपयुज्यते। यथा राजयक्ष्मणि धातूनां क्षयो धात्वग्नीनां मान्द्यात्तथा बहुमूत्ररोगे भस्मके च धातूनां क्षयोऽग्नेस्तैक्ष्ण्यादिति स्पष्टमेवाग्निनिघ्नोऽयं विशेषस्तत्समीक्षयैव ज्ञातव्य इति। तथा च राजयक्ष्मणि चरकः—

स्रोतसां सन्निरोधाच्च रक्तादीनां च संक्षयात् ।
धातूष्मणां चापचयाद्राजयक्ष्मा प्रवर्तते ॥ इति ।

तथा भेषजमात्राया निर्धारणे चायमेव मुख्यस्तदधीनत्वाद्भेषजपाकस्य । तथा च वाक्यम्—

मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः ।
व्याधिं द्रव्यं च कोष्ठं च वीक्ष्य मात्रां प्रयोजयेत् ॥

तथान्यदपि भेषजनिर्धारणोदाहरणम्—

रूक्षवह्ननिलक्रूरकोष्ठव्यायामशीलिनाम् ।
दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति ॥
तेभ्यो बस्तिं पुरा दत्त्वा पश्चाद्द्याद्विरेचनम् ।
रूक्षाशनाः कर्मनित्या ये नरा दीप्तपावकाः ॥
तेषां दोषाः क्षयं यान्ति कर्मवातातपाग्निभिः ।
विरुद्धाध्यशनाजीर्णाद् दोषानपि हरन्ति ते ॥
स्नेह्यास्ते मारुताद्रक्ष्या नाव्याधौ तान् विरेचयेत् । इत्यादि ।

अथ प्रकृतिः । सा द्विविधा दोषमयी गुणमयी च । तत्र दोषमयी सप्तधा, गुणमयी च त्रिविधा सती पञ्चदशविधा । सा तु मानसी सत्त्वभेदरूपा सुश्रुतशारीरे लक्षितलक्षणा । या च दोषमयी शारीरप्रकरणे चिकित्साकर्मसु च सैवोपयुक्ता । सा च

'शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।
यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥

इत्युक्तरूपा । सा च रोगभेषजनिर्द्धारणे उपयुज्यते, "तद्दोषः प्रकृतिर्भवेत्" इत्यनेन साध्यत्वं रोगस्य । तथा—

कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम् ।
निष्प्रत्यनीकं कुरुते तस्माज्ज्ञेयः सुदुःसहः ॥

इत्यनेन च सन्ततज्वरस्य स्वरूपविशेषो निर्धार्यते । एवमन्यदप्यूह्यम् । तथा दुश्छर्दनस्य संवृतकोष्ठस्य च प्रयुक्ते वमने अतिमात्रप्रवाहनाद्दोषाः समुत्क्लिष्टा ह्यन्तःकोष्ठे विसर्पन्तो जनयन्ति स्तम्भं जाड्यं मरणं वा, इत्यादि व्यापद्दर्शनादन्यदेव भेषजं तयोर्निर्धार्यते । एवमेव वयःसत्त्वसात्म्याहाराणामपि रोगभेषजनिर्द्धारणद्वारा चिकित्साया-मुपयोगित्वं विदितमेव विदितचिकित्सारहस्यानां सदस्यानामिति न कालमधिकं क्षपयामि दुःश्रवालपार्थानलपजल्पनश्रवणसमुद्विग्नमानसानां भवताम् । केवलं महामतिना संग्रह-चतुरेण श्रीवाग्भटाचार्येण निबद्धं पद्यद्वयं चिकित्साकाले समालोचनीयमित्यनुरुणध्मि महाभागान् । तच्च ।

दूष्यं देशं बलं कालमनलं प्रकृतिं वयः ।
सत्त्वं सात्म्यं तथाहारमवस्थाश्च पृथग्विधाः ॥ १ ॥

सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे ।
यो वर्त्तते चिकित्सायां न स स्खलति जातुचित् ॥ २ ॥ इति ।

सोऽयमेतादृशीमुन्नतेः परां काष्ठामारूढो, दिव्यदर्शनैरमितज्ञानविज्ञानैरानृशंस्यपरैः पूर्वैः पूर्वतरैर्महर्षिभिर्लोकानुजिघृक्षुभिः स्वीकृत्य महान्तमायासं यतमानैरुल्लासितः, अस्माकं दुर्दैवदोषात् प्रज्ञापराधाद्वा कालवशाद्वा राजानुग्रहाश्रयसापत्नभावाद्वा क्रमेण क्षीयमाणनवनवाविष्कारधातुर्विकलाङ्गः प्रायः सर्वाङ्गबाधाबहुलो जराजीर्ण इव निष्प्रभः केवलं स्वीयेन स्वाभाविकबलेनावष्टभ्यमानः कालजयुक्तिकृतबलोपबृंहणप्रत्याशः रक्षाभारनियुक्तानामलसवराणां शारीरज्ञानविरहादचक्षुषामिव चिकित्सापथे भ्राम्यतां पदे पदे स्खलतां चास्माकं सिद्धभेषजकरावलम्बं दयावशोऽधुनापि दददुपकारप्रधानः स्यादपकारपरेऽप्यराववदिति सदाचारं स्मारयन् विपदि प्रत्युपकाराशया कृतज्ञतायै आश्रयमददतामस्माकमुद्योगं प्रतीक्षमाणः क्षणं क्षणं गणयति क्षमाक्षेमाभिलाषी आयुर्वेदपुरुषो नाम।

अष्टाङ्गस्याप्यस्यैकमप्यङ्गमनालोचयद्भिः स्वीयं नियोगभारमगणयद्भिरस्माभिरज्ञानदुरन्धकारेऽमुं प्रक्षिपद्भिर्निष्कलङ्केऽस्मिन् पूर्णज्ञानराशौ अपूर्णोऽयमकिञ्चित्करोऽयमित्यादिकलङ्कराशेरारोपकारणतामाश्रयद्भिः किं न बहु प्रत्युपकृतम् ।

सप्तभिरस्याङ्गैरज्ञानान्धकारेऽधुना विलीनम्, केवलमेकमेव कायचिकित्साख्यमङ्गं बहुषु तदुपाङ्गेष्वपि स्वकर्मायोगजातजाड्येषु अनन्यसाधारणं कर्मातिशयं प्रदर्शयन् स्वस्य सर्वाङ्गोपाङ्गपूर्णस्यानुमापयति प्रभावातिशयम् ।

एवं चास्याङ्गप्रत्यङ्गानां तिरोभावरूपो महता कालेन परिवर्धमानोऽयमज्ञानान्धकारमलीमसं वैद्यानां मानसमाश्रयं कुर्वन् कर्त्तव्यज्ञानविज्ञानं प्रणाशयन् शारीरज्ञानमपि मुष्णन् मोहमयस्तामसो व्याधिराक्रामति स्म भारतीयवैद्यान् स्वव्याधिनिग्रहे क्षीणविक्रमान् क्रमेण ।

सोऽयं व्याधिः सप्तविधेषु व्याधिषु कालजो नाम यो हि कालव्यापादतो जायतेऽपरिरक्षणतश्च । तत्र कालव्यापादो भारतेतिहासविज्ञतमैः सर्वैरेव नापरिचितः पूर्वैस्सभापतिभिः स्पष्टमुपपादितश्च । अपरिरक्षणं चास्माभिरनुष्ठितमनुभूयत एव प्रतिपदम् । न प्राचीनानां कुत्रापि संहितानां दर्शनम्, न च शस्त्रयन्त्राणां प्रतिकृतयो लभ्यन्ते, न च भेषजानां नामरूपगुणानां युक्तेश्च परिचयो वैद्यानां कांश्चिन् महापुरुषान् विहाय । कुत्रान्तर्भूतः स विस्मयावहो धातुवादो रसायनशास्त्रे डिण्डिमघोषं घोष्यमाणः । क्व तिरोभूता रसशास्त्रेषु निपुणं वर्णिताश्चारणजारणसारणक्रामणप्रभृतिसंस्कारप्रक्रियाः । क्व सा मूर्च्छना या 'अव्यभिचरितव्याधिघातकत्वं मूर्च्छना' इति लक्षणेन लक्षिता । क्व तन्मूर्तिबद्धत्वं पारदस्य यद्धि 'बद्धः साक्षात्सदाशिव' इति स्तूयते स्वाभाविकद्रवत्वे सति वह्निना अनुच्छिद्यमानत्वमिति लक्षणेन च लक्ष्यते । क्वासा खेचरीगुटिका । क्व तदरिष्टविज्ञानं यत्प्रभावात्पूर्वतनै र्वैद्यैः संवत्सरान्मासषट्कात्पूर्वमेवायुःक्षयपरिमाणं विज्ञायते स्म, एवमादीनि बहूनि कर्माणि पूर्वेषां यानि रक्षणार्थमस्मासु न्यासीकृतानि, लेखशेषतां

नीतानि, तानि चान्यैरयतमानैस्तादृशीमुन्नतिमनारूढैर्विज्ञानिभिरसत्यान्येतानीत्युपहस्यन्ते। एतेषां नामशेषतानयने वैदेशिककृतास्मत्पूर्वपुरुषोपहासे च वयमेव कारणमेतद्रक्षायां प्रमादवन्तः, न त्वन्यत्। किञ्चिद्दैवादिकम्। तथा च मुनिः—

प्रज्ञापराधात्सम्भूते व्याधौ कर्मज आत्मनः।
नाभिशंसेद् बुधो देवान्न पितॄन्नापि राक्षसान्॥ इति

एतद्व्याधिपराभूताश्च वयं राजभी राजमात्रैश्चान्यैश्च तथाविधै र्वैदेशिकभावाक्रान्तमानसै राजसभासु धिक्क्रियामहे गोष्ठीषूपहस्यामहे चिकित्साकर्मसु च संत्यज्यामहे। अद्यत्वेऽपि च यद्बहुभिराद्रियामहे चिकित्साकर्मसु च संगृह्यामहे तत्र परम्परागतास्मत्पूर्वपुरुषकृतानेकोपकारकृतज्ञतापारवश्यमेव कारणं नास्मत्कृतिरिति। अस्मत्पूर्वपुरुषाणां चामलं चरमसीमानमधिरूढं विज्ञानमित्यद्यत्वेऽपि निष्पक्षपातैरधिगततदेकदेशज्ञानलेशैर्विद्वत्प्रकाण्डै र्वैदेशिकैः सुस्पष्टमनुमन्यते इति कृतमात्मधिक्कृतिवचनेन। कालक्रमेण सौभाग्यवशाद् बृटिशराज्यायत्ते भारते विद्यैव प्रशस्यं धनं विद्यैवामोघमस्त्रं विद्यैव सकलार्थसाधनमिति मनोनिविष्टाकूतैराङ्गलमहापुरुषैः पुनरप्यत्र समारभ्यमाणे विद्याप्रचारे ग्रन्थमुद्रणप्रकारे तदुदितभावप्रसारे च समुदितो यूरोपीयविज्ञानभास्करः। प्रसरति चैतद् भास्करप्रकाशे वयमपि सत्त्वोद्रेकादपकृष्टतमोभागाः कालप्रभावादपनीतमोहाशाः किञ्चिदुन्मिषितप्रज्ञालोचना अपश्याम विचित्राणि विविधाकृतीनि समुज्ज्वलक्षुराणि शस्त्राणि, यन्त्राणि, शारीराकृतिप्रतिरूपकाणि, काचकूपीसमुद्दीपितानि भेषजानि, चाकचक्यसमुल्लसितानि तत्तदुपकरणानि विदेशीयविचित्राडम्बरपूर्णानि चानलसैर्लघुहस्तैर्मूर्तिमद्भिरिव पाटवैर्डाक्तरै र्द्रागेव विधीयमानानि दुष्कराणि कर्माणि। तच्चाकचक्यपराभूतैरदृष्टपूर्वविशिष्टकर्मदर्शनविस्मितैरस्मन्मनोभिरप्यायुर्वेदनामस्मरणमकारि। तत्प्रभावादस्मासु कैश्चिन्महापुरुषैरायुर्वेदसमुन्मेषितमतिभिः प्रत्यभिज्ञायन्ते स्म तानि तानि सर्वाणि विदेशीयाडम्बरवेषभावभाषाभिराच्छादितानि अन्यानीव भासमानानि वस्तुतस्त्वात्मीयान्येवास्मत्कृतोपेक्षया रुष्टानीव।

अथ प्राप्ते चानुरूपे समुपचितविविधोपकरणे प्रकाशितजातसौलभ्यानेकपुराणग्रन्थे प्रतिष्ठाप्यमाणसंस्कृतविद्यालये काले लोकानुग्रहप्रवृत्तस्य सकलपुरुषार्थसाधकस्य निखिलबाधाबाधकस्य देशसमुन्नतिकारणस्य स्वास्थ्यविघातकवारणस्य पराभूतनिखिलखेदस्य भगवत आयुर्वेदस्य सकलान्यप्यङ्गोपाङ्गानि पुनराविष्कर्तुमुद्धर्तुं संस्कर्तुं प्रकाशयितुं प्रचारयितुं लेभे जन्म वैद्यसम्मेलनं नाम।

मान्याः! सभ्यमहाभागाः! आयुर्वेदप्रचारार्थमवतीर्णः सोऽयं संमेलनब्रह्मचारी आत्मन उद्देश्यानां परिपूर्तये नानादिग्देशान् पर्यन्विष्यन्, नासिकप्रयागमथुरादितीर्थप्रायाणि पर्यटन् स्थानानि, परिपूतमतिरिदानीमायुर्वेदमहापीठं कलिकातामहानगरीं प्राप्तवानस्ति। एतावत्कालं नानाप्रदेशेष्वधितिष्ठतः परिभ्रमणपरिपुष्टसर्वावयवस्यास्य यद्यपि संजाता साधीयसी स्थितिस्तथापि नाद्यावधि यथाभिलषितमुद्देश्यानामापूरणसौ-

फर्यमुपलब्धमनेन। नाविदितमिदं सर्वेषामपि संमान्यानां वैद्यबन्धूनां यदारभ्यमाणं किञ्चिदपि कार्यमनुकूलं कालमनुरूपं च देशमासाद्य फलाभिमुखीमधिगच्छति दशामिति। एतदनुसारमेव वृटिशसाम्राज्यसुभगे विद्याप्रद्योतभासुरे नानाविज्ञानरसमये समये लब्धजन्मा सोऽयमस्माकं संमेलनसमारम्भः सम्प्रति भागधेयवैभवादनुकूलतमं देशमप्यधिगतवानस्ति तथा चास्य फलाभिमुखी स्थितिरप्यवश्यंभाविनीति कस्य वा सचेतसश्चेतसि नोदेति।

आयुर्वेदोद्देश्यानां सफलतायाः पक्षे कथमेतस्य देशस्यानुकूलतेत्ययं विषयो मन्ये नाधिकेन विस्तरेण सभासदमहाभागानामग्रे वर्णनीयो भवेत्। निखिलेऽपि भारतवर्षे आयुर्वेदप्रचारस्यानुकूलं सर्वोत्कृष्टं क्षेत्रं यदि किञ्चिदस्ति तर्हि तद्वङ्गदेशमौलिमुकुटायमानां कालिकातानगरीं विहाय नान्यत् किञ्चित्। वर्तमानेऽस्मिन् समये भारतवर्षस्यास्य सर्वेष्वेव प्रान्तेषु श्रीमदायुर्वेदस्योन्नतेर्गीतानि श्रूयन्ते नाम। परं यस्मिन् समयेऽस्मासु न्यासीभूतस्यास्यायुर्वेदमहानिधेः संरक्षणे प्रचारणे च समग्रमपि भारतवर्षं गहननिद्राभिभूतमिव पश्चात्पदमिव कातरमिवासीत्तस्मिन्नपि दुर्वाञ्छनीये समये महोन्नतमिदं कालिकातानगरमायुर्वेदोद्देश्यप्रचारे जागरूकमासीत्। आर्षानाकरग्रन्थान् विहाय यावन्ति खलु वैद्यविद्यायाः पुस्तकानि गीर्वाणभाषायामुपलभ्यन्ते तेषु प्रायशो बहुतराण्येव वङ्गदेशवास्तव्यानां विदुषां प्रतिभाविजृम्भितम्। यस्मिन् खलु प्रान्ते स्वल्पोऽप्याङ्गलचिकित्सायाः प्रचारोऽवलोक्यते तत्रत्या जनाः प्रायो वैदेशिकचिकित्साप्रणाल्या एव प्रशंसागीतिं गायन्तो दृश्यन्ते। परं ये खलु वङ्गा आङ्गलविद्यानां निरन्तरलास्यभूमयः, नवीनवस्तुविज्ञानस्य ( साइन्स ) साक्षात् केन्द्रस्थलम्, वैदेशिचिकित्सासरणेः पथप्रदर्शकाः, तेष्वेव वङ्गेषु भारतवर्षजीवितस्थानीयस्यायुर्वेदस्य प्रचारणसदृशं कठिनकार्यं यदि केनापि कृतं तर्हि कालिकातानगरेणैव। वैदेशिकचिकित्सापथे महारथानां डाक्तराणां किमु कलिकातानगरे नास्ति सर्वतोमुखं प्राधान्यम्? सत्यप्येवं तदेवायुर्वेदीयचिकित्साया विजयडिण्डिमं घोषयत् भारतवर्षमौलिमाणिक्यं श्रीमत्कलिकातानगरं किमु प्राचीनविद्याप्रणयिनामार्याणां नानेकानेकधन्यवादभाजनम्? कालिकातानगरभूषणभूता अनेके कविराजा नानाविधैर्नूतनसाधनैरुन्नतेः परां काष्ठामधिरूढाया वैदेशिकचिकित्सायाः प्रतिस्पर्धिनीं सनातनायुर्वेदावलम्बिनीं चिकित्सां प्रचारयन्ति नाम। किमधिकं बहुतरेषु रोगेषु वैदेशिकचिकित्सातोपि विशिष्टप्रभावशालिनी सैषामीषां चिकित्सा प्रमाणिता भवति। यद्दुर्लभा ओषधीरित एव स्थानादुपलभ्यन्ते भारतस्यान्यप्रान्तवासिनो वैद्याः। अत्रत्यैरेव निर्मितानि बहुतराणि सिद्धभेषजान्यादाय भूयांसः खलु वैद्यमहाभागाः कृतिनो भवन्ति। प्राचीनसरणिमनुसृत्य सुश्रुतसंहिताया भाष्यं कर्तुं शक्नुवानाः श्रीहाराणचन्द्रमहानुभावाः, परमविद्वांसः श्रीश्यामादासकविराजमहाभागाश्चेदमेव कलिकातानगरंसंलङ्कुर्वन्त्यात्मनिवासेन। प्रत्यक्षशारीरं नाम शारीरविषयसर्वकषं महापुस्तक-

मस्मादेव नगराज्जन्म लेभे, यस्य खलु कविराजश्रीगणनाथसेन एम० ए० महाभागा रचयितारः । अवश्यमिदं पुस्तकमायुर्वेदीयशारीरज्ञानसंदर्भे नवीनां घटनामुपस्थापयति । अस्माकं चरकसुश्रुतयोः सूत्ररूपेण प्रदर्शितानां, वैदेशिकैर्नवीनसाधनैर्बहुतरं विस्तारितानां, अनुवीक्षणादियन्त्रैः प्रत्यक्षीकृतानां, प्रयोगसहस्रैरसन्दिग्धीकृतानां शारीरविषयाणां संस्कृतभाषासाहित्ये सांप्रतमेकमात्रमिदं प्रकाशकमिति निर्विचिकित्सं ब्रवीमि । न खल्वग्रेऽपि तदिदमेकमात्रव्यपदेशार्हं भविष्यति । अन्येऽपि महाभागा एतेनादर्शेन वैदेशिकैरुपबृंहितान् विषयान् गीर्वाणभाषायामवतारयेयुरिति बलवद्विश्वसिमि । अवश्यमेतन्निर्माता सर्वेषामप्यायुर्वेदप्रणयिनां धन्यवादभाजनम् । अस्तु आयुर्वेदीयचिकित्सायां सिद्धहस्तानां स्वनामधन्यकविराजश्रीयोगीन्द्रनाथसेन विद्याभूषण एम० ए० महाभागानामियमेव जन्मदात्री भूमिः, सर्वतः प्रथमं राजसंमानसूचकं वैद्यरत्नविरुदं समलङ्कृतवद्भिर्यैः साम्प्रतं सुमहताध्यवसायेन वैद्यागममहानिघेश्वरकस्य प्रकृतविषयसर्वकषा प्रस्तूयते व्याख्या, येषां खलु स्वागतकारिण्याः समितेः सभापतिरूपेण सभासदमहाभागैः साम्प्रतमेव परिचयः समभूत् । किं बहुना, अत्रत्या एव मान्याः कविराजमहाभागा भारतवर्षशासनाधिकृतेभ्यः परमप्रतिष्ठाभाजनं महामहोपाध्यायविरुदमुपलभ्य भारतवासिनामखिलानामपि वैद्यानां मुखमुज्ज्वलमकार्षुः, येन सर्वेऽप्यायुर्वेदप्रणयिनोऽद्य नितरामुन्नतं शिरो दधते । केवलमेकयैवानया वार्तया सर्वस्यास्य सारं वर्णयामो यदायुर्वेदोद्देश्यानां सफलतोपलम्भाय यानि यानि साधनान्यत्र सन्ति तानि तानि नान्यत्र भारतप्रान्ते विलोक्येरन्, यानि न सन्त्यत्र तान्यन्यत्रापि कठिनमेवोपलभ्येरन्निति । अस्तु, एवंविधैर्बहुभिः कारणैरुपश्लोक्यं तदेवेदं कलिकातानगरमस्माकमिदं संमेलनमधिवसति । अस्मिन् कर्मक्षेत्रे सम्मिलितैरस्माभिः संमेलनस्योद्देश्यानां परिपूर्तये निकामं प्रयतनीयम् । संस्कृतषड्दर्शन्याः पक्षे यथा वाराणसी विद्यामहापीठः परिगण्यते तथायुर्वेदस्य कृते नगरमिदम् । अस्मिन् स्थाने समागतस्य संमेलनस्य सफलतायाः कृते भूयसी तावत् प्रत्याशा । एतावत्कालं नानाप्रदेशेष्ववधारितान्युद्देश्यान्यत्र भूयस्त्वंशेषु सफलानि भवेयुरिति सुदृढमिदं हृदये विश्वसिमि । प्रियतमाः सभ्यमहोदयाः भूयानस्माकं कालो विचारयतामेव व्यतीतः । नाधुना विचारैरेव केवलं समयक्षेपस्यावसरः । आयुर्वेदविद्यायाः स्वाध्यायस्य संभ्रातो वहोः कालात्पूर्वमेवारम्भ अधुना अनुष्ठानयज्ञः सुदृढं प्रारभ्यताम् । अनुष्ठानमन्तरा कश्चिदपि समारंभो न फलेग्रहिर्भवति । कर्ममयेऽस्मिन् जीवनसंग्रामे सर्वा अपि जातयः स्वस्वानुरूपमुपकरणमादाय पश्यतः सन्त्यग्रेसराः । सावधाना भवत, न वयं वारं वारं सर्वासां पृष्ठदर्शिनो भूत्वा आत्मबलस्यावमाननां कुर्यामः । सभाजनीयाः समासदमहाभागाः ! अवहितं शृणुत, अस्माकं विजययात्रायाः श्रूयते गंभीरघोषवर्षरानुनादी भेरीध्वनिः । साम्प्रतं वीरोचितेन विक्रमेणास्माभिः कार्यक्षेत्रेऽवतरणीयम् । विचारयत, कैः कैर्वा कार्यैरारभ्यमाणैः संमेलनस्यास्माकं सफलता संभवेत्, आत्ममते विक्रमस्य सोऽयमेव सौवर्णः समयः ।

अहमात्मनः स्वल्पया बुद्ध्या निम्ननिर्दिश्यमानानि कार्याणि अनुष्ठानायोपस्थापयामि।

अस्माकं प्रयत्नातिशयमपेक्षमाणस्य श्रीमतः संमेलनस्य प्रधानमिदमेव प्रयोजनं यदायुर्वेदः पुनरुन्नतेः सिंहासनमधिकुर्यात्। पर्यन्ततो विचारे आयुर्वेदस्य प्रधानं प्रयोजनं शारीराणां धातूनां साम्यसंपादनमेव, तदनुकूला क्रियैव च चिकित्साशब्देन व्यवह्रियते। चिकित्साकर्मणश्च—वैद्यः, औषधम्, परिचारकः, रोगी चेति चत्वारः पादाः। एषु वैद्यश्च भेषजञ्चेति प्रधानतया परिगणनीयं नाम। परं कालमाहात्म्याद्वर्त्तमाने समये प्रधानयोरनयोरेव महती दुरवस्थाऽवलोक्यते। अद्यत्वे स्वतन्त्रं व्यापारमन्विष्यन्त इव धनसंग्रहस्य सुलभोऽयं मार्ग इति बहवोऽपि भारतीयाः केवलमर्थाधिगम एव साभिलाषदृशो वैद्यकं कर्तुमग्रेसरा भवन्ति। अस्मिन् कर्मणि कियतो वैद्यकशास्त्रज्ञानस्यावश्यकता, कियतो वा भेषजप्रयोगपाटवस्यापेक्षा, कियतश्चाध्यवसायस्याकाङ्क्षेति सर्वमेतदविविच्यैव यत्किञ्चिच्छ्रुतं परिज्ञातं चौषधं प्रयुञ्जानाः धनागमस्य घटिकां गणयन्त इव तिष्ठन्त्येते। भाग्यवशाद्यदि रोगी व्याधिसरितमुत्तरति तदान्येषां लोकानां कृतेऽधःपातस्य मार्गः पुनः परिष्कृतो भवति, एवमेतादृशा महात्मानो महादायित्वपूर्णस्य वैद्यपदस्यावहेलनां कुर्वन्तो देशीयचिकित्साभिरुचेः पन्थानमवरुन्धन्तीव। अतः सर्वतः प्रथमं प्रधानभूतस्य वैद्याख्यपादस्यैव संस्कारस्यावश्यकता। आवश्यकमेतद्, यद् वैद्यः सम्यगायुर्वेदज्ञानसंपन्नः कर्मदर्शनसंप्राप्तपाटवः पुनः पुनरेतदभ्यासशाली प्रायशश्च व्याधीनां प्रशमको भवेदिति। एतदतिरिक्त-वैद्यकशास्त्रमूलक ऊहापोहः ( वितर्कः ), वैद्यकेतरशास्त्रज्ञानम्, मेधा, व्याधिचिकित्सायां तत्परत्वं चेत्यादयोऽपि वैद्ये आवश्यका गुणाः। यस्य खलु हस्ते प्राणिनां जीवनमरणयोः सूत्रं सुदृढं संलग्नमस्ति तस्मिन्नेतेषां गुणानां सद्भावो न विशेषप्रमाणसापेक्षः। अतः खलु योग्यानां वैद्यानां निष्पादनाय आयुर्वेदीयविद्यालयानां स्थापनं परमावश्यकम्। ते च भारतस्य सर्वेषु प्रान्तेषु सर्वेषु च नगरेषु आयुर्वेदीयशिक्षागौरवमुद्घोषयन्तो भवेयुः। एषु शास्त्रानुकूललक्षणलक्षिताः सद्वैद्याः कर्तव्यज्ञानं स्मरन्तः शिक्षयेयुरायुर्वेदीयविषयान्, एतेषां च सर्वेषामपि विद्यालयानां पाठ्यप्रणाली एकरूपैव भवेदिति महदुचितम्। दृश्यते संप्रति भारतस्य येषु येषु नगरेषु वैद्यकविद्यालयाः सन्ति तेषां पाठ्यप्रणाली बहुष्वंशेषु परस्परं भिन्ना। एतत्प्रतिबन्धकमुन्नतेर्वैद्यकविद्यायाः। अतः संम्मेलनेऽस्मिन् समवेताः सर्वेऽपि विचक्षणा विद्वांसः पाठ्यप्रणाल्याः प्रश्नं मीमांसेरन्। अस्तु, प्रान्तीयानामेतेषां विद्यालयानां च सूत्रमेकस्मिन् प्रधाने विश्वविद्यालये संम्बद्धं भवेत्, विश्वविद्यालयश्चायं भारतस्य सर्वेष्वपि प्रान्तीयविद्यालयेषु प्रदत्तपरीक्षाणां छात्राणां योग्यतानुसारमेकाकारामेव च पदवीं प्रदद्यात्। वैद्यकशास्त्रं हि शास्त्रान्तराणीव न केवलं मौखिकमेव विज्ञानं प्रयोजयति। अस्मिन् हि शास्त्रे भूयसः खलु सम्प्रयोगस्यावश्यकता। अत एतेषु विद्यालयेषु प्रयोगशालाऽपि स्थापनीयाः। एताभिः सहकृतो वनौषधिभौमौषधिसंग्रहालयोऽपि परमपेक्ष्यते। दृश्यते संप्रति वैद्यके विद्वांसोऽपि बहवो बह्वीर्वनौषधीर्न यथावत् परिचेतुं पारयन्तीति।

अत एवंविधेषु विद्यालयेषु वनौषधीनां परिचयं प्राप्नुवन्तः शिक्षार्थिनस्तत्संप्रयोगरीतौ शिक्षेरन्निति नियम्येत। एतत्कार्यसंपादनाय भारतीया नरपतयोऽपि साहाय्यार्थमर्थनीयाः। एतेषु विद्यालयेषु प्राप्तपर्याप्तविद्या वैद्याः प्राणिनां प्राणाभिसरपदं स्पृशेयुरिति सर्वेऽपि सभ्या मन्ये संमन्येरन्।

एतदनन्तरं द्वितीयस्य भेषजपादस्यावस्थाविचारणीया भवति। वर्तमाने समये भेषजस्यापि महती दुर्दशा। आयुर्वेदप्रोक्ता बह्व्यः खलु वनौषधयो नोपलभ्यन्ते। उपलभ्यमाना अप्येता न वयं यथावत्परिचेतुं शक्नुमः। पण्यसारको (पनसारी) यादृशीः शुद्धा मिश्रा वा नवाः पुरातनीर्वा वास्तविक्यः कल्पिता वा वातातपवर्षपरिक्लिष्टाः प्रददाति गत्यन्तराभावाद्वयं ता एव गृह्णीमः। अतः खल्वेतदवश्यं कर्त्तव्यमापतितं यद् येषु येषु देशेषु या या ओषधय उपलभ्यन्ते तत्र तत्रैवंविधानि प्रमाणिकस्थानानि परिकल्पनीयानि, येभ्यो देशान्तरीयवैद्या आवश्यकतानुसारमोषधीरुपलभेरन्। भेषजवाटिकानां च निर्माणं तेषु तेषु देशेषु परमावश्यकं येषु येषु तानि बहुलमुपलभ्यन्ते।

एवं सिद्धौषधानामपि कृते प्रसिद्धनगरेषु प्राप्तिस्थानानि स्थापनीयानि, येषु सर्वाण्यायुर्वेदप्रसिद्धानि सिद्धौषधान्युपलभ्येरन् सर्वसमये। एतेषां च निर्माणरीतिरप्येकरूपैव संभवेदत्रापि प्रयतनीयं तावत् संप्रति देशे देशे प्रायः समुपलभ्यते निर्माणरीतौ भेदः, तेन च भवत्यसौकर्यं शिक्षमाणानां वैषम्यं च फलस्येति निर्माणरीतिरपि नियन्तव्याऽस्माभिः। सिद्धौषधानां सर्वत्र प्राप्तिसौकर्यस्य सांप्रतं संजातावश्यकता। न हि वर्तमाने समये यः खलु चिकित्सते स एव सौकर्य्येण तदैव सर्वाणि सिद्धौषधान्यपि निर्मातुं प्रभवति। भिषजामसौकर्यं विभाव्य प्राचीनैर्महर्षिभिश्चिकित्साकर्मणोऽष्टौ विभागाः परिकल्पिता आसन्। सांप्रतमियमप्यावश्यकता संजाता यत् चिकित्सायाश्च भैषज्यनिर्माणस्य चापि विभागो भवेदिति।

परिशुष्यतो वैद्यकतरोः पुनरभ्युदयाय प्ररोहाय च बहव उपायाः कर्त्तव्या निश्चेतव्याश्च, तेषु सर्वेषु प्रथमोपि गणनाक्रमेण तृतीयो राज्ञः प्रजानां चोभयोः सौमनस्यं सहकारिता च। न हि केवलं राजसाहाय्येन प्रजाभिस्तिरस्कृताः सिद्ध्यन्त्यर्थाः। नापि राजविरोधे सति प्रजानां प्रतीपयत्नैः किमपि संपाद्यते। भवत्वेवं यद्राजप्रसादेनाश्वास्यमानं विधिं प्रजाः सानुरागमुत्तेजयन्ति। प्रजाभिश्च सबहुमानं पोष्यमाणां कृतिं राजानोऽनुगृह्णन्ति। उचितमेवोक्तं श्रीमता भगवता व्यासेन—

राजा प्रजानां प्रथमं शरीरं प्रजाश्च राज्ञोऽप्रतिमं शरीरम्।
राज्ञा विहीना न भवन्ति देशा देशैर्विहीना न नृपा भवन्ति॥

उदारनीतिपटीयसां घोषितस्नेहानुभूतिपटहानां वर्तमानभारतराजानामायुर्वेदोदये कर्तव्यस्य न केवलं वैद्यरत्नोपाधिना प्रसिद्धभिषजां स्थापने पर्यवसानं भवितुमर्हति। वयं बह्वधिकमाशास्महे—वारं वारं प्रार्थनया स्वीयनिवेदनौचित्यविश्वासनेन स्वीयाभिश्च कृतिभिरनुमोदनसाहाय्याकर्षणक्षमाभिः कालेन राज्ञो बहुमूल्यां महाफलां च

सहयोगितां प्राप्नुयाम। वयमाशास्महे—यत्पाश्चात्यारोग्यदर्शनस्येव प्राच्यायुर्वेदस्य शिक्षार्थे पाठशालाः परीक्षा उपाधयश्च निर्द्धार्येरन्। वयमाशास्महे य केवलसंस्कृतदेशभाषाभिज्ञेभ्यो वैद्येभ्यो वनस्पतिशारीररसायनादिविज्ञानलाभाय विद्यालयेषु आङ्गलभाषाज्ञाननिगडनमन्तरा प्रवेशः सुलभः संभवेत्। वयमाशास्महे मुद्रणावशिष्टानां संहितादिनिबन्धानां संपादने व्याख्याने प्रचारणे च साहाय्यमुत्तेजनाय लभेमहि। वयमाशास्महे—निर्दिष्टयोग्यताकत्तां प्राप्ता भिषजो दक्षतरा इव प्रामाणिकत्वेन संभाव्येरन् तेषां लेखश्च प्राड्विवाकैरन्यैं राजाधिकरणैश्च विश्वस्तः संमान्येत, न प्रमत्तगीत इवोपेक्ष्येत। वयमाशास्महे—केन्द्रेभ्यो दूरस्थेषु ग्रामेषु यत्र दक्षतरचिकित्साया महार्घ्यायाः प्रवेशो न संभवति तत्र लघुव्यया तुल्यफला सुप्रसारा देशकालानुसारिणी विज्ञानसंस्कृता प्राच्यचिकित्सा प्रचार्येत। एवमादि बहुविधं वयमाशास्महे, परन्तु सत्यागस्माकमेव मन्दादरतायां राज्ञ उपेक्षाया भङ्गो न स्वप्नेऽपि संभाव्यते। न केवलं कर्तृपक्षो "यातयामं विज्ञानविदूरं भ्रमभूयिष्ठमनुवाकहतं भूतप्रेतादिमन्त्रयन्त्रप्रधानं दुष्प्रतिभसेवितं विशाणचर्वणमिव केवलं प्राचीनत्वमात्रादृतमायुर्वेदचिकित्सित" मिति यथाश्रुतज्ञानजन्योपेक्षया पराङ्मुखः, किन्तु समानव्यवसायत्वात् सापत्नभावजातासूयैः पदे पदे प्रत्यक्षमुकुरकरैर्विज्ञानपुष्पितवाग्भिर्दक्षतरैः पूरितकर्णः। यावतीं योग्यतां प्राप्य प्रतिद्वन्द्विनो न मूकीकुर्मो वयं तावदस्माभिः कर्तृपक्षस्य बुद्धिभेदःकर्तुं न सुशकः। अल्पीयानेवकाशो गतोऽस्ति यदा समस्तं वैद्यककर्म दाम्भिकभण्डानां विधिकल्पिता जीविकेत्युपहस्यते स्म, परमद्य डाक्टर हार्नल, डाक्टर राय सिद्धमोहन मित्र प्रमुखानां विदुषां निबन्धैरस्माकमाम्नायस्य प्राचीनत्वं बहुसुफलत्वं विज्ञानमूलकत्वं च निर्विवादं स्वीकुर्वन्ति परगुणेषु न सहसा श्रद्दधाना अपि पाश्चात्यविद्वांसः। भारतचिकित्साजातस्य केवलं ग्रीकोपजीव्यत्वं तु विस्मृतमेव प्राचीनैः सोत्कण्ठमुद्घोषितमपि नवीनैर्गवेषकैः। एवं सत्यपि रूढिमार्गानतिक्रमणं न शोभते राजवर्गीयाणामुदारनीतिपथिकानाम् अद्यापि दुर्निवारोऽयमायुर्वेदस्यानतिफलत्वदुराग्रहः। कथमन्यथा हि भारतवर्षीयोऽपि संस्कृतज्ञोऽपि प्रजापक्षनायकवरोऽपि राजपरिवेषविष्टमात्रः पी. एस. शिवस्वामि ऐयरमहाशयः दुर्विदग्धेषूपेक्षणमपि तादृशो विदुषि असंभाव्यं दृढवाक्यमुदीरयेत्। स हि मद्रासशासकराजप्रतिनिधेः कार्यकर्तृसभामण्डनं केनापि प्रजाप्रतिनिधिना प्रस्तुते वैद्यशालाया अर्थसाहाय्यदाने प्रत्युवाच—यदफलाय विज्ञानाभासायापूर्णाय च शास्त्राय न वयं साहाय्यं दातुं प्रस्तुताः। नेदमपरखण्डितं यातु लोकेष्विति बहुमानपुरःसरं वक्तुरस्य कथनं विचारयामः। यदि तुष्यतु न्यायेन क्षणमात्रं स्वीक्रियतेदं निर्हेतुकं बाधितमुपन्यसनममुष्य तथापि विलक्षणेयं वाचोयुक्तिर्माननीयस्य। न हि नाम दुर्बलौ गृहकार्याक्षमाविति मातापितरावुपवास्येते समर्था भ्रातर एव तर्प्यन्ते। न हि नाम सभ्यतायां पश्चात्पदा इति वनगिरिजातयो दस्युभूयिष्ठाः कालेन मरणायोपसृज्यन्ते, प्रत्युत तेषां कृष्यादिशान्तिमयव्यवहारेष्वनुरागसंपादनाय महान् यत्नः

समारभ्यते वर्तमान भारतराजैः । यद्यायुर्वेद विज्ञानमपूर्णं को नाम राजानमन्तरा तस्य पूर्त्यै यतितुमर्हः । यदि तद् विज्ञानं विज्ञानवद्भाति कस्तत्र राजानं विहाय विज्ञानस्योत्कर्षं कर्तुं समर्थतरः । परन्तु यत्पाश्चात्यविज्ञानं शिवस्वामिमहोदयनयनासेचनकं दृक्तरगीतं राजाश्रयदत्तं दलयति न आयुर्वेदं किं तदपि सौरः कर्ण इव सकवचकुण्डलमुदितं जन्मत एव ? शतत्रयाद् वर्षाणां प्राक् का तस्य दशासीत्, पश्चाशतो वर्षाणां प्राग्वा किं तदपूर्णं नासीत् ?

किञ्च तदर्थे राजपक्षेण न साहाय्यमदीयत ? तत्त्वतस्तु सर्वाण्येव विज्ञानान्यपूर्णानि, यद् यच्च पूर्णतायाः समीपतरमायाति, तत्तद्राजाश्रयेण प्रजावलम्बेन च । अपूर्णमपि देशाननुकूलमपि यत्पाश्चात्यचिकित्सितमद्य स्वप्रकाशेन भारतायुर्वेदमतिशेते तिरयति च तस्य कारणं राजाश्रयो राजपक्षाभिनिवेश एव । परं नात्र किमपि नैराश्याय । सत्यस्माकं बद्धपरिकरत्वे राजोपेक्षां दूरीकर्तुं शक्यमेव । कस्मिन्नप्यर्थे कृतनिश्चयाः प्रजा राजानं रश्मिष्विवादायाकर्षन्ति । राज्ञां कृतकौदासीन्यं च प्रजानां हार्दपरीक्षार्थं भवति । यतो वर्तमानाः सम्राजो नीत्या प्रजानुवर्तिनः । केवलं राजपक्षे स्वौदासीन्यमारोप्य न कुसीदिभिर्भाव्यमस्माभिः । किं राजसाहाय्यमुपेक्ष्यापि नास्माकं वहु करणीयमस्ति ? अप्यस्माभिः स्थापिता अध्यापनशालाः प्रयोगशालाः ? अप्यस्माभिः स्थापितानि वनस्पतिरोहवनानि ? येन वयं कुक्षिम्भरिभिः पण्यसारिभिर्नीयमाना अन्धा इव न मज्जेम । अप्यस्माभिः सम्मेलनेनानेन समारब्धं परस्परमेलनजं सौमनस्यं चरमोन्नतिं नीतम् ? अप्यस्माभिः परस्परानुभवसाहाय्येन साधितश्चिकित्साविधावुत्कर्षः ? अप्यस्माभिर्दक्षतरैराकृष्यमाणा जनता स्वमार्दवेन सौम्यव्यवहारेण निर्लोभतया अनति व्ययत्वेन विद्यातिशयेन चिकित्साचमत्कारेण वशीकृत्य तेभ्यो रक्षिता ? अपि वयमनुकरणपिशाचेनोपदिश्यमानं वहुव्ययत्वं रूक्षत्वमसमवेदित्वमाश्रयन्त आयुर्वेदसिद्धान्तानुयायिनां मूलस्तम्भं सुलभत्वं सौम्यत्वं च नोत्खनामः ? अप्यस्माभिः शारीरविज्ञानमनुशील्य प्रस्तुतेषु तेषु तेषु जटिलविषयेषु स्वीयं स्वसूचित्वं प्रतिहतम् ? एवमादि वहुधा कर्त्तव्येऽस्मिन्संहनने सम्पादिते कर्मणां फलमिव राजप्रसादः कालपक्को नियतमस्मदीयो भविता ।

विज्ञापनशेषश्चायम् । मदीयश्चतुर्थ उपायो नवीनपाश्चात्यविज्ञानाविष्कारसारस्य स्वीकरणं, स्वविज्ञानोन्नत्यै ज्ञानपूर्वकमुपयोगश्च । सर्वाणि प्राचीनार्य्यविज्ञानानि व्यपेतरसानीव स्तब्धानि । यत्र महर्षिभिस्त्यक्तानि तत्रैव पीठे वा गर्त्ते वा सीदन्ति न कालेन पुरः प्रचलन्ति । देशकालप्राणा न तेषु प्रविश्य तान्यनुप्राणयन्ति । केवलमायुर्वेदोऽस्मदीयो जीवति वर्धते च प्रभविष्णुर्वर्द्धिष्णुश्च । नात्र कापि विधिलेखा स्थापयतीयत्तामस्य वृद्धौ । भारते समायातानां विदेशीयानां विज्ञाने यत् सारभूतं तदस्माभिरात्मसात्कारि, काले काले ग्रीकानामायातानां विज्ञानतरोस्माभिर्मन्ये ज्योतिर्षिकैरिव सुविज्ञातः स्वभ्यस्तः स्वस्वशास्त्रकुक्षौ प्रवेशित आत्मीयतां नीतः । आर्वाणां हिकमत् सविवेक-

मस्माभिश्च लुकिता संस्कृता च मूलसिद्धान्तेष्वप्रतिविम्बितापि चिकित्सा प्रयोगे सूपयुक्ता च । अद्यापि बहवः सुगृहीतनामधेया वैद्यास्तां चिकित्सारीतिं स्वीकृतां पालयन्ति । भारते फिरङ्गप्लेगादयो नव नवा बहवो रोगाः कालक्रमेण प्रविष्टास्तथास्मदीयकित्सायां नवोपायसृष्टिः स्वाभाविकी, तथैव च देशान्तरागतक्रमाणां स्वीकरणं जीवितविज्ञानलक्षणम् । जीवन्नेव जन्तुराहारादिविभिन्नं पदार्थजातं पाचनक्रियया रसनिर्म्माणेन वृद्ध्यैश्चात्मसात्करोति । एवं पाश्चात्यचिकित्सायां यो योंऽशः सर्वोपकारी विज्ञानानुमोदितः स स बलादस्माभिरात्मीयतामुपनेयः, परं केवलं परकीयप्रवाहे नासमर्थैरिवोह्यमानैः स्वपदं त्याजम् । प्रत्यक्षशारीरं, शल्यकर्म्म, नवयन्त्रयोजनं, रसायनविधया नवरससारादिनिर्म्माणमिति यद् यन्नवं गुणाय तत्तत्सर्वं निजीकर्त्तव्यम् । अन्यत्र स्थितस्य गुणावहस्य ज्ञातव्यस्य हस्तगतीकरणं बुद्धिलक्षणं, सत्तमावशेषार्थं जायमाने जीवनसंग्रामे विजयार्हताचिन्हं च । तद्विरोधश्च यत्रास्मस्ततो न पदमग्रे चलिष्याम इति संक्षयलक्षणम् । तातस्य क्षारादेव कूपान्न पितरस्तर्पणीयाः । नवीनकृतीः परीक्ष्य बहूनां प्राचीनक्रियाणामसामयिकत्वमुद्वीक्ष्य ताः संस्करणीयाः । यो ह्य भूतमिति सोरस्ताडं व्याक्रन्दन्नेव तिष्ठति न तस्य कोऽऽप्यभ्युदयः सम्भवति । यश्च भूताद् वर्तमानं वर्त्तमानाद्भविष्यं स्वयं जनयति वितन्द्रश्च क्रामन्तं कालमनुयाति स जीवति जीवयति च ।

यद्यत् सम्मेलनेनानेनारब्धम्, यद् यच्च भवद्भिस्तत्रभवद्भिरुत्थापितम्, तत्र विघ्नेषु सत्स्वपि नास्ति नैराश्यस्यौदासीन्यस्य चावकाशः । गहनान्येव कर्माणि, श्रमकर्षिता एव च कर्मणां परिणामं मधुमयं पश्यन्ति । मा त्यजतारब्धम्—

न तत् तरेद्यस्य न पारमुत्तरेत्तद् हरेद् यत्पुनराहरेत् परः ।
न तत् खनेद्यस्य न मूलमुत्खनेन्न तं हन्याद् यस्य शिरो न पातयेत् ॥

इति भगवतो वेदव्यासस्य वचनं भवतामुत्साहमन्त्रमिव निवेद्य पुनरपि मयि कृतानामनुग्रहाणां स्वीकृतिं धन्यवादशतैः कुर्वन् स्वापराधक्षमापनं भिक्षमाणो निरन्तरं शास्त्रस्य शास्त्रानुयायिनां चाभ्युदयं नाथमानो विरमामि सदसोऽस्य कार्य्यान्तरविचारावसरदानाय—

भिषजां साधुवृत्तानां भद्रमागमशालिनाम् ।
अभ्यस्तकर्म्मणां भद्रं भद्रं भद्राभिलाषिणाम् ॥

सद्विद्यालिलितकला'प्रहर्षिणी' सा यद्राज्ये जयपुरभूरभूत्रितान्तम् ।
श्रीश्रीमानखिलनरेन्द्रनन्दितश्रीः सानन्दं जयतुतमां स माधवेशः ॥



श्रीमान् स्व. बा. कविराज यामिनीभूषणराय कविरत्न एम् ए एम् बी.
प्रिन्सिपल अष्टांग आयुर्वेदविद्यालय कलकत्ता।
अध्यक्ष नि. भा. व. वैद्यसंमेलन मद्रास (सन १९१५)।

# A Short life-sketch of the late Kaviraj Jaminibhushan Ray, Kaviratna, M. A., M. B., M. R. A. S, Fellow of the Calcutta University.

The Patron-Saint and founder of Jaminibhushan Ashtanga Ayurveda College and Hospital an epoch-making contribution to the holy cause of Ayurveda-will ever remain enshrined in the hearts of his grateful countrymen. His pioneer work is a distinct landmark in the history of Ayurveda. He founded this institution to revive the eight branches of Ayurveda by modern methods of research and experiments and that the foundation was well and truly laid is amply borne out by the rapid strides and phenomenal expansion of the institution.

Kaviraj Jaminibhushan Ray was born in 1879 at Payogram in the district of Khulna. His revered father, the late Kaviraj Panchanan Ray Kavichintamani, was an erudite Sanskrit scholar and an able and leading Ayurvedic Physician of Bhawanipur, Calcutta. He trained nearly 500 pupils in Ayurveda, most of whom have been the torch-bearers of Ayurveda in various parts of India. His charity and saintly character were almost proverbial. Jamini Bhushan imbibed the noble qualities of his father right from his boyhood and was destined for a monumental self-sacrifice' His father passed away in 1904 at the age of 61.

Jamini Bhushan has his early education in the village school of Payogram and later continued his studies in the South Suburban School at Bhawanipur. His father did not fail to teach him Sanskrit along with his Western education. After passing the Entrance Examination he joined the Government Sanskrit College and studied upto M. A. In 1900 he joined the Calcutta Medical College and while being a student there passed the M. A. examination in Sanskrit. He completed his M. B. Course in 1905. He was the recipient of a gold medal and a first.class certificate of honour for his high proficiency in Midwifery and diseases of women. He studied Ayurvedic medicine under his father side by side with the study of Western medical science. After the demise of his dear father he completed the study of Ayurveda under the kind tutorage of Mahamahopadhyaya Kaviraj Bejoy Ratan Sen, the then leading Ayurvedic Physician.

In 1906 he began to practise the Ayurvedic system of medicine in Calcutta and founded the Vaidvaraj Pharmacy, in which he,

perhaps for the first time, tried to systematize and standardize Ayurvedic medicines with scientific methods and precision. The Vaidyaraj Pharmacy stands today as a monument to his scientific out-look and tireless energy in the domain of Ayurveda. His success was immediate and phenomenal. Perhaps no other physician earned so much within such a short period of time as Jamini Bhushan did. His name and fame were not confined to different parts of India but they rapidly spread over seas. His services were often requisitioned by the Darbars and Indian Chiefs e. g. Gwalior, Indore, Balarampur etc, and his remarkably successful treatment was gratefully acknowledged by thousands of his Indian and European patients.

But Jamini Bhushan's Dream—the Vision of tomorrow—the Ideal of revivified Ayurveda to its pristing glory—was yet to be realised. Nothing daunted Jamini Bhushan organised and founded in 1916 the Ashtanga Ayurveda College and Hospital in a rented house in Calcutta. He was the life and soul of the institution and was appointed its first Principal. He opened his purse-strings to make it worthy of his ideal. His energy and perseverance worked wonders. The dream of Jamini Bhushan was partly realised when the foundation stone of the College and Hospital was laid by Mahatma Gandhi on the 5th May, 1925. A Commodious four-storeyed building was constructed on a large plot of land of which I Bigha 21 Cottahs was kindly given by the Corporation of Calcutta on 99 years lease at a nominal rent and the rest purchased by the institution. The cost of construction amounted to about Rs 1,25000/- of which Rs 70000/- was paid by Jamini Bhushan during his life time. The Hospital has accommodation for 125 beds of which 106 are in use at present and in full working order. The College has on its rolls more than 300 students who hail from every part of India and Cylon. The College is equipped with a Library, an Anatomical Museum, a Drugs Museum, a Surgical Museum, a Pathological Museum, a Pathological and Research Laboratory, an up-to-date Dissection Hall with accommodation for 200 students, a Post-mortem Room, an Out-Door Dispensary with an average daily attendance of more than 300 patients; and last but not the least the unique Tuberculosis Hospital in the garden-house at Patipukur, which was one of the many bequests to the Hospital by its founder. The place is 4 acres in area and is open on all sides for miles. Jamini Bhushan lived and died for the Institution. May the Institution keep up the noble ideal and tradition of its founder!

He was an elected Fellow of the Calcutta University, member of Royal Asiatic Society, member of the Calcutta Medical Club and various other institutions. He was an erudite Sanskrit scholar. He

was the author of "Salakya Tantra" the treatise on ear and throat diseases "Prasuti Tantra" the diseases of woman, "Bisha Tantra", toxicology and some others. The books were highly spoken of by the profession and the public. He was Fellow and Examiner of Benares Hindu University and of various other Boards and Universities.

He was elected President of the All India Ayurvedic Conference held at Madras in 1915. This is the highest honour that can be conferred upon a devotee of Ayurveda. His was a triumphant march from Calcutta to Madras. Thousands gathered at way-side stations to have 'darshan' of Jaminibhushan. His Presidential address was masterly from every point of view and was highly appreciated.

But Jamini Bhushan was not destined to live long. His professional work and particularly his tireless labour in connection with Ashtanga Ayurveda College and Hospital told upon his health. He passed away peacefully on the 11th August, 1925 at the age of 47. On the preceding evening of his death he made his last Will, in which he bequeathed almost all his assets to Ashtanga Ayurveda College and Hospital. His monumental sacrifice sent a wave of thrill throughout the length and breadth of the conuntry. After his death his name was gratefully associated with the Ashtanga Ayurveda College and Hospital.

He left behind him his mother, the widow, a brother, 2 daughters and 4 sons, the eldest of whom Kaviraj Bejoy Bhushan Ray Kaviranjan, B. Sc., has been practising as an Ayurvedic Physician and following the foot-steps of his illustrious father.

The sacred name of Jamni Bhushan will go down in the history of Ayurveda as the pioneer in its development, a faithful servant of Ayurveda and as a lover of humanity. Jamini Bhushn is dead, long live Jamini Bhushan. Requiescat in Paco.





# The Seventh All-India Ayurvedic Conference & Exhibition Madras.

( 1915 )

## THE PRESIDENT'S ADDRESS.

I bow to the feet of the Protector of the Universe the Lord Almighty, who disports Himself by manifesting Himself in the shape of the Universe and then distroying it; who is the creator and the creation; who is alike the fire that burns and the offering that is burnt, the-eye that sees and the object that is seen, the ear that hears and the sound that is heard, the being that eats and the food that is eaten, the leg that walks and the path that is trodden, the hand that receives, and the thing that is received, who creates by displaying the *Satva guna*, preserves by displaying the *Rajas guna* and destroys by displaying the *Tamas guna*; and who is eternal and unwasting.

I bow to the feet of my father in Heaven to whose grace I owe this human existence, the best in creation; who is my *Svarga*, my *Dharma* and my supreme *Tapas*; and whom I look upon as God incarnate in this world of mortals.

I bow to the feet of my revered preceptors to whom I owe what little knowledge I possess, and by whose grace I have obtained admission into the high and holy shrine of *Saraswati*.

I bow to the sages of holy memory who created Ayurveda, and to their successors, both in the ancient and modern times, who have done so much to preach the great science and to further its cause.

And lastly, I offer my respectful greetings to the learned gentlemen who at enormous sacrifice have come from all parts of India to attend this Conference.

Gentlemen, I thank you heartily for the honour you have conferred on me by granting me the proud priviledge of presiding over this great function. I wish, however that your choice had fallen upon a worthier person. I feel extremely diffident as to my capacity to successfully perform the task you have been pleased to place in my

hands. What with the nature of my occupation and you all know, gentlemen, how imperative are the demands which a physician's work makes upon his time and energies—and what with the fact that your gracious command reached me only a short time ago, I have not been able to equip myself sufficiently to discharge the duties of this great office to your satisfaction. And I earnestly pray that you will forgive me my short-comings.

Before we proceed to discuss the noble object of this the great assembly there is another subject to which we cannot help making a reference—the great war in Europe, the war declared against our gracious and beloved sovereign, Emperor George V. by a powerful, unscrupulous and relentless enemy, the present trouble with which the British Empire is faced there is not a single heart in the whole of India from which is not daily going forth a prayer to the Lord on high for the success of the British Flag which stands for righteousness and the utter destruction of German militarism which is now devastating Europe. We also heartily pray for His Majesty's speedy recovery from the effects of his recent unfortunate accident.

The present joyous occasion calls up to my mind, gentlemen, the sweet and serene faces of those great and good men, especially the late Kaviraj Taraprasanna Sen, who have given to the cause of Ayurveda of their best and who have never spared time or money or labour to make the Ayurvedic Conference a success. They lived and worked amongst us only upto yesterday, as it were, but where, Oh! where are they today? What would we not give "for a touch of the vanished hand and the sound of the voice that is still!" Their life's work has been well done, their battle has been well won, their race has been well run, and now they are at rest in Abode of Eternal Bliss. But parted though they have been from us, yet they are to memory dear, and the spirit which they have infused into us will guide us along the path trodden by them and will help and encourage us, and those who are to come after us, in our efforts to complete the work so well begun by them. May their souls rest in peace!

And, lastly, this meeting conjures up before my mind a picture of the assemblage held in remote ancient times at the foot of the Lord of Mountains, the Himalaya, Atreya, Kasyapa, Bhrigu. Agastya, Gautama, Bhardwaja, Maitreya and others, in comparison with whom we are mere pigmies though we feel it to be a privilege to have been able to make an effort, in our own humble way, to follow in their illustrious footsteps. Theirs is the voice which from afar has summoned us to this great undertaking; they are the Pole Star which will guide the course of our ship; their noble example of self-sacrifice will be

our ideal. We have met here today not for self-aggrandisement but for self-sacrifice in the service of our fellow beings. The task we have undertaken is one that is to be accomplished not by a display of oratory but by deeds. We all know how the Lord Almighty assumed the form of a fish for rescuing the Vedas from the cataclysmic floods. We call upon every one of our countrymen in whom there is still alive even the tiniest spark of pride in the glorious tradititons of this blessed land which was the first to be illumined by the light of knowledge, to be prepared, like the Rishis of holy memory, to sacrifice his own self for the sake of suffering humanity.

Looking back through the vista ages into the remote days of hoary antiquity we find our saintly Rishis performing the severest austerities and preaching the Vedas, the Vedanta, the Upanishads, Astronomy, etc. Then for ages after the peoples of other countries were naked savages leading the life of wild beasts. It is not known whether the civilising of those barbarous peoples was due to any influence from India; but it is certain; and in fact, it is frankly admitted by every savant in the world, that the rudimentary principles of almost every science had their origin in this country. There is ample evidence to prove that the root principles of the science of medicine were first preached in Arabia by Indian physicians and professors, and that the *Charaka* and the *Susruta* were translated into the Arabic language. From Arabia, Ayurveda travelled through Egypt to Greece, thence to Rome, & from there, again, spread all over Europe, and gradually throughout the world. Of course, the principles of Ayurveda do not any longer retain their original shape, but transformed and developed and named afresh by different peoples in different countries they have given birth to various systems of medicine. Many Western savants have expressed their opinions in this connection and I may cite a few of them here.

Dr. A. F. R. Hoernle, M.A., Ph. D., C.I.E., says in his *Studies in the medicine of ancient India* :—

"Probably it will come as a surprise to many, as it did to myself, to discover the amount of anatomical knowledge which is disclosed in the works of the earliest medical writers of India. Its extent and accuracy are surprising when we allow for their early age, probably the 6th century before Christ, and their peculiar methods of definition. In these circumstances, the interesting question of the relation of the medicine of the Indians to that of the Greeks naturally suggests itself. The possibility, at least of a dependence of either on the other cannot well be defined when we know as an historical fact that two Greek physicians, Ktesias about 400 B. C., and Megasthenes about 300 B. C.

visited and resided in Northern India." Next, in his *History of Medicine* Dr. Max Neuburgher writes:—"That Greeks Medicine adopted Indian medicaments and methods is evident from the literature. The contact between the two civilisations first became intimate through the march of Alexander, and continued unbroken throughout the reign of Diadu-chi and the Roman Byzantine eras. Alexandria, Syria and Persia were the principal centres of intercourse. Indian physicians' means and methods of healing are frequently mentioned by Greeks. Roman and Byzantine authors as well as many d i s e a s e s, endemic in India, but previously unknown. During the rule of the Abbasides, the Indian physicians attained still greater repute in Persia whereby Indian medicines became enrgrafted upon the Arabic, an effect which was hardly increased by the Arabic dominion over India. Indian influence, in the guise of Arabic medicine, was felt anew in the West. The apparently spontaneous appearance in Sicily, in the 15th century, of Rhino-plastic surgery bespeaks a long period of previous Indo-Arabian influence. The plastic surgery of the 19th century was stimulated by the example of Indian methods the first occassion being the news, derived from India, that a man of the brick-maker caste had by means of flap from the skin of the forehead fashioned a substitute for the nose of a native."

It is here that we find unmistakable evidence of the pre-eminence of Ayurveda over other systems of medicine which all owe their origin to it, though, unfortunately, many Western physicians, and even Indians practising the Western system of medicine, look down upon Ayurveda with contempt. Even the science of Surgery had its birth in India.

Ignorance of Ayurveda has on more than one occasion led Western physicians and medical writers to draw erroneous conclusions. For instance, Dr. Willian T. Councilman, M. D., says in *A System of Medicine*, a work edited by Doctor Osler and Macrae, that "the first description of the disease, small-pox, which leaves no doubt as to its nature, is given in the wellknown treatise by Rhazes in the 10th century." But the fact is, that long before this time the symptoms and treatments of *Masurika* ( small-pox ) were discussed in the *Charaka* and the *Susruta*. And it is due to his ignorance of this fact that is responsible for the erroneous and misleading conclusion which Dr. Councilman has arrived at. It should, therefore be the duty of this Conference to point out all such errors and omissions with the help of evidence and thus uphold the glory of Ayurveda. I am sure that the writers who have been led into such mistakes will rectify them as soon as they can be convinced of the real truth.

It is a matter for congratulation that many Western medical men have been able to realise the greatness of Ayurveda. The illustrious surgeon, Sir Havelock Charles, when Professor of the Calcutta Medical College, often used to say to his pupils, "I am only repeating to you what the Aryan medical science preached two thousand years ago and am reproducing to you only a small fragment of the lesson taught by Charaka", And the great regard Sir Havelock has for the Vedic system of medicine is shown by the extract from *Charaka* which is on the marble tablet placed by him on the wall inscribed opposite the staircase in the Calcutta Medical College. Dr. Clarke of Philadelphia observed after a perusal of the English translation of *Charaka* :—"If the physicians of the present day would drop from the Pharmacopœa all the modern drugs and chemicals and treat their patients according to the methods of *Charaka*, there will be less work for the undertakers and fewer chronic invalids in the world". Speaking of the same work Dr. Paul Bartholomew says:—"I have been exceedingly struck with the profound meaning of many passages which indeed go beyond anything that I met before in medical literature."

The above extracts, scanty though they may be in comparison with the greatness of Ayurveda, conclusively prove that many Western medical men have realised in part at least, the glorious position which that system of medicine occupies in the world.

Let us now, gentlemen, try to appraise the gems that are to be found in the vast ocean of Ayurveda.

First, the Ayurvedic system of medicine is divided into 8 parts, namely, *Salya*, ( Surgery and Midwifery ), *Salakya* ( treatment of the diseases of the eyes, the ears, the throat and the nose ), *Kayachikitsa* ( Treatment of the diseases of the body ), *Bhutabidya* ( exorcision ), *Kaumarâbhritya* ( Pædiatrics, *i e*, treatment of the diseases of children as well as their nursing), *Agadatantra* ( Toxicology), *Rasayana* (medicines for the prolongation of life ) and *Vajikarana* ( aphrodisiacs ). Is there any other medical science in the world which has or can ever have excellent divisions ?

Secondly, the Ayurvedic theory of the three humours of the human body, *Vayu*, *Pitta* and *Kafa*, on the conditions and proportions of which, as we all know, the physical and mental health depends. I need not dwell on this subject at length for it has been very elaborately dealt with by my predeceesssors in the Ayurvedic Confernce; but I may mention here that Western medical science also admits, though indirecty, the correctness of the theory. *Vayu*, *Pitta* and *Kafa* are the three forces on which the health, disease and decay of the human frame depends. The internal and external functions of the body

are ruled by *Vayu*. According to Western physiologists, the functional activity of the body is carried on and controlled by the nervous system whose energy, or nerve-force, as it is called, and this is spoken of as *Vayu* in Ayurveda, Western medical science has not been fully satisfied with the definition of *nerve* and we find Mr. M. Kendrick writing in his article on physiology in the *Encyclopaedia Britanica* that "the nerve may be regarded as the conductor of a mode of energy, which for want of a better term is termed nerve-force." Western science has not, however, succeeded in coming to such a definite conclusion about the other two humours, *Pitta* & *Kafa* though they have got a faint idea of their existence. Dr. Foster says in his work on physiology:—

"The animal body dies daily, in the sense that at every moment some part of its substance is suffering decay, is undergoing destruction. Combustible in the ordinary sense of the world an animal body is not, by reason of the large excess of water which enters into its composition, but an animal body thoroughly dried will, in the presence of Oxygen, burn like fuel and give out energy and heat."

And this is but a repetition of what Ayurvedas said ages ago. The world *Sarira* literally means a thing that is undergoing decay at every moment.

The function of *Pitta* is to consume the body like fire; while that of *Kafa* is to preserve it from this combustion, Indeed, Ayurveda very aptly compares *Pitta* and *Kafa* to the Sun and the Moon. Thus it would not be wrong to say that Western medical science admits in a way the existence of the three humours *Vayu*, *Pitta* and *Kafa*.

Another fact which lifts Ayurveda high above all other systems of medicine and places it on a level of its own, is the most wonderful knowledge of pulse which it imparts. Diseases, whose diagnosis baffles the attempt of Western medical men with all their numerous and delicate instruments, are in most cases ascertained by Ayurvedists simply by examination of the pulse. It is a fashion with many persons. who take pride in parading their knowledge, to ridicule the theory of modification of pulse-beats by food. The ignorance of such persons need not be explained to the members of the medical profession, but to those among the audience who are not medical men, I may say that the truth of the theory may be easily proved by making a man who ordinarily lives on a vegetable diet, eat animal food and then feeling his pulse, which will show a marked difference from its usual nature. The physician who is skilled in the examination of the pulse can easily make out thereby the kind of food a man has taken.

But this wonderful knowledge is not to be acquired so easily.

The great Rishi *Kanada* says in the concluding chapter of his treastise on pulse:—

"There is no royal road to the acquisition of the knowledge of pulse-beats, and intelligent persons will see that my attempt to explain the different characters of the pulse by comparing them to the various styles of locomotion of different animals is but impertinence. This is a knowledge not to be acquired by reading or teaching but only by actual continual practice, by Yoga, and ouly the man gifted by God is capable of attaining it."

I shall now briefly discuss different departments into which Ayurveda is divided, and try to explain their excellence.

The first subject dealt with by *Susrutta* is Surgery and Midwiferv. It has been said:—

"The extraction of various kinds of grass, wood, stone, dust-particles. fragments of iron, bits of concrete, bone, hair, nails, foetus pus, and other discharges from the body the application of blunt and sharp instruments, alkalis and actual cautery, and also the diagnosis of different kinds of wounds, are dealt with in *Salyatantra*."

It is a common idea that Ayurveda has got no system of Surgery and Midwifery, or at the best has got it in great imperfection. But Ayurveda itself gives this system preference to the other departments because of the quick results obtainable from it, because it teaches the use of instruments, alkalis and actual cautery, and because it also contains accounts of other branches of the medical science. The *Susruta-samhita* mentions eight kinds of surgical operations, viz., 1. 'Chhedana'. i.e., complete removal of a part of the body by operation as for example, removal of piles, excision of bone. etc. The instruments used are *Bridhipatra* ( a knife like a razor ) *Nakhasastra*, (nail trimmer) *Karapatra*, ( saw ) *Mudrika* ( finger-shaped knife ) *Utpalapatra* ( a knife shaped like a lotus-petal ) and *Ardhadhara* ( a single edged knife ); 2. Bhedana i.e. incision as for example, of an abscess. The intruments required are the same as above; 3. Lekhana i.e., sacrification, or dissection of a skin flap, or, scraping, This is used in cases of *Rohini* ( a kind of inflamatory disease of the throat), *piles* enlarged tonsils, fleshy tumours, sinus, etc, The instruments required are *Mandalagra*, (a round edged knife ) and *Karpatra*. 4 *Bhedana*, i.e; puncturing by sharp and pointed instruments, viz., *Vrihimukha*(a trocar), *Kutharika* (a small axe-shaped instrument) and *Suchi* (a needle-shaped instrument) *Arc.*(an awl), *Velasapatraa* (a lance-shaped instrument). This is used in venisection and tapping in cases of Ascitis and Hydrocele. 5. *Eshana* (i.e , probing) with an instrument called *Eshani*(probe). This is used in cases of sinus and fistula, and also for searching foreign bodies in a wound. 6. *Aharana*

दृशाः महिमानस्सन्तीति लोकैश्च विज्ञायेत। देशीयवैद्यनिपुणैरितोप्यधिकश्रद्धां वहद्भिः एकाग्रतया तदुचितेषु कृत्येषु यत्नः करणीयः।

## विज्ञानं तद्भेदाश्च।

लोके विज्ञानं च विद्याकलाभेदेन द्वैविध्यमापद्यते। तयोः प्रथमा वाङ्मयाधीना। द्वितीया च वाङ्मयाभिवृद्धिं पारिश्रमिकाभिवृद्धिं वस्तुप्रदर्शनानि च आश्रिता। आयुर्वेदविज्ञानं तु द्वितीयान्तर्भूतम्। तत एतदभिवृद्धये रसशालाभिधानानि कर्मागाराणि वस्तुप्रदर्शनागाराणि च आवश्यकतामापद्येरन्।

## आयुर्वेदस्य कलात्वप्रतिपादनम्।

सुप्रसिद्धनीतिशास्त्रकोविदः शुक्राचार्यः चतुष्षष्टिकलाः विभज्य प्रदर्शयन् तत्र आयुर्वेदविद्यासम्बन्धिनीः कलाः दशेति निरणैषीत्।

तत्रच "पाषाणधात्वादिद्रुतिः तद्भस्मीकरणं कला। धात्वौषधीनां संयोगक्रियाज्ञानं कला स्मृता। धातुसाङ्कर्यपार्थक्यकरणं तु कला स्मृता। संयोगपूर्वविज्ञानं धात्वादीनां कला स्मृता। क्षारनिष्कासनज्ञानं कलासंज्ञं तु तत्स्मृतम्" इति तद्भेदाः निरूपिताः।

एवमेव वात्स्यायनमहर्षिविरचितेषु कामसूत्रेष्वपि "सुवर्णरत्नपरीक्षा" "मणिरागकरज्ञानं" "धातुवादः" एवमादिकैः सूत्रैः वैद्यसम्बन्धिन्यः कलाः निरूपिताः, एवमादिभिरनेकैः प्रमाणैरायुर्वेदविज्ञानस्य कलान्तर्गतत्वं निश्चितं भवति। अत्र प्रतिपादितानां भेषजानां निर्माणं कलान्तर्भूतमिति सर्वविदितमेव।

कलान्तर्भूतमेतद्वैद्यविज्ञानं तर्कव्याकरणादिकमिव न केवलेन वाग्जालप्रसारणेन चरितार्थतामापद्यते। अपितु अत्र यदुक्तं तत्कर्मणा निर्वर्त्यैव निर्धारणीयम्। यत्कर्मणा निर्वर्तितं तत्प्रयोगेन फलयुतमभिज्ञेयम्।

लक्ष्यलक्षणविशिष्टोऽयमायुर्वेदः, एवं भूतैः परिशोधनैरेव वृद्धिमुपनीतः प्राचीनैरिति तत्तद्ग्रन्थपर्यालोचनेन विज्ञायते।

## रसशालाः।

सर्वौषधसंपादनक्षमे रम्ये प्रदेशे रसशाला निर्मातव्या। सा च प्राचि उत्तरे ईशान्ये वा दिग्भागे सावरणा सुकृपा परस्पराबाधकतत्तद्विभागविशिष्टा च कार्या।

## रसशालायां पदार्थस्थापननियमाः।

तत्र प्राच्यां दिशि रसकर्माणि आग्नेय्यां च पुटकर्माणि दक्षिणायां पाषाणकर्माणि नैऋत्यां च शस्त्रकर्माणि पश्चिमायां क्षालनकर्माणि वायुदिशि शोषणानि उत्तरस्यां च वेधनानि कर्तव्यत्वेन नियम्यानि।

ईशान्ये भागे सिद्धौषधानां प्रतिष्ठापनं कार्यम्। एतदौषधसिद्धिसाधनभूतानि—नालिकायन्त्रं, सोमनालयन्त्रं, वालुकायन्त्रं, विद्याधरयन्त्रं, गोस्तनमूषा, अन्धमूषा, भस्त्रिका,

कोष्ठी, सत्त्वपातनकोष्ठी, चालनी, खल्वादीन्युपकरणानि, कषायादीनि द्रव्याणि, तैलादि-द्रव्याणि चेत्येतादृशानि। खनिजप्राणिजोद्भिज्जरूपं पदार्थसामान्यं सज्जीकृत्य अत्र प्रतिष्ठापनीयम्।

एवमेतादृशौषधनिर्माणपरिशोधनविधानोपयोगिरसशालानिर्माणविधानानि रसरत्न-समुच्चयादिरसतन्त्रनिरूपकेषु ग्रन्थेषु प्रदर्शितानि।

## परिशोधनानि।

एतत्कालिकाः पाश्चात्यपण्डिताः पदार्थतत्त्वं सुष्ठु परिशोध्य परिशोधितान् विषयान् सिद्धान्तीकृत्य प्रकटयन्तीति सर्वविदितमेव। एवमेव प्राचीनार्यविज्ञानधुरीणाश्च सुपरि-शोधितानेव विषयान् सिद्धान्तीकृत्य प्रकटयांचक्रुरिति अनेकानि निदर्शनानि अवबोध-यन्ति। तानि च—

"स्वहस्तेन कृतं सम्यक् जारणं न श्रुतं मया" "स्वहस्तभवयोगेन कृतं सम्यक् श्रुतेन हि" "धातुबन्धस्तृतीयोऽसौ स्वहस्तेन कृतो मया" "दृष्टप्रत्यययोगोऽयं कथितो नात्र संशयः" इति रसार्णवे, "यद्यद्गुरुमुखाज्ज्ञातं स्वानुभूतं च यन्मया। तत्तल्लोक-हितार्थाय प्रकटीक्रियतेऽधुना" इति रसरत्नाकरे च प्रतिपादितम्। एतद्ग्रन्थपर्यालोचनया अस्मत्प्राचीनवैद्या अपि यद्यत्स्वहस्तेन कृतं दृष्टं स्वानुभवेन प्रत्ययपात्रतामुपलब्धं च तमेव विषयं प्रकटीकुर्वन्त आसन्निति सुस्पष्टमेवावगम्यते।

## सिद्धौषधपरीक्षा।

सिद्धानां भस्मसिन्दूरादीनामौषधानां परीक्षणविधानानि च अंगुलिवद्धे रेखापूर्णता जलप्लवनं पञ्चमित्रसंयोगेन अपुनर्भवः, इत्यादिभिर्विज्ञायमानानीन्त आसन्नित्यायुर्वेद-विदां सुविदितमेव।

खनिजादिसंयोगविशेषसिद्धानां लोहसिन्दूरवसन्तकुसुमाकरादीनां दिव्यौषधानां सुसिद्धत्वाद्यवबोधकाः परीक्षापद्धतयः अधः प्रदर्शितैः केलदिवसवराजविरचित शिवतत्त्वरत्नाकरस्थश्लोकैरेतैरवगम्यन्ते—"रसौषधानि सर्वाणि त्वग्निमध्ये विनिक्षिपेत्। किञ्चिद्गन्धं धूमयुक्तं रसयुक्तं सुपाचितम्। न ज्ञायते गन्धरसमतिपाकमनौषधम्। वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति। घर्षणे रक्तवर्णं स्यात् सिन्दूरं तत्प्रशस्यते। चाम्पेयकुसुमाभासं तद्गन्धेन च संयुतम्। लघुवारितरं श्लक्ष्णं वसन्तकुसुमाकरम्। बृहतीकुसुमाकारं लघु वारितरं गुरु। घर्षणे कृष्णवर्णं स्यात् तन्मृगाङ्कस्य लक्षणम्," एवमादिभिः पद्यैः सिद्धौषधान् अग्निनिक्षेपजनितधूमेन वर्णविशेषेण घर्षणेन तोलनेन च जानन्त आसन्निति विज्ञायते।

## लोहद्रवशंखद्रवादिपरीक्षा।

द्रवरूपाणां शङ्खद्रवलोहद्रवादीनां शक्तिपरीक्षणविधानान्येवं प्रदर्शितानि—

"लोहसूचीं समादाय लोहद्रावे विनिक्षिपेत् । तत्क्षणान् द्रवतां याति सा सूची नात्र संशयः । ताम्रद्रावे तथा सूचीं सन्धिभेदां विनिक्षिपेत् । सूचीद्रावो याममात्रान् भवत्येव न संशयः । शङ्खद्रावे शङ्खसूची चतुर्यामेन संद्रवेत् । एवं परीक्षां कृत्वादौ प्रयोगानारभेद् ध्रुवम्" इति सुवर्णयन्त्रस्य द्वितीये कल्पे प्रत्यपादि ।

उपरिनिर्दिष्टेभ्यः परीक्षाविधानेभ्यो भिन्नास्तैललेह्यघृतादीनां सुपक्वापक्वादिपरिज्ञानोपायाः आत्रेयभेषजकल्पादिषु सुबोधिताः ।

## विमर्शकसभाः ।

एतादृशानां विमर्शनानां विधानानि पूर्वोदितरसशालासु प्रयोगपूर्वकविज्ञानेन विद्वद्वैद्यपरिषत्सु चर्चापूर्वकविमर्शनेन कुर्वाणा आसन् । अत्र विषये चरकसूत्रस्थानान्तर्गते आत्रेयभद्रकाप्यीये अध्याये प्रोक्तरसविषयकप्रस्ताव एकं प्रमाणम् । तत्रहि—आत्रेय, पूर्णाक्ष, काङ्कायन, बाह्लीक निमि प्रभृतयः केचन महर्षय एकत्र संभूय द्रव्यसामान्यनिष्ठं रसमुपादाय तस्य तस्याभिप्रायं सूचयन्तः तत्तत्पश्चात् सयुक्तिकं परामृश्य रसस्य मधुरादिभेदेन षड्विधत्वं निरणैषुः, इति विज्ञायते ।

अन्यच्च चतुर्दशोत्तर अष्टशततमे ( 814 ) क्रैस्तवशकाब्दे राष्ट्रकूटवंशीय श्रीकुलोत्तुङ्गचोलेश्वरास्थानविद्वद्वैद्येन उग्रादित्याचार्येण कुम्भदन्तहस्तचारिप्रभृतिकैः चत्वारिंशत्संख्याकैः भिषग्भिरुपसाधिते महासदसि मांसाशनमनर्हमिति प्रतिपादयता उपनिबद्धं प्रसङ्गमुद्दिश्य एवं प्रपंचितमस्ति कल्याणकारके ग्रन्थे—"ख्यातश्श्रीनृपतुङ्गवल्लभमहाराजाधिराजास्थितः प्रोद्यद्भूरिसभान्तरे बहुविधप्रख्यातविद्वज्जने । मांसाशिप्रकरेन्द्रिताखिलभिषग्विद्याविदामग्रतः । मांसे निष्फलतां निरूप्य नितरां जैनेन्द्रवैद्यः स्थितः" इत्येवमादीनि बहूनि प्रमाणानि सन्ति ।

## पदार्थपरिज्ञानम् ।

आयुर्वेदपदार्थतत्त्वविदः प्राञ्चः सर्वमपि सृष्टिस्थं पदार्थजातं खनिजप्राणिजोद्भिज्जिभेदात्त्रिधा व्यभजन् । एतत्त्रिविधसृष्ट्यन्तर्गतादपि पदार्थजातात् तत्तद्दोषप्रकोपजातानां रोगाणां शामकान् पदार्थविशेषान् स्वज्ञानगरिम्णा अबोधिषुः । त एव ओषधिविशेषाः भेषजानीति व्यवह्रियन्ते । तादृशौषधिपरिज्ञानविशेषबोधको वृक्षायुर्वेदाख्यश्च आयुर्वेदभागः आसीदिति विज्ञायते । सोऽद्य विरलप्रचारोऽभवत् । अग्निपुराणादिषु व्याख्यानविशेषेषु कार्मणादिषु ग्रन्थेषु च प्रतिपाद्यमानः अस्य विज्ञानस्य कश्चिद्भागः तत्रतत्र उपलभ्यते । किञ्च "गोपालास्तापसा व्याधाः ये चान्ये वनचारिणः । मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते" इत्यादिभिस्सुश्रुतादिवाक्यैः प्राञ्चो गोपालादिसहायेन प्रमाणवर्णाकृतिनामभेदभिन्नमोषधिजातं संस्कृतप्राकृतादिनामभेदैः स्पर्शनेन दर्शनेन च सम्यक् ज्ञात्वा जातिलक्षणादिभिर्लक्षयित्वा अबोधिषुरिति; एवमुपलक्षिता ओषधीः प्राणिनां असकृदुपयुज्य तदनुभववशेन पदार्थगतान् रसगुणवीर्यविपाकप्रभावरूपान् दोषसाम्यापादनदोष-

जरोगनाशनरूपांश्च गुणविशेषान्, दीपनी, पाचनी, ग्राहिणी, स्रंसनी, अनुलोमनी, स्तम्भनी, प्रभृतिकान् शक्तिविशेषांश्च अबोधिषुरिति च विज्ञायते ।

अद्यतनैस्तु पाश्चात्यपदार्थशास्त्रविद्भिः आल्कलैन्, स्टार्चि, कार्बोनैट्, नैट्रिक्, ग्लोटेड्, प्रभृतिकैः विभागैः विभज्यते । एवं पदार्थविभाज्यविभेदविनिर्णये विषये प्रायशः पाश्चात्यपदार्थविज्ञानपण्डितानां प्रक्रियाभेदः पारिभाषिकशब्दविभेदश्च सन्दृश्यते, तथापि ज्वरनाशकत्वशोषनाशकत्वादिकं तु फलितं विषयमुभयत्र समानमेव ।

अस्मदीयाः प्राच्य आर्याः वस्तुतत्त्वं रसशालासु आरोग्यशालासु परिषत्सु च प्रयोगैः विमर्शनैश्च निश्चित्य सिद्धान्तयन्त आसन्निति प्राक् प्रतिपादितम् ।

एतादृशपरिशोधनविधानानि परिशोधनशालाश्च अद्य न कुत्रचिदुपलक्ष्यन्ते । सर्वा अपि पूर्वनिबद्धाः एतादृश्यः परिशोधनापद्धतयः अस्तं गताः ।

तदद्य पाश्चात्यविज्ञानधुरीणैरुपकल्पितान् मार्गाननुसृत्यैव आयुर्वेदीयपदार्थपरिशोधनकरणमुचितं भवेत् । पदार्थतत्त्वनिर्णेता कश्चन मार्गः अद्यास्माकमावश्यकः किल ? स च प्राच्यो वा भवतु प्रतीच्यो वा । नात्रास्माकमाग्रहः ।

एतन्मार्गावलम्बेन चरकाद्युक्तानां पदार्थानां गुणविशेषाल्लोके यथावा ज्ञातुमवकाशः सम्पद्यते तथा प्राचीनग्रन्थाप्रतिपादितानां केवलमुपदेशपरंपरया उपयुज्यमानानां तत्तत्प्रदेशभागमात्रप्रसिद्धानां "वालुड्, गोलिमिडि, नानुवाल, मुदर्खेड, वोफेन, समुद्रपाल" प्रभृतीनां आंध्रदेशप्रसिद्धानां, "कानांजिडि, नोणा, चिन्नियलै, शिवनारिवेंबु" प्रभृतीनां द्रविडदेशप्रसिद्धानामुत्तमवस्तूनांच ग्रन्थोपनद्धता च सम्भविष्यति । विज्ञानं च वर्धिष्यते ।

एतादृशान्यपि परिशोधनागाराणि एतावत्पर्यन्तं भारते न कुत्राप्युपनिबद्धानि दृश्यन्ते, लोपश्चायं सुप्रसिद्ध बोंबापुरगर्भमुक्ताफलैः ताताकंपनीकैः परिपूरितः । तस्मिन् परिशोधनालये देशीयौषधिविशेषानपि परिशोधितुं यत्नः क्रियत इति श्रूयते, यद्येवं तर्हि आशास्महे सोऽयं परिशोधनालयः एतस्मिन् परिशोधनकर्मणि सम्यगुपयुक्तः भारतस्य नितरामुपकुरुतादिति ।

## पदार्थाः संदेहास्पदाः ।

आयुर्वेदतन्त्रेषु प्रतिपादितानां द्रव्याणां त्रिविधानामपि नामजात्यादिसन्दर्भे अज्ञत्वसन्दिग्धत्वादिकाः दोषाः बहुश उपलक्ष्यन्ते । एते च सुज्ञसत्परंपराविनाशसंलब्धाः, गतपञ्चदशोत्तरे एकोनविंशतिशततमे ( 1915 ) वत्सरे चेन्नपुर्यां मन्त्रिरीढाणप्रवृत्तस्य आयुर्वेद वस्तुप्रदर्शनस्य विमर्शनायां मया प्रदर्शितेषु केचिदिह प्रदर्शयिष्यन्ते ।

रसतन्त्रोदितेषु रससाधारणरसादिभेदभिन्नेषु खनिजेषु वैकान्तरसकौ सन्दिग्धदशामापन्नौ । अञ्जनविमलचपलकंकुष्ठाग्निजाराणां तु अदृश्यतैव ।

एवं धन्वन्तरिनिघण्टूदितेषु उद्भिज्जेषु पर्णीचतुष्टयं प्रसारिणी ब्राह्मी विदारीचेत्ये-

वमादिकानां देशभेदेन द्रव्यभेदमुपलक्ष्यते । काकोल्यादीनामदृश्यतैव । प्राणिजान्त-भूताः अग्निजारलावकादयः संदिग्धाः ।

एतादृशानामनर्थानां मुख्यं कारणं परम्परागतपदार्थतत्त्ववित्सम्प्रदायस्य विनाश एव ।

एतादृशानर्थनिवारणाय महामण्डल्या एक उपसंङ्घः कश्चिदुपनिबद्धः, अनेन सङ्घेन एतावन्न किञ्चिदाचरितमेतद्विषये ।

अत्र च शाश्वतवस्तुप्रदर्शनालयाभाव एव प्रधानकारणत्वमापद्यते ।

एतावतापि तादृशवस्तुप्रदर्शनालयो यदि निर्मीयेत तर्हि उपरिप्रदर्शितसंदेहाद्यनर्थ-परम्परा नष्टा भवेदिति मन्ये ।

## रसशालायाः आवश्यकता ।

लक्ष्यलक्षणभूयिष्टस्य आयुर्वेदस्य संबन्धिकार्यनिर्वर्तनाय खनिजप्राणिजोद्भिज्जरूपं त्रिविधमपि वस्तुजातमावश्यकं भवति । तत्पदार्थविज्ञाने च वस्तुप्रदर्शनानि नितरामुप-युज्यन्ते । प्रदर्शनदृष्टानां निश्चितानां आयुर्वेदीयसंभाराणां सम्भरणं वैद्यस्य नितरां सौलभ्यमापादयति । संभृतेषु च संभारेषु भेषजनिर्वर्तनमतीव सुलभं भवेत् ।।

अतएव पूर्वाचार्याः श्रौतस्मार्तादिषु क्रियाकलापेषु प्रथमतः संभारासादनाख्यं क्रियाविशेषमाकल्पनीयमुपादिशन् । अनेन सम्भारासादनेन तत्तत्कर्मावश्यकानां पदार्थानां सन्नीकरणं निष्पद्येत ।

एवमेव यागशालायां यागोचितानां पदार्थानां निधानाय वेदिका काचिद्विहिता । तस्याश्च संभारवेदिकेति हविर्धानमिति च नाम निर्दिष्टम् ।

एवमेव रसशालासु च सिद्धौषधस्थापनाय पदार्थप्रणिधानाय च प्रत्येकश एव शालाभागाः निर्दिष्टाः ।

प्राग्भिश्च महर्षिपुङ्गवैः सर्वसंभारसज्जितैरेव तत्तत्क्रियाकलापेषु प्रावर्तीति एतादृशैः निदर्शनैः उपलभ्यते ।

कतिपयादेव कालादारभ्य राजावलम्बनाभावात् विनष्टेषु प्रदर्शनालयेषु क्रमा-त्कार्श्यमुपगतं आयुर्वेदवस्तुविज्ञानं सहैव आयुर्वेदविद्यया ।

## आयुर्वेदमहामण्डली, तथा आवश्यकरणीयं कृत्यम् ।

एवमधिगतानर्थपरम्परायाः भगवत्याः आयुर्वेदविद्यायाः समुद्धरणे बद्धदीक्षैः माण्डलिकैः तदुद्धरणोचितानि कृत्यानि कर्तुमारब्धानि । अनया च महामण्डल्या सह सर्वैरायुर्वेदविद्याभिवर्धकैः क्रियाकलापैः आयुर्वेदवस्तुप्रदर्शनमेकं निर्वर्तनीयमुदकल्पि ।

एतावन्त्येव प्रदर्शनानि निर्वर्तितानि । तेन तत्तद्देशभेदभिन्नानां ओषध्यादि-पदार्थानां स्वरूपस्वभावादिकं यथावद्विज्ञातुमवकाशः तेनसन्देहनिवृत्तिश्च लब्धः, तथापि नैवैतैरतीव उपकारः सञ्जातः भारतीयवैद्यानामायुर्वेदवस्तुसम्बन्धिनि ज्ञाने इति विषीदामि । केवलं विंशतिः त्रिंशद्वा दिनानि स्थापितैः प्रदर्शनैः कियद्वा विज्ञानमुपार्जये-

द्वैद्यः, तदचिरस्थायिभिरेतैः न नितरामुपयोगः सम्भवेत्। एतत्सर्वमवेक्षमाणैरस्माभिः दृढ़तरमेकं स्थिरतरं आयुर्वेदवस्तुप्रदर्शनालयमुपकल्पयितुं यत्नः करणीयः। तदनुबन्धितया ओपधीप्रस्थं चैकमुपकल्पनीयम्। प्रदर्शनालये सकलविधमप्यायुर्वेदीयं वस्तुजातं संभृत्य प्रतिष्ठापनीयम्।

एतत्स्थापनाय च अधिकं द्रव्यमावश्यकं भवेदिति सुविदितमेव। अस्मिन् विपये भारतसंस्थानाधीशाः अभ्यर्थिताः, अत्र विपये अस्मत्पालकसाहाय्यं च अवश्यमपेक्षितम्। यद्विना नैतादृशानि कार्याणि स्थैर्यमुपगच्छेयुः।

अनेकेषु देशभागेपु अस्मदीयप्रियपालकैः प्रतिष्ठापिताः चित्रवस्तुप्रदर्शनशालास्सन्ति। पुरातनवस्तूनां शिल्पबोधकवस्तूनां च केवलं स्थानभूतानामप्यैतच्छालानां सन्दर्शनेन कियान् मोदस्संजायेत। एवं च पूर्वोदितसर्वसम्भारसम्भृतायुर्वेदवस्तुप्रदर्शनशालासमवेक्षणेन कियान्वा मोदस्संजायेतास्माकमिति न शक्यते वक्तुम्।

एतादृशैः प्रतिष्ठापनैः अस्मद्वैद्यवस्तुपरिशोधनापद्धतिः कियतीमभिवृद्धिमभिगमिष्यतीति भवन्त एव विदांकुर्वन्तु।

## पाश्चात्यवैद्यपरिशोधकानां फलितम्।

एतादृशीभिरेव खलु प्रदर्शनशालाभिः रसशालाभिश्च अद्यतनपाश्चात्यवैद्यपुङ्गवाः अनेकान् नूतनविषयान्परिशोध्य वस्तुतत्त्वमधिगच्छन्ति, एताभिरेव खलु शालाभिरनेके नूतनविपयाः लोके व्याप्तिमुपगच्छन्ति। एताभिरेव खलु शालाभिः पाश्चात्यव्यापारपद्धतिः दैनंदिनाभिवृद्धिमभिगच्छति। तदनेन देशीयविज्ञानाभिवृद्धेः देशीयव्यापाराभिवृद्धेः देशीयार्थिकाभिवृद्धेः देशीयपरिश्रमाभिवृद्धेश्च देशीयपदार्थविज्ञानं मूलमिति अधिगतं भवन्ति।

प्रत्यब्दमप्यस्मद्देशात् देशान्तरमुपनीयमानानां ( Export ) ओपधीनां खनिजादीनां च मूल्यं एकोनषष्टिः लक्षाणां, सप्ततिः सहस्राणां, अष्टशतानां पञ्चाशीतिश्च ( 59,70,885 ) रूप्याणि भवन्ति।

एवं द्वीपान्तरङ्गतैः एतैरेव पदार्थैः निर्मितानां अस्मद्देशमलङ्कुरिष्यतां ( Imports ) सिद्धौषधानामस्माभिः प्रत्यब्दमपि दीयमानं मूल्यं एका कोटिः एकंलक्षं एकोनशतं सहस्रं पञ्चाशीतिश्च ( 1,01,99085 ) रूप्याणां भवति।

एवं च भारत भूभागस्य प्रत्यब्दमपि प्रायशः द्विचत्वारिंशल्लक्ष (4228200) परिमितं द्रव्यं नष्टं भवति, उपरिनिर्दिष्टो विपयः 1915 वत्सरे भारतसाम्राज्यपरिपालकैः प्रकटितादस्मान्निवेदना ( ब्लूबुक् ) देवं विज्ञायते।

1915 भारतसाम्राज्यनिवेदिका। नीयमानानि।

| | ( Exports ) | वि. | इ. |
|---|---|---|---|
| केमिकल्स् | | पौ. 28082। | 19506 |

| | | वि. | इ. |
|---|---|---|---|
| स्फटिकः | पौ. | 42 | 11 |
| आर्सेनिक् (पाषाणः) | ,, | 283 | ... |
| पोटासियाकांपौंड्स् | ,, | 267248 | 18327 |
| अन्ये | ,, | 872 | ... |
| सोडाकांपौंड्स् | ,, | 6049 | 142 |
| अन्ये | ,, | 66 | 177 |
| इतरकेमिकल्स | ,, | 6261 | 849 |
| समुदितम् | ,, | 280821 | 19506 |

ओषधयः ( ड्रग्स् ) खनिजानि ( मिनरल्स् ) 73422 24310

| | | वि. | इ. |
|---|---|---|---|
| कुमारी | पौ. | 352 | 10 |
| हिंगु | ,, | 147 | 27 |
| कर्पूरः | ,, | 14 | ... |
| सिंकोना | ,, | 9567 | ... |
| गलान्गाक् | ,, | 23 | 276 |
| विषतिंदुक (नेक्स्वामिका) | ,, | 6173 | 8883 |
| सेन्ना-सुनामखी | ,, | 10411 | 8154 |
| (अदरस) अन्ये औषधानि ओषधयः | | 46835 | 7460 |
| | | 73422 | 24310 |

समुदितम्... 354243 + 43816

सङ्कलनप्राप्तं... 398059 पौन्

तच्च... 59,70885 रूपिकाः

1915 सं॥ भारतसाम्राज्य निवेदिका। आनीयमानानि।

( Imports )

| ड्रग्स्-मेडिसन्स्. ( ओषधः औषधानि ) | | वि. | ईंजिप्ट्स्. |
|---|---|---|---|
| हिंगु | पौ. | 100 | 19955 |
| कर्पूरः | ,, | 10005 | 111821 |
| काप्यानिम्न | ,, | 28007 | 27408 |
| कोकेन् | ,, | 494 | 34 |

| | | | |
|---|---|---|---|
| ※पेटेंट मेडिसन्स् | ,, | 99626 | 26663 |
| किनैन् | ,, | 65929 | 19249 |
| सारिवा ( सारसापरिल्ला ) | ,, | 1386 | ... |
| पोराक्स् | ,, | 5 | 1572 |
| अदर मेडिसन्स् (इतराण्यौपधानि) | ,, | 202781 | 64904 |
| समुदितम्... | | 408333 + | 271606 |
| सङ्कलनप्राप्तम्... | | 679939 पौन् | |

तच्च

आनीयमानेषु... 101,99085 रौप्येषु
नीयमानानां रूपिकाणां... 5970385 " संख्या-
याः हानेः अवशिष्टं... 4228200 परिमितं धनं
भरतखण्डस्य
नष्टं भवति ।

एवं प्रत्यब्दमप्यस्माभिस्संपाद्यमानं औषधद्रव्यसम्बन्धि नाशमन्वीक्षतः कस्य वा भारतपुत्रस्य न विषादमुद्भवेत् ।

अस्मद्देशीयानां यदि पदार्थविज्ञानमेव पर्याप्तमभविष्यत् अवश्यमेव नाभविष्य-देतादृशं नाशम् ।

अस्माभिः क्रियमाणानामौषधानां गवेषणाय न कुत्रचिद्देशान्तरे गन्तव्यता अस्ति । सर्वा अपि अस्मद्देशं एव लभ्यन्ते ।

कष्टसमयेषु सम्प्राप्तेष्वपि अस्मद्देशीयानां पदार्थानामलभ्यता न कदापि सम्भवेत् ।

सर्वथा अप्येतस्याः दुर्गतेः अस्मदज्ञता अस्मदौदासीन्यमस्मदीयविद्यानामौषधि-कराजावलम्बनाभावश्च केवलं कारणत्वमापद्यत इति पर्याकुलं मे मनः ।

इतश्चिरंतनैः ऋषिवरेण्यैः प्रापञ्चिकोपयोगाय ज्ञानगरिम्णा प्रकाशितं विषयविज्ञानं आर्यसन्ततौ लब्धजन्मभिरस्माभिः नैवावलोक्यते चक्षुषापि नाद्रियते च । तल्लब्ध-प्रबोधैः अस्माभिः बद्धदीक्षैः नियतमायुर्वेदाभिवर्धकेषु कृत्येषु यतनीयम् । श्रेष्ठ आयु-र्वेदवस्तुप्रदर्शनालयस्य तदनुबन्धिनः ओषधिप्रस्थस्य च स्थापने द्रुततरमेव यत्नः कर-णीयः । आयुर्वेदीयवस्तुविततिं विविच्य विभज्य तत्तत्पदार्थगतं गुणविशेषं सविमर्श-मधिगत्य प्रकटीकर्तव्यम् । चरकादिबोधितानोषधिविशेषान् सविशेषं निश्चित्य तत्तदङ्ग-प्रत्यङ्गादिबोधकानि चित्रप्रतिरूपाणि नाम रूपस्वभावभेदकथनपुरस्सरं मुद्राप्य प्रकटी-कर्तव्यानि । तत्र तत्तद्देशीयनामान्यपि सूचनीयानि ।

---

※ अत्र पेटेंट् संज्ञितान्यौषधानि अदूर 1894335 रूपिका परिमितानि भवन्तीति विज्ञायते । औषधोपयोग्यानि स्वर्णरजतादिलोहवस्तूनि पारदादीनिच अत्र पट्टिकायां नैव परिगणितानि ।

एतादृशानां ग्रन्थानां प्रकटने प्रवृत्ता एव केचन वैद्यपुङ्गवाः, अथापि ते ग्रन्थाः द्वित्राभिरेव सञ्चिकाभिः अस्तमुपयाताः ।

ज्ञानवयोवृद्धः प्राच्यपाश्चात्यवैद्यविद्वान् श्रीमान् कर्नल्कीर्तिकरमहाशयः "पायिजन् ड्रग्स् आफ् बोंबे" ( मुंबाराष्ट्रेविषौषध्यः । ) इत्येतन्नामकमुत्तमग्रन्थरत्नं रचयित्वा मुद्रणमकरोत् ।

कर्नल् कीर्तिकर् , मेजर् बी० डी० बोस् महाशयाभ्यां भारतवृक्षसन्ततिप्रकाशकः सचित्रः ग्रन्थः विरचय्य मुद्राप्यत इति श्रूयते । एतन्महोपकाराय उपकल्पते इति सर्वैः आयुर्वेदवैद्यैः कृतज्ञैर्भवितव्यम् ।

प्रकृते अस्मिन् प्रदर्शने आसेतुशीताचलपर्यन्तेभ्यः भारतभूभागेभ्यः अनेकेभ्यः आनीतमायुर्वेदीयं वस्तुजातं निक्षिप्तमिति प्रदर्शनालयान्वीक्षकैः (सूप्रंटेंडु) आयुर्वेदपञ्चानन कृष्णशास्त्रिकवडे, बी. ए. महाशयैः पठितेन निवेदनेनावगम्यते ।

अस्मिन् विविधाः विभागाः तत्तत्परिस्थितयश्च प्रदर्शनोपसाधकैः अत्यासक्त्या अतिश्रद्धया अत्यभिमानेन च उपकल्पिता इति मन्ये ।

एतच्च प्रदर्शनं न केवलं वैद्यानां किंतु सर्वेषामपि जनानां नितरामुपकरोति । तदेतद्भवद्भिरवैव आस्वाद्यत इति । भारतवर्षीयायुर्वेदप्रचारप्रधानाधारभूतनिखिलभारतवर्षीयायुर्वेदनवमवैद्यमहासम्मेलनानुबन्धि एतत्प्रदर्शनं सकलजगदायुरारोग्यसुखसन्धायकं अनादिवैद्यं श्रियःपतिं धन्वन्तरिं नमस्कुर्वन् अपावृत्य प्रकटीक्रियते ।



१०

कविराज श्री उमाचरण भट्टाचार्य, कविरत्न

( काशी )

सभापति निखिल भारतवर्षीय

# दशम वैद्य सम्मेलन

देहली

सन् १९१९ ई०

खेद है कि आपका चरित्र और भाषण प्राप्त न हो सका ।

११

ओं नमो महाप्रजापत्यश्विवलभिद्धन्वन्तरिसुश्रुतप्रभृतिभ्यः ।

निखिलभारतवर्षीयायुर्वेद वैद्यसम्मेलनस्यैकादशाधिवेशनाधिपते-
महामहोपाध्याय कविराज

# श्री गणनाथसेनसरस्वती महाशयस्य अभिभाषणम् ।

अनुत्पाद्य प्रजास्तासामायुरारोग्यकामिने ।
नमः श्रीब्रह्मणे कृत्स्नवैद्यविद्याविधायिने ॥

दयार्द्रहृदयैरहो जगति सर्वतो निस्पृहैर्महर्षिभिरकातरश्रमशताहृतं वासवात् ।
परोपकृतितत्परं निखिलभारतीयप्रजारुजाहरणकार्मणं जयति वैद्यविद्यामृतम् ॥

आर्य्यमिश्राः सभालङ्कारा वैद्यवर्य्या विद्वदग्रेसराश्च,

अद्य खलु भगवतः परमकारुणिकस्य परमेशितुः प्रासादात् पुनरपि समवेतस्यास्य निखिलभारतीयवैद्यसम्मेलनस्य शुभावसरे रोगार्तजन-परित्राण-पुण्यार्जित-कीर्ति-कौमुदी-समुज्ज्वलीकृतदिगन्तरालानां सुविमलविपुलधी वैभवायत्तीकृत-सर्वायुर्वेद-तन्त्राणां—किं बहुना—सर्वतन्त्रस्वतन्त्राणामत्रभवतां महासंसदि स्वल्पज्ञस्याल्पमते-र्मादृशजनस्य सभापतिपदग्रहणमसमञ्जसमित्याकलयन्नपि दिष्ट्या चिरानुभूतामेतन्म-हासभासदस्यानां करुणापरम्परां संस्मरन् कृतज्ञहृदयः पुनरपि भवदनुग्रहमेव शरणी-कृत्य समुपस्थितोऽस्मि भवदीयमलङ्घनीयं निदेशमनुपालयितुम् । समुपस्थितश्च ज्ञानवयोवृद्धान् गुरुकल्पाननल्पांश्च सुहृदो निर्मिपभक्तिप्रेमपुरःसरं प्रणामाभिनन्दनादि-भिरभिवादयन्नभ्यर्थये—सुचिरसंस्तुतसेवकजनपक्षपाताद् वा दोषोपेक्षणगुणग्रहणै-कतानसुधीजनमानसपारतन्त्र्याद् वा महाजनोचितनैसर्गिकक्षमाशीलत्वाद् वा सर्वथा क्षन्तव्यो मे मन्तुर्मन्तव्यश्च भवद्विधेय एवायं जन इति । न हि तावदायुर्वेद समुद्धारमहाव्रतपालनमन्तरेणाकलयामि किञ्चिदपि परं धर्मं वैद्यानां, प्रार्थये च भग-वन्तमन्तर्य्यामिनम्—एष नो धर्म्मः समेधतां गुरुजनाशिषां प्रभावेण—इति ।

विजयतां विजयताम् आसेतुशीताचलभारताचलाचक्रवर्त्ती ससागरभूमण्डलार्धै-काधिनाथः प्रबलप्रतापनिर्जितदुर्दान्तदारुणकर्मजर्मनायनेकराजन्यपराक्रमो जल-स्थल-नभ-स्तलाप्रतिहतविक्रमो मैत्रीकरुणामुदितोपेक्षागुणाकृष्टानेकनरेन्द्रवन्दितः प्रजा-वत्सलो महोदारहृदयस्तत्रभवान् सम्राट् श्रीमान् पञ्चमजार्जाभिधो यस्य विजयेन विजयिनो गौरवेण गौरविणः शान्तिसुखेन शान्तिसुखिनः प्रमोदामहे सर्वेऽपि ।

प्रार्थयामहे च कृताञ्जलयो भगवन्तं त्रिलोकीनाथं यदस्य नैसर्गिकीं धर्मराज्यशासन-बुद्धिमधिकाधिकप्रोज्ज्वलां विधाय तदनुसारिसरण्यैव प्रवर्त्यन्तां भारतीयप्रजा-कल्याणाय सर्वेऽपि राजपुरुषा इति।

याचामहे च सतृष्णानन्दसन्दोहम् अचिरात् प्रवार्तव्यमान नवीनराज्यशासन-पद्धतिकर्णधारेभ्यो भाविराजपुरुषेभ्यः—मा तावदखिलभारतीय प्रजा रक्षणदक्षशक्तिमा-युर्वेदं भारतगौरवं विस्मृत्य वर्तन्तां भारतीया भवन्तोऽपीति।

अहो नूनमद्य निखिलभारतीयभिषग्जनप्राणसम्मेलनस्यास्य सम्मेलनस्य युगा-न्तरमिदं सम्प्राप्तं, यदस्यां समस्तभारतराजन्यभूषणायमानानाम् आर्यधर्मसंरक्षण-बद्धकङ्कणानां प्राचीनज्ञानविज्ञानसमुद्धरणैकतानप्रयत्नानां महनीयावदातमहाराष्ट्र राष्ट्रगौरवरवीणां श्री १०८ मन्महाराजाधिराज राजराजेश्वर श्रीतुकाजीराव—होलकर—प्रभूणां राजधान्यामिन्दोरनगर्यामामन्त्रितेयं महापरिषदभूतपूर्वां कामपि श्रियं पुष्णा-ति। एतावन्तं हि कालमस्माकं मन्दभाग्यतया वा भारतीयस्वाधीननरेन्द्राणां करुणा-कटाक्षविरहाद् वा नाभूद् वैद्यसम्मेलनं भारतीयनृपतीनां राज्येषु—इति शल्यमिव दुःखाकरोति स्म आयुर्वेदोपासकानां हृदयम्। तदेतत् शल्यं लीलया समुद्धरन् सन्त-र्पयंश्च करुणामृतेन वैद्यजनहृदयं भिषजामिव भिषक्तमो जयति पुण्यश्लोकोऽसौ नरेन्द्र-धन्वन्तरिः। अवश्यमेव हि सर्वथा शुभोदर्केणानेन कर्मणा चिरस्मरणीयतां यास्यति तन्नामधेयम्। पूर्वं हि तत्रभवता श्रीमता कोचीननराधीशेन सभाधिनाथपदमलङ्कुर्वता बहुसम्मानितमपि वैद्यसम्मेलनमद्य श्रीमता इन्दोरनराधिनाथेन उत्सङ्गे कृतं गास्यति चिराय तदीयां कीर्तिगाथाम्। आशास्महे—स्वराज्यस्य सुविशालभूभागेषु वैद्यक-चिकित्सां सम्यक् प्रचारयन् पत्तने पत्तने आयुर्वेदीया आरोग्यशालाश्च स्थापयन् नीरुजीकृतप्रजाशीर्भिरधिकतरमभिनन्द्यमानः शतायुरसौ भूयादिति। प्रतीमश्च—नूनमनेनैव प्रशस्यमार्गेण प्रवर्त्तमानाः सुविमलकीर्त्तिं पुण्यराशिञ्चार्जयिष्यन्ति सुगृहीत-नामानोऽन्येऽपि भारतीया नरपतय इति।

अथ सभाजयामः सभाजयार्जितप्रचुरयशसो धन्यान् परोपकारव्रतान् अत्युदारचरि-तान् भवतोऽपि ये महतीमपि स्वकार्यहानिमविगणय्य दुःसहमध्वप्रवासक्लेशशतमुरीकृत्य च केवलमायुर्वेदप्रेम्णा स्वव्ययेन नानादिग्देशेभ्यः समिलिताः समुद्दिधीर्षन्ति वैद्यका-मृतकुम्भम् अनभिज्ञविपक्षजनावज्ञाम्बुधिनिमग्नम्। न च निष्फलारम्भा वयमिति क्षणमपि शङ्कितव्यम्। इदानीं हि प्रत्यग्रोद्भिन्नमुकुलसौरभामोदितदिगन्तराला नो मनोरथद्रुमा नचिरेणैव कालेन फलवन्तो भविष्यन्तीति प्रियसन्देशं वः समाप्तौ श्रावयिष्यामि।

इदं पुनरतीव खेदस्थानं नः यत् समतीते संवत्सरे असमाप्तकर्म्माण एव वैद्यक-विद्याम्बुधिरत्नभूताः केचन महात्मानः पुण्यार्जितलोकं प्रतस्थिरे। तेषु च विशेषेण स्मरामः समग्रभारतप्रथितयशसं तत्रभवन्तं प्रतीच्यप्राच्यचिकित्सातत्त्वकोविदं "पुंस वन"—"त्रिदोषविचारा" द्यनेकग्रन्थकारं कविराज सुरेन्द्रनाथ गोस्वामिनं, सर्वायुर्वेद-

पाथोधिमन्थाचलं. "वनौपधिदर्पण"स्य प्रसिद्धग्रन्थकारं राजार्हभिषग्वरं कविराज विरजाचरण कविभूषणञ्च। उभावप्येतौ कलिकातामहानगरवास्तव्यौ अस्मत् प्रियसुहृदौ नवनवायुर्वेदीयतत्त्वोद्भावनकुशलौ अर्थोपार्जनपराङ्मुखचेतसा शास्त्रोपसानमेव जीवनस्य मुख्यं प्रयोजनं मन्वते स्म। पञ्चाशद्वर्षदेशीये वयसि च वर्तमानौ दिवं गतौ—इति तद्वियोगविधुरेण हृदयेनाधिक्षिपामो मन्दभागधेयमेव वैद्यानाम्।

आर्याः प्रेक्षावन्तः! अतीतेषु वर्षेषु वैद्यसम्मेलनसभापतिभिरत्युज्ज्वलज्ञानविज्ञानोपदेशिभिः सर्वथा मत्तोऽधिकतरप्रज्ञैरायुर्वेदाचार्यैः,—मया च यथामिति—प्रतिपादितेषु वैद्यकेतिहासत्रिदोषतत्त्वादिषु विषयेषु पुनः प्रवृत्तिरहीयमानानल्पमेधसां कुशाग्रधियामत्रभवतामुद्वेगकरी स्यादिति शङ्कया अद्यतनवक्तव्यविषयाणामतिप्रयोजनीयतया च पुराणीं पद्धतिमननुसृत्य कालोचितमेव यत् किञ्चिद् वक्ष्यामि। न चाहमल्पश्रुतः स्वल्पतरवाग्विभवः प्रभवामि सर्वं वक्तव्यं विशदं वर्णयितुं, न च पूर्वसभापतिभिरनुक्तचरं बहु वक्तुमस्ति मे शक्तिः, तथापि पूर्वैः सूत्ररूपेणोक्तं भाष्यरूपेण प्रपञ्चयतो मे वचनं सावधानं विमृश्य भवद्भिः कर्तव्यनिर्णयः करणीय इति—प्रत्याशैव तावन्मां मुखरयति।

तत्रादौ वैद्यकोद्धारप्रयोजनं तावद् विचार्यते। अत्र केचिद् विप्रतिपद्यन्ते। नहि सर्वथा अतलजलधिनिमग्नं वैद्यकं यदुद्धार्य्येत, सन्तिहि अद्यापि सहस्रशश्चिकित्स्यमाना आतुरा ये वैद्यकप्रभावेणैव समुत्तिष्ठन्ते। समुत्तिष्ठमानाश्च विस्मयमावहन्ति परेषाम् इति। तान् प्रतिब्रूमः। सत्यं समुत्तिष्ठन्ते सहस्रशः, परं समुत्तिष्ठेरन् लक्षशो यदि आर्षयुगीयं ज्ञानविज्ञानमिदानीं पूर्णाङ्गं लभ्येत। क नु खलु गताः साम्प्रतं जतूकर्ण-पराशर-क्षारपाणि-कपिल-गौतमादीनां कायचिकित्सासंहिताः, क तावदौपधेनवैरभ्रभोज-वैतरण-पुष्कलावत-गोपुररक्षितादीनां शल्यतन्त्राणि? कुत्र वा विदेहाधिप-निमि-काङ्कायन-गार्ग्य-गालव-सात्यकि-शौनकादिविरचिताः शालाक्यसंहिताः? क्काथर्वणानि भूतविद्यातन्त्राणि? क जीवक-पर्वतक-बन्धक-हिरण्याक्षादिकृतानि कौमारभृत्यतन्त्राणि? कुत्र वाऽसौ तक्षकदंशनप्रतीकारक्षमा अगदतन्त्रीया काश्यपसंहिता, अलम्बायनोशनः सनक-लाठ्यायनादिकृतानि विषतन्त्राणि वा? क निलीनानि वशिष्ठमाण्डव्यव्याडि-पतञ्जल्यादिकृतानि रसायनतन्त्राणि? क वा प्रनष्टानि कुचुमारबाभ्रव्यादिकृतानि वाजीकरणतन्त्राणि? न च नामशेषाणि केवलं तानि तानि तन्त्राणि, हन्त हतानि तत्तत्क्रियाकौशलान्यपि। क तावत् सुश्रुतभोजाद्युपदिष्टं शवच्छेदादिसहकृतप्रत्यक्षपरीक्षापरिशोधितं शरीरज्ञानं, यत् "प्रत्यक्षतश्च यद् दृष्टं शास्त्रदृष्टञ्च यद् भवेत्। समासतस्तदुभयं भूयोज्ञानविवर्द्धनम्"—इति स्तुवन्ति स्म प्राञ्चः? क यन्त्रशस्त्रबन्धानां प्राचीनानां परिचयः? क वा तत्प्रयोगपाटवं? क शास्त्रोपदिष्टं मूढगर्भविज्ञानं, तदाहरणकुशलता वा? क सोमलताश्रावणी-महाश्रावणी-ब्रह्मसुवर्चलादिरसायनभेषजानां विज्ञानं? क जरामरणहरणस्य रसेन्द्रस्य अष्टादश संस्काराः? क

पञ्चकर्मकार्मण्यं ? क्वथवा नाडीविज्ञाने अरिष्टविज्ञाने च सा विज्ञता—इति हन्त शतशो दृश्याः सर्वतो वैद्यकाङ्गानां विलोपाः । तत् कृताञ्जलि प्रार्थयामहे, मा कस्यापि व्यामोहकरी बुद्धिरुदियात्—नास्ति वैद्यकोद्धारस्य प्रयोजनमिति ।

अत्र च प्रसङ्गे पूर्वोक्तमेव पुनरपि स्मारयामि—

"तदेवमित्थंगते नानानार्षजनप्रतिसंस्कृतजीर्णावशेषे वर्षसहस्रयुगीयलिपिकर-प्रमादप्रक्षेपादिपरामृष्टे च प्रधानार्षसंहिताद्वितये—सत्सु च तदुपजीविषु केषुचिदष्टाङ्ग-हृदयभावप्रकाश-शार्ङ्गधर-चक्रदत्त-वङ्गसेनादिषु-संग्रहग्रन्थमात्रेषु—सन्तमसाच्छन्नेषु च शरीरवनौषधिविद्यादिष्वायुर्वेदपूर्वाङ्गेषुप्रलीनप्रायेषु च कायचिकित्सावर्जमपरेषु आयुर्वेदप्रधानाङ्गेषु सर्वथा प्रतिसंस्कारापूरणाभ्यां पुनः सञ्जीवनीयोऽयं निगूढशक्तिर्महाप्रभावः समग्रजगदेकाश्रयो वैद्यकवटतरुरिति कस्तावदत्र चक्षुष्मानुदासीत ? एष हि हन्तायुर्वेदो विपन्नदीधितिरप्येतर्हि कायचिकित्साङ्गमात्रेण कथं कथमपि ध्रियमाणः प्रयो निखिलभारतीयप्रजाप्राणत्राणाय प्रभविष्णुर्बहुधा परकीयचिकित्साशास्त्रचन्द्रमसमद्यापि निष्प्रभीकरोति रविरिव पश्चिमाचलस्थः । न विद्मो, नवेन तेजसा समुदितः किं किमेष न विदधीत दश दिशः समुज्ज्वलयन्"—इति ( प्रत्यक्षशरीरस्य उपोद्घाते ) ।

अथैवं कर्त्तव्येषु वैद्यकसमुद्धारप्रयत्नेषु का नाम सरणिरवलम्बनीयेति पुनरप्यत्र शतशो विप्रतिपत्तयः समुदीयन्ते । केचिदाहुः—विलुप्तग्रन्था अन्विष्यन्ताम् । अन्येतूपदिशन्ति—वर्तमानग्रन्था एव निभृतनिपुणं विचार्यन्ताम् । अपरेऽनुशिषन्ति हिमालय-सानुषु भ्रामं भ्रामं दिव्यौषधानि मृग्यन्तामिति । एषाञ्चोपदेशकानामयमभिसन्धिः—यदेतावदधिकं नास्ति करणीयमिति । तान् प्रतिब्रूमः । अवश्यमेव हि करणीयान्येतानि कार्याणि । परं नैतावता शक्यं साकल्येन विलुप्तज्ञानं समुद्धर्तुम् । आपृच्छामहे च तान् सविनयम्—ननु ग्रन्थाश्चेद् विलुप्ता न लभ्येरन्, किमु नवीनज्ञानार्जनपुरःसरं न विरचणीया ग्रन्थाः ? यदि निपुणार्थविभावनेनापि न लभ्येरन् लभ्यमानग्रन्थेषु अवश्य-ज्ञेयाः केचन विषयाः किमु निमील्य नेत्रे निश्चेष्टास्तिष्ठेम ? अथ हिमालयसानुषु विचरतां परिचायकोपदेशकविरहात् नाभिज्ञायन्ते दिव्यौषधानि, किमु प्रयोगादिपरीक्षादिभिर्न निरूप्यन्तां नवीनभेषजानां गुणाः ? तस्मादसति पुष्कले आप्तोपदेशे सति च—ज्ञाताज्ञात-विषयेषु स्वानुभवैः परीक्षणं, बहूनां परीक्षकाणां परीक्षया परीक्षाफलस्य परिशोधनञ्च सर्वथा श्रेयसे भिषजामित्यलं निश्चलतासिद्धान्तेन । न च शङ्क्यमेतावता भक्तिराप्तोपदेशेषु व्याहन्येत—इति । आहुर्हि प्राञ्चः—"आप्तागमस्तावद् वेदो यश्चान्योऽपि कश्चिद् वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाप्तागमः"—इति (चरक. सूत्र. ११ अ.) । आह च भगवान् धन्वन्तरिः सुश्रुताय—"प्रत्यक्षानुमानोपमनागमैरविरुद्धमुच्यमानमुपधारयेति ।" ( सुश्रुत. सूत्र. अ. १ ) । न च नवीनवस्तुग्रहणमात्रेण आयुर्वेदस्य न्यूनताऽपि स्वीक्रियेत, प्राचीनग्रन्थानां बहुधा-विलोपदर्शनात् ।

स्मरामि ह्यत्र प्रसङ्गे तत्रभवतः पूर्वसभापतेः कोचीननराधीशस्य सारगर्भं वचनम्, "नहि समग्रं ग्रन्थजातमनुपलभ्य आयुर्वेदस्य स्वरूपमेव साकल्येन ज्ञातुं शक्यम्। सति हि स्वरूपज्ञानं न्यूनाधिक्यसमीक्षणं सुकरं सम्पद्येत।"—इति। अथवा—अस्तु नाम न्यूनता, नहि पूर्णब्रह्म विहाय पूर्णमिह किञ्चिदपि जगति। उभयथापि आयुर्वेदस्य कालवशात् परिस्फुटा न्यूनता सर्वथा सम्पूरणीयेति अलमस्माकं प्रयत्नशैथिल्येन।

तस्मात् प्रकाममन्विष्यन्तां प्रकाशयन्ताञ्च विलुप्ता ग्रन्थाः, अभिज्ञायन्तां प्रयुज्यन्ताञ्च दुर्लभानि भेषजानि, आविष्क्रियन्तां च गूढार्थाः प्राचीनदुरूहग्रन्थानाम्। परं मा विस्मार्षीः—कालोऽयमाप्तागमविशोधितया प्रज्ञया नवं नवं ज्ञानमुपार्ज्जयितुं प्रतिष्ठापयितुंच स्वकीयप्रयत्नै वैद्यकोत्कर्षं लोके—इति।

न च प्राचीनवैद्यकोत्कर्षख्यापनमात्रेण इदानीन्तनवैद्यकोत्कर्षे सपदि श्रद्दधीत पाश्चात्यज्ञानविज्ञानलोकचमत्कृतचक्षुरद्यतनो लोकः। नहि महाराजराजाधिराजवंशधरोऽहमिति कीर्तनमात्रेण सम्मानयन्ति जीर्णचीरधरं रङ्कं श्रीमन्तः। नूनं स्वकीयपूर्वमर्यादास्मरणेन वर्द्धते अभिमानः, न तु सद्य एव गुणोत्कर्षः। तत् कृताञ्जलि प्रार्थये—प्राचीनगौरवं स्मरन्तोऽपि पुनः स्वगुणसम्पदि प्रयतध्वम्, येन शाल्यशालाक्यादिकर्मसु दक्षतरैः प्रतिद्वन्द्विभिर्नोपहस्येमहि—"तादृश पूर्वपुरुषाणामीदृशा एते वंश्या" इति।

अथ स्वगुणसम्पदाधानार्थमस्माभिरिदानीं बहु विद्यते करणीयम्। भेषजपरिचयार्थं निर्म्माणीया भेषजपरिचयागाराः ( Drug Museums ), भेषजोद्यानानि च। भेषजगुणपरिज्ञानाय संस्कारदार्ढ्यार्थञ्च स्थापनीया भेषजगुणपरीक्षालयाः (Pharmacological Laboratories)। रोगस्वरूपाणां सम्यग् विज्ञानाय चिकित्साकुशलतार्जनाय प्रतिरोगं भेषजप्रभावपरीक्षणाय आर्त्तत्राणाय शिष्यशिक्षार्थञ्च प्रतिष्ठाप्या आरोग्यशालाः औषधवितरणालयाश्च ( Indoor Hospitals and Outdoor Dispensaries )। प्राकृतशारीरवस्तुपरिचयार्थमारचनीयाः शवच्छेदागाराः शारीरसम्भारागाराश्च ( Dissection Rooms and Anatomical Museums ); वैकृतशारीरविज्ञानार्थं वैकृतशारीरवस्तुगृहाश्च '( Pathological Museum)। संस्थाप्याश्च रसादिसंस्कारार्थं प्राचीनपद्धत्यनुसारिण्यो रसशालाः, तत्पार्श्वत एव वस्तुप्रकृतिविज्ञानाय नवीना रसशालाश्च ( Chemical and Pharmaceutical Laboratories )। अपेक्षन्ते अन्याश्च विज्ञानालया यथाशक्यम्।

एतानि च तावदङ्गानि। अङ्गी तु तावद् आयुर्वेदमहाविद्यालयः सकलवैद्यकविद्यालयानामादर्शभूतः,—यस्मात् पुराणनवीनज्ञानलोकसमुज्ज्वलीकृतमतयः पर्य्यवदातश्रुताः परिदृष्टकर्म्माणः कृतयोग्या योग्यतराः प्रवर्त्तेरन् भिषजः। तथाविधाश्चैव प्रभवेयुः प्रतिद्वन्द्विनां पक्षच्छेदाय, परित्राणाय च नानारोगक्लिष्टानां भारतीयप्रजानाम्। नहि प्रजानां प्रतिपञ्चविंशतिसहस्रमेकेन पाश्चात्यशिक्षागर्वितेन धनलोलुपेन भिषजा शक्यं

त्रिंशत्कोटिसंख्यानां प्रजानां नियतरुजार्त्तानां दुःखमोचनम्। शक्यते हि तदसंख्य-प्रायै र्वैद्यैरेव विदितवेदितव्यैः।

तत् पूर्णाङ्गानामायुर्वेदमहाविद्यालयानामारोग्यशलानाञ्च प्रतिष्ठार्थमुत्तिष्ठन्तां भारतीय नृपतयो नृपतुल्याश्च, भिषजश्च सर्वेऽपि। नहि तेषां साहाय्यमन्तरेण सुसाध्यमिदं कार्यम्। न चाद्यापि समुन्मीलितं तेषां नयनैः, अन्यथा कथं न दृश्यन्ते प्रतिनगरं प्रतिग्रामञ्च आयुर्वेदीया आरोग्यशाला धर्मार्थौषधालयाश्च, न च क्वापि एकोऽपि महा-विद्यालयः। क्व नुहन्त साम्प्रतं तादृशा महापुरुषा ये पुरेव दयार्द्रहृदयाः विलपेयुः—"विविधवेदनोपघातोपद्रुतान् सनाथानप्यनाथवद् विचेष्टमानान् त्रिक्रोशतश्च मानवान-भिसमीक्ष्य मनसि नः पीडाभवति"—इति, अथवा आर्त्तत्राणमहाव्रतानामस्माकमेवेदं व्रतशैथिल्यं यन्नाद्यापि सर्वथा उन्मुखीकृता धनिका राजपुरुषाश्च वैद्यकमतानुसारिणी-नामसंख्यानामारोग्यशालानां महाविद्यालयस्य च संस्थापनाय।

इदं पुनरवश्यमुरीकार्यं यदस्य वैद्यसम्मेलनस्य प्रभावाद् वा कालोचितस्वाभाविक-जागरणाद् वा भारतीयप्रजापुण्यपरिपाकारम्भाद् वा साम्प्रतं विपरिवर्तत इव कालो येन क्वचित् क्वचिदेतर्हि भारतीयनगरेषु स्थापिताः स्थाप्यन्ते च आयुर्वेदीया आरोग्य-शाला विद्यालयाश्च। शोभते हि मद्रासनगरे प्राज्ञवरेण वैद्यरत्न श्रीमद् गोपालाचार्लुना स्थापितो बहुसम्भारसम्भृत आयुर्वेदविद्यालयः धर्मार्थौषधालयारोग्यशालाभ्यां समुज्ज्वलः। विलसन्ति च तत्रैव परोपकारव्रतैः स्थापिताः पञ्चषा धर्मार्थौषधालया अपि येभ्यः प्रतिदिनं साकल्येन द्विसहस्रकल्पा रोगिणो रोगप्रतीकारं लभन्ते। विभाति च तत्रैव विद्वन्मुकुटमणिश्रीमन्नटेशशास्त्रिभिरधिष्ठितो वैद्यकविद्यालयोऽपि वेङ्कटरमण-नामालङ्कृतो धर्म्मार्थौषधालयसहितः। जागर्ति च मुम्बय्यां तत्र भवतां प्राच्यपाश्चात्य-चिकित्सापटूनां डा. श्रीपोपटप्रभुराममहाशयानां वैद्यकविद्यालयो नानोपकरणोपस्कृत आरोग्यशालान्वितश्च, यः सर्वथा प्राचीनतया कार्यकुशलतया च प्रशंसार्हः सर्वेषाम्। अपरश्च तत्रैव चरकसुश्रुतादिग्रन्थसम्पादनपटीयसां रसहृदयादिनवीनायुर्वेदीयग्रन्थमाला-प्रकाशनलब्धकीर्तीनां वैद्याचार्य्य विद्वद्वर श्रीमद् यादवजी त्रिकमजी महाभागानाम् अक्लमपरिश्रमफलभूतो वैद्यकविद्यालयः—यो नवीनोऽपि शिष्यशिक्षानैपुण्येन सम्भारसम्पदा च सम्प्रति परां प्रतिष्ठां भजते। उद्भासते च कलिकातामहानगर्यामुभ-यविधचिकित्सानयकुशलेन मित्रवरेण कविराज श्रीमद् यामिनीभूषण कविरत्नेन साधु-समारब्धमस्माभिश्च प्रयत्नशतैः सम्वर्द्धयमानमष्टाङ्गायुर्वेदविद्यामन्दिरम् धर्मार्थौषधालय-प्रोज्ज्वलम्। यत्र न केवलं कायचिकित्साङ्गं किन्तु अन्यान्यपि वैद्यकाङ्गानि सप्रयोग-मुपदिश्यन्ते, सम्भृतानि च भेषजशारीरादिपरिचयार्थं प्राज्यानि उपकरणानि। सन्ति चान्येऽपि त्रिचतुरा धर्मार्थौषधालयास्तत्रैवान्यैर्महाभागैः स्थापिताः। एवं पुण्यपत्तने आयुर्वेदपञ्चानन श्रीमत् कृष्णशास्त्री कवडे महाभागैः स्थापितो वैद्यकविद्यालयो महदुपकरोति शिष्याणाम्। सन्ति च तत्र द्वित्रा धर्मार्थौषधालया अपि। विद्योतन्ते

च भारतराजधान्यां देहल्यामपि द्वित्रा वैद्यकविद्यालयाः—येष्वेकं साम्प्रतं सुविशालमायुर्वेदविद्यालयं यूनानीविद्यालयञ्च आरोग्यशालासहितं स्थापयितुं यतमानः प्रायो महासौधनिर्म्माणादिभिः सफलकाम एव सर्वथा प्रशस्यकर्मा हि महासमुद्यमः सुहृद्वरः सुगृहीतनामा हाजिक् उलमुल्कोपाधिकः श्रीमान् अजमलखान् महाभागो यस्य परिश्रमफलमिदं पाकोन्मुखं दृश्यते। एवं लाहोरनगर्य्यां दयानन्द वैद्यकविद्यालयः पिलिभीतनगर्य्यां ललितहरिवैद्यकविद्यालयश्च स्वरीत्या प्रशस्यकार्यावेव।

किञ्च भारतीयराजन्यराज्येष्वपि त्रावाङ्कोराधिपानां राज्ये सन्ति शताधिका आयुर्वेदीया धर्मार्थौषधालयाः, काश्चन आरोग्यशालाश्च। परं "त्रिवांद्रम्" नगर्य्यां तद्राजधान्यां बहुसम्भाररमणीयो वैद्यकविद्यालयः सर्वथा प्रशंसार्हः। सच दिष्ट्या दृष्टोऽस्माभिः। नवीनपुराणज्ञानविज्ञानादानबद्धपरिकराणां श्रीमन्महीशूराधिपानां राज्येष्वपि संस्कृतविद्यालये वैद्यकाध्यापनाय विहितः प्रबन्धः, सन्ति च तत्र केचन धर्मार्थौषधालया अपि, परं नानासम्भारालङ्कृतो वैद्यकविद्यालयोऽस्तीति न श्रुतमस्माभिः। अथ महाराष्ट्रपतीनामिन्दोर-गवालियर-बडोदा नरेन्द्राणां राज्येष्वपि शोभनाः सन्ति वैद्यकविद्यालया धर्मार्थौषधालयाश्च प्रशंसार्हाः। परं मन्ये नानोपकरणादिसम्भृतास्ते श्रियमधिकतरां पुष्णीयुः। ये च केचिदस्माभिरनभिज्ञाताः सन्ति वैद्यकविद्यालया नगरान्तरेषु तेऽपि महोद्देश्या इति प्रशंसार्हा एव। आशास्महे—सर्वेष्वेतेषु अधीयानाश्छात्राः कालान्तरेण सद्वैद्यपदवीं लभेरन्, इति।

इदं परं शल्यायते नश्चेतसि यत्—सत्यपि निखिलभारतीय वैद्यसम्मेलननियोजितानां भारतीयागदङ्कारवर्याणां धीरविचारसम्भूते सकलवैद्यकविषयावगाहिनि आयुर्वेदविद्यापीठपाठ्यक्रमे स्वयमुद्भावितान् स्वल्पतरविषयान् पाठ्यक्रमानेव अनुसरन्ति ग्रन्थाध्ययनमात्रेण तुष्यन्ति च केचन वैद्यकविद्यालयाध्यक्षाः। न हि ते प्रयतन्ते छात्राणां शारीरादिविज्ञानाय कर्माभ्यासाय चिकित्सानैपुण्याधानाय वा। एवञ्च सुलभोपाधिलाभाद् ज्ञानलवदुर्विदग्धाः स्वल्पज्ञाः कर्मानभिज्ञाश्च प्रादुर्भवन्ति केचन वैद्याः, ये द्विपवन्मदान्धा ज्ञेयान्तरमेव न पश्यन्ति। न हि वैद्यकं नाम—न्याय-सांख्य-वेदान्त-धर्म्मशास्त्रादिवद्ग्रन्थाध्ययनमात्राकलनीयं शास्त्रं यस्य वाग्विस्तराभ्यासेन अभिज्ञायेरन् रोगाः, उपक्रम्येरन् वा सम्यगातुराः। अत्र हि पदे पदे कर्मदर्शनं रोगपरीक्षणं वस्तुपरिचयो योग्याकरणञ्चापेक्ष्यन्ते, यैर्विना केवलशास्त्रज्ञः प्रमुह्यति आतुरानासाद्य—"प्राप्य भीरुरिवाहवम्"। ईदृशैश्च न सम्भाव्यते वैद्यकोन्नतिरनल्पेनापि कालेन। न च गुरुगृहेषु कथमपि पञ्चषान्मासान् वर्षं वा गमयित्वा करुणार्द्रहृदयस्य गुरोः प्रसादाल्लब्धप्रशंसापत्रै र्वैद्यैरादीप्यते वैद्यकज्योतिः।

अतः प्रार्थयामहे सर्वान् वैद्यकप्रेमिकान्—मा भूवन्नसंख्या वैद्यकपाठशालाः। भवन्तु पुनः स्वल्पसंख्या अपि संभृतसकलसम्भाराः कुशलाध्यापकाः आरोग्यशालाशालिनश्च वैद्यकविद्यालयाः—येषु वर्षचतुष्टयं वर्षपञ्चकं वा श्रामं यथाविधि शिक्षे-

रन् शास्त्राणि, समीक्षेरन्नातुरान्, प्रयुञ्जीरन् प्रयोगान् शिष्याः, लभेरंश्च निर्दिष्टकालानन्तरमेव परीक्षाफलोपार्जितानि प्रशंसापत्राणि। अध्यापनञ्च तेषु भारतीयप्रधानवैद्याचार्याणां वहुपरिश्रमफलम् आयुर्वेदविद्यापीठपाठ्यक्रममनुसृत्यैव प्रवर्तताम्। अन्यथा वहूनामवश्यज्ञातव्यविषयाणां ज्ञानाभावः स्यादेव, दुर्वाश्च अनतिप्रयोजनीयेषु वृथा श्रमः पौनःपुन्येन। साकल्येन पठनन्तु चरकसुश्रुतादिसंहिताग्रन्थानामेव भवितुमर्हति, तदपि न सर्वेषां किन्तु आयुर्वेदाचार्यपदलाभोत्सुकानामेव।

प्रधानलक्ष्यं हि शिक्षाया न ग्रन्थाध्ययनमात्रं किन्तु तत्तद् विषयाभिज्ञानं, कर्मनैपुण्यञ्च। तदर्थञ्च प्रवृत्तोऽयमायुर्वेदविद्यापीठपाठ्यक्रमः। स च कथमुपेक्ष्यः प्रेक्षावद्भिः ?

इदञ्चेदञ्च स्पष्टं प्रतिभासेत प्रतिभोज्ज्वलानां भवतां, यदीदृशलक्ष्यलाभार्थमपेक्षितमिदानीं पञ्चकर्मैव। तद्यथा—( १ ) नवीनपाठ्यग्रन्थानाम् आवश्यकसकलविषयावगाहिनां निर्माणम् (२) एकस्य (सति सम्भवे एकाधिकस्य वा) आयुर्वेद महाविद्यालयस्य स्थापनम् ( ३ ) स्थितानां वैद्यकपाठशालानामङ्गपोषणम् पाठ्यक्रमाणामैकमत्यविधानञ्च। ( ४ ) वैद्येषु अधिकतरगुणाधानार्थं विलुप्तायुर्वेदाङ्गसंयोजनार्थञ्च नवीनपाश्चात्यविज्ञानविषयाणां केषाञ्चन यथाप्रयोजनं ग्रहणम् (५) सद्वैद्यानां स्वगुणसम्पदि यतमानानां साहाय्याय विद्यालयपरिचालनसौकर्य्याय च वैद्योपदेशालयानां ( Post graduate Training classes ) स्थापनञ्चेति।

( १ ) तत्र दिष्ट्या नवीनपाठ्यग्रन्थानां निर्माणे दृश्यत एव केषाञ्चित् प्रयत्नः। विरचिता हि गीर्वाणवाणीमया हिन्दीभाषामयाश्च केचन ग्रन्थाः साम्प्रतम्। परं कर्तव्यसागरापेक्षया गोष्पान्येव ते। नूनं वहुतरमवशिष्यते कार्यम्। अपराद्धश्चात्र मयापि आरब्धग्रन्थमसमाप्य दुर्दैववशतहेतोः। परं भगवत्प्रसादात् सत्वरमेव कर्त्तव्यशेषं यथाशक्ति करिष्यामीति प्रतिजानन् क्षामयेऽपराधम्। याचे च समर्थान् ग्रन्थकारान्, उपक्रियेमहि वयं नवीन प्राचीनज्ञानोज्ज्वलग्रन्थनिर्माणेन इति। अस्ति हि आयुर्वेदविद्यापीठपाठ्यक्रमानुसारेण स्वस्थवृत्तव्यवहारायुर्वेदागदतन्त्राद्यनेकविषयेषु ग्रन्थनिर्माणस्यावश्यकता, तत्र श्राम्यन्तो मनस्विनः अक्षय्यं यशोऽर्जयितुमर्हन्ति।

इदञ्चैतत् प्रसङ्गे अवश्यवाच्यतया ब्रूमः—सर्वैरपि नवीन ग्रन्थकारैरपरेषां तादृशग्रन्थकृतां ग्रन्थेभ्यो ग्रहणीयाः नवीनाः संज्ञादयो ग्रहणयोग्याः, अन्यथा वृथा संज्ञाबाहुल्यमापद्येत। परं संज्ञाकृतां नामोल्लेखं विधाय आनृण्यमपि करणीयम्। तत्र कैश्चिदन्यथा कृतमिति सखेदमाकलय्य पुनः पुनः प्रार्थयामहे—मा तावदीदृशो दुर्नयः सुधियां वैमनस्यकरः प्रवर्ततां भूय इति।

( २ ) अथ वैद्यकमहाविद्यालयास्थापनमधिकृत्य विद्यते वहुवक्तव्यं नाम। तत्र विशाले भूभागे मध्यतो महाविद्यालयः षड्भिः सप्तभिर्वा सुविभक्तैः प्रशस्तपाठागारैरपरैश्च ग्रन्थागारभेषजपरिचयागारादिभिः समान्वितो यथा भवितुमर्हति, तथाऽस्माभिः

स्वयं चित्रयित्वा प्रदर्शितः। परितश्च महाविद्यालयम् आरोग्यशाला, औषधवितरणगृहम्, प्राकृतशारीरवस्तुप्रदर्शनागारः, वैकृतशारीरवस्तुगृहम्, छात्रावासः, कर्मकरावासो भेषजनिर्माणागारश्च भवेयुः, दूरे च शवव्यवच्छेदागारः। अभितश्च सर्वं नानायुर्वेदीय भेषजालङ्कृतमुपवनम्, यत्र अविकृतस्वरूपा वनौषधीः परिचिन्वीरन् शिष्याः। न च सद्वृत्तोपदेशार्थं भगवत्कृपालाभार्थञ्च विष्णुमन्दिरमपि धर्माचार्यालङ्कृतं तत्र विहास्यते।

ईदृशश्च महाविद्यालयः क्व स्थापनीय इत्यत्र दृश्यते बहुविधवैमत्यम् भिषजाम्। केचिदाहुः—एक एवास्तु महाविद्यालयो भगवतो भरद्वाजस्य लीलाभूमौ वैद्यसम्मेलनानुमतपूर्वं प्रयागक्षेत्रे। अन्ये, मन्यन्ते अस्तु सर्वौषधिप्रभवस्य हिमवतः पाददेशे त्रिलोकपावने हरिद्वारक्षेत्रे। अपरेऽभिदध्युः अस्तु वैद्यविद्यामहापीठभूतस्य वङ्गदेशस्य—अथवा भारतवर्षीय प्रधाननगर्यां कलिकातायाम्। अपरे हिन्दू विश्वविद्यालयाधिकारिणः समर्थयन्ते—अस्तु सर्वविद्याकरभूमौ वाराणस्यामेव। अथान्ये केचन—"गुरारेस्तृतीयः पन्था"—इति न्यायेन अर्धयावनमर्धवैद्यकमायुर्वेदमहाविद्यालयं देहल्यामेव स्थापयेरन्, न च मानयेरंस्ते निखिलभारतीयमायुर्वेदविद्यापीठं वैद्यसम्मेलनं वा। एवं स्थिते तपस्विनो बहुधाकृष्यमाणस्य का गतिर्गर्भस्थस्य आयुर्वेदमहाविद्यालयस्येति यत्सत्यमाकुलीभूतो वैद्यलोकः।

अत्र ब्रूमः। यदि शक्यते, स्थाप्यन्तामनेके वैद्यकमहाविद्यालयाः। परं पुराणनवीनोभयमतज्ञानां विदितवेदितव्यानां बहूनामध्यापकानामसौलभ्यात् न शक्यमेतत् सम्प्रत्येव। न खलं स्थापयितुं शास्त्रमात्रसाराणां विदुषामपि केषाञ्चन साहाय्यमात्रेण धनसंग्रहमात्रेण वा अन्वर्थनामा वैद्यकमहाविद्यालयः, अवश्यं हि ते परिचाययितव्या विद्वांसोऽपि शारीरादिनवीनविषयेषु (दुर्दैववशाद् विलुप्तप्रायेषु) शिक्षापद्धतिषु च कालोचितासु। अतोऽभ्यर्थये कर्मवीरान्—मा भून्महाविद्यालयस्य संख्याबहुत्वे स्थानविषये वा कस्यापि हठः। सर्वथा अध्यापकसौलभ्यं कार्यसौकर्य्यञ्च विचार्य स्थाप्यतां महाविद्यालयः, सफलीक्रियताञ्चास्माकं मनोरथ इति।

इदञ्चैतत् प्रसङ्गे महोदारचरितान् दानशौण्डान् परहितव्रतान् प्रार्थयामहे भारतीयनरेन्द्रान् भूस्वामिनश्च—मा तावत् स्वस्वपत्तनेषु शतशो वैद्यकविद्यालयस्थापनाय नियुज्यन्तां वो धनानि पृथग्भावेन, किन्तु एकस्यापि आदर्शभूतस्य महाविद्यालयस्य प्रतिष्ठार्थमापूर्यतां सर्वैरेकाग्रतया महाकोषः। किञ्च निजपत्तनेषु स्थाप्यन्तां भवद्भिः प्रकामं वैद्यकमतानुसारेण आरोग्यशाला औषधवितरणालयाश्च रोगशतक्लिश्यमानानां प्रजानामुपकाराय, परं न्यस्यतान्न्यस्यतामेष वैद्यकशिक्षणगुरुभारः समर्थानां सम्भूयप्रवृत्तानां भारतमान्यानां वैद्यकाचार्यधुर्याणामेव शिरसीति।

(३) अथ स्थिताभिश्च पाठशालाभिः निखिलभारतीयायुर्वेदविद्यापीठपाठ्यक्रममनुसृत्यैव स्वोत्कर्षलाभाय प्रयत्यताम्, न तु क्रियतां स्वतन्त्रवृत्त्या आरूढशाखोच्छेदाय प्रयत्नः।

ये च केचिदस्मद् दौर्भाग्यवशाद् विमनायमाना दूषयन्ति आयुर्वेदविद्यापीठं तानापृच्छामहे—स्वयमागत्य वैद्यसम्मेलने दोषान् प्रदर्श्य यथार्हं संशोधनं विधीयतामस्मत्कार्येषु, न हि न विधेया भवतामायुर्वेदविद्यापीठाधिकारिणः। अतीताश्च दोषाः क्षन्तव्या भवद्भिरिति।

किञ्च, क्षुद्राभिरपि भेषज़शारीरपरिचयागारादिभिरारोग्यशालाभिश्च उपबृंहणीयाः स्थिताः पाठशाला यथा केवलशास्त्राभ्यासनिरता दुर्विदग्धा न भवेयुश्छात्राः, यथा च आयुर्वेदाध्ययनानन्तरं आयुर्वेदविद्यापीठप्रवर्तितपरीक्षासु प्रविशेयुः। न च स्वकपोलकल्पितैः करुणापुरस्कारैरुपाधिभिः पुरस्क्रियेरन् शिष्याः। न हि सर्वैः स्वतन्त्रतया पृथक्प्रवृत्तेरायुर्वेदोन्नतिः सुकरा, सम्भूयसमुत्थितानान्तु करायत्ता फलसिद्धिः। अपराध्यन्ति चात्र वङ्गीया महाराष्ट्राश्च प्रायो येषु केश्चिदनृजुप्रकृतिभिरभिमानवशान्न तृणाय मन्यते निखिलभारतीयमायुर्वेदविद्यापीठम्।

(४) अथ चतुर्थकार्यं पाश्चात्यविज्ञानाविष्करणानां स्फुटप्रयोजनानामङ्गीकरणम्। तच्चाधिकृत्य निखिलभारतीयपष्ठवैद्यसम्मेलनसभाधिपतिना सर्वायुर्वेदबोधविशुद्धबुद्धिना अनधिगतपाश्चात्यविज्ञानेनापि अनन्धीभूतविज्ञानचक्षुषा तत्रभवता वैद्यरत्न पं० श्रीलक्ष्मीरामस्वामिना कलिकातामहानगरे यदभ्यधायि तदेव वः स्मारयामि संक्षेपेण—"मदीयश्चतुर्थ उपायो नवीनपाश्चात्यविज्ञानाविष्कारसारस्य स्वीकारणम्, स्वविज्ञानोन्नत्यै ज्ञानपूर्वकमुपयोगश्च। सर्वाणि प्राचीनार्यविज्ञानानि व्यपेतरसानीव स्तब्धानि यत्र महर्षिभिस्त्यक्तानि तत्रैव पीठे गर्तेवा सीदन्ति, न कालेन पुरःप्रचलन्ति। देशकालप्राणा न तेषु प्रविश्य तान्यनुप्राणयन्ति। ❀ ❀ ❀ भारते समायातानां विदेशीयानां विज्ञाने यत् सारभूतं तदस्माभिरात्मसादकारि काले काले। ग्रीकानामायातानां विज्ञान सारोऽस्माभिर्मन्ये ज्यौतिषिकैरिव सुविज्ञातः स्वभ्यस्तः स्वस्वशास्त्रकुक्षौ प्रवेशितश्च ❀ ❀ ❀ ❀ ❀ ❀ भारते फिरङ्गप्लेगादयो नवा नवा बहवो रोगाः कालक्रमेण प्रविष्टास्तथा चास्मदीयचिकित्सायां नवोपायसृष्टिः स्वाभाविकी। तथैव च देशान्तरागतक्रमाणां स्वीकरणं जीवितविज्ञानलक्षणम्। जीवन्नेव हि जन्तुराहारादिविभिन्नं पदार्थजातं पाचनक्रियया रसनिर्माणेन चात्मसात्करोति, एवं पाश्चात्यचिकित्साया योंऽशः सर्वोपकारी विज्ञानानुमोदितः, स स बलादस्माभिरात्मीयतां नेयः।" इत्यादि (पष्ठवैद्यसम्मेलनसभापतेरभिभाषणम्—६७ पृ०)।

दृश्यताञ्चेदम् तदुदाहरणम्—शताधिकानि निम्ब-गुडूची-पुनर्नवा-ब्राह्मीप्रभृतीनि मकरध्वजादीनि च प्रकामं गृहीतानि बलादेव पाश्चात्यैः। न च तानि तानि प्रयुञ्जाना भक्तिन्ते ख्यापयन्ति वैद्यकशास्त्रं, तन् कथं पञ्जपाणि किनैन-कोकेनादि महाप्रभावौषधानि न गृह्णीमो वयं "तदेव युक्तं भैषज्यं यदारोग्याय कल्पते"—इति प्राचीनमहर्षिवचनमनुस्मरन्तः। न खलु इयत्तया सीमानिर्देशो व्यधायि पूर्वाचार्यैः, गृहीतानि च भावमिश्रादिभिराचार्यैः चोपचीनी प्रभृतीनि यावनौषधानि अनेकशः।

अत्र च प्रसङ्गे ग्रहणीयानां रोगविज्ञानोपायानामप्यालोचनं श्रेयसे नः । उक्तं हि सुश्रुते—"षड्विधो हि रोगाणां विज्ञानोपायः—पञ्चभिः श्रोत्रादिभिः प्रश्नेन च"—इति । तच्चाप्तोपदेशमनुस्मरन्तः "ष्टेथस्कोप" ( Stethoscope ) नाम्ना युग्मनाडी-यन्त्रेण उरोरोगेषु विभिन्नश्रुतीनां श्वासशब्दानां श्रवणं कथं न कुर्याम । ज्वरसन्तापादिनिश्चयाय" त्वाचपरीक्षानुकल्पं तापमानयन्त्रं "थर्मोमिटर" संज्ञं ( Thermometor ) कथं न प्रयुञ्जीम विशेष प्रतिपत्त्यर्थम् । चाक्षुषीं परीक्षामुपयुञ्जानाः सति प्रयोजने कथं वा सूक्ष्मदर्शनार्थम् "अणुवीक्षण" ( Miscroscope ) यन्त्रं भग्नादिविज्ञानार्थं X-Ray यन्त्रञ्च न व्यवहरेम । कथं वा नोपाददीमहि मूत्रपरीक्षणे तैलबिन्दुपरीक्षया सार्द्धं पाश्चात्यपरीक्षापद्धतिमपि पुष्कलफलाम् ।

किञ्च, शल्यचिकित्सायां साक्षाद् अग्नितापेन वा जलीयबाष्पतापादिभिर्वा यन्त्र-शस्त्र-पिचु-प्लोतादीनां संशोधनं ( Asepsis and Antisepsis ), सुरासारादिभिः ( With Adsolute Alcohal &c ) त्वचां निर्दोषीकरणञ्च साम्प्रतं सर्वथैव ग्रहणीयं वैद्यैः । "अग्नितप्तेन शस्त्रेण"—इति सत्यपि सुश्रुतीयशस्त्रशोधनोपदेशे तस्य नातिस्फुटविस्तरत्वात् तत्सहकृतशस्त्रकर्मणां निर्बाधारोग्यप्रदतादर्शनाच्च अविलम्बेनावलम्बनीयोऽयंविधिः । अमुं हि विधिं प्रवर्तयन् "लार्ड लिस्टन्" नामा पाश्चात्य-चिकित्सकप्रवरः पूयोद्भवशङ्कारहितानि शस्त्रकर्माणि सर्वायत्तानि निराबाधानि चाकल्पयदिति चिरस्मरणीयाऽस्य कीर्तिः, पाश्चात्यचिकित्सकेषु । एष च विधिः सर्वथा पूयादिप्रदजीवाणूनामभावाय भावतीत्येष हि तावदस्य विशेषः ।

अस्मिंश्च प्रसङ्गे जीवाणुकारणवादमपि संक्षेपेण वर्णयिष्यामि भिषजामुपकाराय । यद्धि भोज्यद्रव्यादीनां कालकृतं वैकृतं, दुग्धस्य दध्नि परिणमनं, शुक्तस्य सन्धानं, सुरासन्धानञ्च, तत्तदखिलं विभिन्नजातीयानां जीवाणूनां बीजतया तत्रस्थितानाम् आहितानां वा अभिवृध्यैव । आघातादिनिमित्तेषु अन्येषु च व्रणेषु पूयोत्पत्तिरपि जीवाणुकारणकैव । कुष्ठविषमज्वरफिरङ्गरोगादीनाञ्चोत्पादकाः सन्ति पृथग्विधा जीवाणवः । ते च ते च पृथग्विधा जीवाणवः उपायविशेषैः शक्याः पृथक्कर्तुं मांसयूपादिषु वर्द्धयितुञ्च । परिज्ञेयाश्च ते अभिवृद्धिप्रकारदर्शनात् सूक्ष्मस्वरूपदर्शनाच्च असहायेन "अणु-वीक्षण" यन्त्रसहायेन च नेत्रेण ।

पुष्कलञ्च पश्यामो मूलं जीवाणुकारणवादस्य वैद्यकेऽपि । तत्प्रदर्शनञ्चास्माभिः सिद्धान्तनिदाने निदानव्याख्यानप्रसङ्गे यथाऽकारि—तदेव तथा अद्यापि अप्रकाशितात् "सिद्धान्तनिदान" ग्रन्थादुद्धृत्य स्थापयामो भवतां पुरतः ।

"अथात्र केचिद्विप्रतिपद्येरन्—ननु कोऽयमश्रुतचरो जीवाणुकारणवादो नाम ? नहि जीवाणवो रोगकारणानीति क्वापि ऋषिभिरनुमतं पश्यामः, उपलभ्यमानाश्च जीवाणवः कार्याण्येव दोषदूष्यविकारजानि स्युर्न कारणानीति न वयं प्रतिपद्यामहे पाश्चात्यमतं जीवाणवः क्वापि रोगकारणमिति । तान् प्रतिब्रूमः । न खलु कल्पनामात्रमिदं

केषाञ्चिद् यदेष जीवाणुकारणवादो नाम, प्रत्यक्षप्रमाणोपलब्धे स्तदन्वयव्यतिरेकानुविधायित्वाद्रोगाणामार्षसम्मतिदर्शनाच्च । तत्र प्रत्यक्षप्रमाणोपलब्धिर्यथा संक्रामकरोगेषु कुष्ठयक्ष्मादिषु प्रत्यक्षं दृश्यन्ते सूक्ष्मा जीवाणवः शोणितश्लेष्मादिगताश्चक्षुषाऽणुवीक्षणादियन्त्रसहायेन । पृथग्विधाश्चैते प्रतिसंक्रामकरोगम् । इदञ्चेदञ्च नः प्रत्यक्षं यच्चैस्तैर्जीवाणुभिः प्राण्यन्तरेषु परोक्षार्थं संक्रामितैरुत्पाद्यन्ते ते ते रोगाः । अत्र तदन्वयव्यतिरेकानुविधायित्वं च रोगाणां यथा—यत्र यत्र ते ते संक्रामिणो रोगास्तत्र तत्र ते ते जीवाणवः । यत्र यत्र न ते जीवाणवस्तत्र तत्र न ते रोगा इति । तथा च प्रतिपाद्यते कार्यकारणभावः । आर्षसम्मतिश्चात्रार्थे भूयसी दृश्यते—तथाहि कुष्ठाधिकारे सुश्रुतः—"सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्त्युपसंग्रहतस्तु दोषग्रहणमभिभवात्" इति (सु० नि० ५ अ०) । न च वाच्यं—सहचारित्वमेवेह क्रिमीणामुपदिष्टं न कारणत्वमिति । यतश्चरकार्थमनुवदन् वाग्भटोऽप्याह—"रक्तवाहिसिरास्थाना रक्तजा जन्तवोऽणवः । अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः । केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः । षट् ते कुष्ठैककर्माणः सहसौरसमातरः" इति । इह कुष्ठैककर्माण इत्युक्तेः स्पष्टमेव जीवाणूनां कारणत्वम् । एवं सुश्रुतोऽपि "रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते" (सु. उ. ५४ अ.) इति रक्तजक्रिमीणां प्रायेण रक्ताधिष्ठानजरोगकारणत्वं प्रतिपेदे । दर्शयामास च तांस्तान् रोगान् कुष्ठ-वीसर्प-पिडका-मशक-नीलिका-तिलकालक-न्यच्छ-व्यङ्गेन्द्रलुप्त-प्लीह-विद्रधि-गुल्मवातशोणितादीन् (सु. सू. २४ अ.) । इदञ्च जीवाणुकारणवादस्य बीजं दर्शयतः सुश्रुताचार्यस्य संग्रहवचनम्—"प्रसङ्गाद् गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् । सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् । कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च । औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम्" इति (सु. नि. ५ अ.) । यत्र ज्वर इति न सर्वविधो ज्वरः, किन्तु ग्रन्थिकसन्निपातादिरेवेति व्याख्येयम् । शोषो राजयक्ष्मा । औपसर्गिकरोगा मसूरिकादयः । तदेवं सुश्रुतेन संक्रामकरोगाणां संक्रमणकारणसूत्रणाय सम्यग् दिग्दर्शिता । उक्तञ्च "केशादाद्यास्त्वदृश्यास्ते" (सु. उत्तर. ५४ अ.) इति । तांश्चाधुना पृथग्विधान् जीवाणूनणुवीक्षणयन्त्रादिसहायेन चक्षुषा पश्यामोऽपि । तस्मादार्षमताऽविरुद्ध एवायं जीवाणुकारणवादः पाश्चात्यैः सम्यक् विस्तारितः परीक्षया ग्रहणीय एव । आहुश्च—"कृत्स्नो हि लोको बुद्धिमतामाचार्य" इत्युपक्रम्य "तस्मादमित्रस्यापि धन्यं यशस्यमायुष्यं लौकिकं वचः श्रोतव्यमनुविधातव्यञ्चेति" (च. वि. ८ अ.) । ननु तर्हि परमर्षिभिरेव सर्वज्ञैः कथं न सम्यग्गृहीत इति चेत् ? उच्यते, सत्स्वपि व्याधिबीजभूतेषु जीवाणुषु तदुपयोगिक्षेत्रमपेक्षितं, तच्च अब्रह्मचर्यादिक्षामं शरीरमेव । न हि सम्यग् यमनियमादिवतामप्रतिहतशक्तीनां किञ्चित्करा रोगजीवाणवः । अस्माकन्तु तादृशयमनियमाद्यशक्तानां शरीरेषु प्रकामप्रसरो जीवाणुप्रभाव इत्यस्ति जीवाणुतत्त्वपरिज्ञानस्य सार्थकता । प्रयोजनं चास्य जीवाणुकारणवादस्य जीवाणूनां संक्रमणप्रति-

षेधो निदानपरिवर्जनं चिकित्साविशेषश्चेत्युपरिष्टाद् दर्शयिष्यामो यथास्थानम् ।"—इति ।

अथ यन्त्रशस्त्राणि प्रायः कार्त्स्न्येन आयुर्वेदादेव गृहीतानि पुरा पाश्चात्यैरिति अदर्शयाम मथुरायां वैद्यसम्मेलने आपरितोषं भवताम् । तदुत्तमर्णा वयं तानि चेदिदानीं सकुसीदं गृह्णीम, न खलु वचनीया वयं विज्ञैः । एवञ्च सर्वाण्येव पाश्चात्ययन्त्रशस्त्राणि यथावद्ग्रहणीयान्येव वैद्यैरिति साहसपुरःसरं प्रतिजानीमः ।

एभिश्चोपायैः संवर्द्धितचिकित्सासाधनाःप्राच्यवैद्याः सर्वथैव प्रतिष्ठापयेयुरायुर्वेदस्य विजयवैजयन्तीमिति कस्तावदत्र दूरदर्शी सन्दिहीत ।

नचास्माभीरोगविज्ञानेऽपि प्रमदितव्यम् । कालवशेन परिवर्तिता हि नभोमण्डले ग्रहनक्षत्रादीनामपि कक्षाः, किमत्र चित्रं यदिदानीं रूपान्तरिताः केचिद्रोगाः, विलुप्ताश्चापरे, प्रादुर्भूताश्च केचन नवीना एव, तस्माच्चेदमुक्तमस्माभिः सिद्धान्तनिदाने प्राचीनवचनमुखेन—

"व्याधयोऽपरिसंख्येया भिद्यमाना भवन्ति हि ।
रुजावर्णसमुत्थान स्थान संस्थान नामभिः ॥" इत्युपक्रम्य—
"दोषदूष्यगणेऽभिन्ने संमूर्च्छन विशेषतः ।
अदृष्ट-देश-कालादि-परिणामादनेकधा ॥
पुराणाः प्रविलीयन्ते नवीनाः प्रादुरासते ।
विभिद्यन्ते स्थिताश्चाथ नृणां नानाविधा गदाः ॥" इति ।

अस्य चार्थः । दोषा वातपित्तकफाः । दूष्याणि रसरक्तादीनि तेषां गणः समूहः, तस्मिन्नभिन्ने सर्वदा स्वरूपतस्तथाविध एव वर्तमानेऽपि । अदृष्टदेशकालादिपरिणामाद्धेतोः—अदृष्टस्य शुभाशुभकर्मफलरूपस्य, देशानां कालस्य चानेकधा परिणामात् नानाविधविपर्ययात् । कालादीत्यादिपदेन नानाविधमिथ्याहारविहाराणां ग्रहणम्, तथाहि पूर्वं यादृशा मिथ्याहारविहारा लोकैः क्वचित् कदाचिदुपयुज्यन्ते स्म, तानेवेदानीं नियमेनोपयुञ्जते बहवस्ततोऽपि नवनवरोगविशेषसमुद्भव इति भावः । संमूर्च्छनविशेषतः—तथाविधविपर्ययजनित-दोषदूष्यसंघटनप्रकारभेदात् । पुराणाः प्रसिद्धाः प्राचां ग्रन्थोक्ताः प्रविलीयन्ते विलुप्ता भवन्ति, गदा रोगा इत्यन्वयः । नवीना अभिनवाश्च रोगाः प्रादुरासते प्रादुर्भवन्ति । विभिद्यन्ते स्थिताश्चेति—त एव रोगा भिन्नरूपाः सन्तो रोगान्तरवत् प्रतीयन्ते । तत्र पुराणरोगाणां विलोपो यथा शूकदोषकेशसीमंतकज्वरादीनाम्, तथाहि सुश्रुतः "व्याधयस्तत्रजायन्ते दश चाष्टौ च शूकजा" इत्यादि, "असाध्योबलवान् यस्तु केशसीमन्तकज्वरः" इति च । स्थितानां भिन्नरूपत्वं, यथा माधवीयनिदानोद्धृतचरकोक्त-समत्रिदोष-सन्निपातादेः । नहीदानीं प्रायः सन्निपातज्वरे—"कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनं" भवति । नवानां प्रादुर्भावः, यथा फिरङ्गरोग-ग्रन्थिकादीनाम्, अत्र चार्थे प्राचां सम्मतिर्यथा—चरके तत्रैव "विकारनामाकुशलो जिह्रीयान्न कदाचन । नहि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थिति" रिति । अस्य ह्ययमभिसन्धिः । अनन्ताः खलु रोगा

अध्रुवस्थितयश्च, अमी च समुत्पन्नाः समुत्पद्यमानाश्च न तावत्सर्वे शक्या निर्देष्टु-मियत्तया नामतः । ये पुनरिदानीं प्रसिद्धास्तेऽस्तेऽस्माभिनिर्दिश्यन्ते नामलक्षणा-दिभिः; कालान्तरागामिनस्तु लक्षणादिपरिलक्षणेन सम्यग् वेदितव्याः । न चेदं लज्जा-पदं यदस्मदीयसंहितायामपि केषाञ्चिद्रोगाणां न लभ्येरन् लक्षणादीनीति । निरवधिर्हि कालो विपरिणामी, नियतपरिवृत्तिशीलञ्च जगत्, कथं न्वत्र नियमो ध्रुवसंस्थानलक्ष-णास्तथाविधा एव सदा वर्तेरन् रोगा इति । अन्यच्चाह सुश्रुतोऽपि—"अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्" इति ( सू. सू. ३५ अ. ) । अस्यायमभिप्रायः । वहवः खल्वस्माभिरभिहिता रोगाः, सन्ति चेतरे समुत्पत्स्यमाना ये नेह शक्या विवरी-तुम् । उपक्रमस्तु तेषां लक्षणदर्शनाद्दोषसंयोगविशेषानुमानतो दर्शितदिशा तत्तद्दोषप्रश-मनाद्युपायविधानेन विधेय इति ।

नन्वेवमास्तां नवीनरोगसंघो नाम । तथापि यदि सौश्रुतेङ्गितानुसारेण तत्तद्रोगा-रम्भकदोषानुमानपुरःसर-दोषप्रशमनभेषजादिप्रदानेनैव तत्तद्रोगनिवृत्तिः, अलं तर्हि नवीनरोगलक्षणपरिज्ञानप्रयासेनेति चेन्, उच्यते । त्रिविधो हि रोगाणामुपक्रमो भवति—हेतुप्रत्यनीको व्याधिप्रत्यनीक उभयप्रत्यनीकश्चेति । तत्र स्वल्पबलदोषारब्धो हेतुप्रत्यनीकोपक्रमेण, मध्यबलदोषारब्धो व्याधिप्रत्यनीकोपक्रमेण । महाबलदोषारब्ध-स्तूभयप्रत्यनीकोपक्रमेण प्रशाम्यति रोगः—इति तत्त्वविदां सिद्धान्तः । वक्ष्यमाणनवीन-रोगास्तु प्रायशो मध्यबलदोषारब्धा महाबलदोषारब्धा वा दुरुपक्रमाश्चेति व्याधिप्रत्यनीको हेतुव्याधिप्रत्यनीको वैषां भवितुमर्हत्युपक्रमः । तादृशोपक्रमश्च व्याधिविशेषपनिश्चाय-कात्तच्चिकित्सा-विशेषोपदेश-काच्चागमादृते न शक्यः कर्तुम् । सौश्रुतोपदेशस्तु स्वल्प-बलनवीनरोगेष्वेव चरितार्थो नाधिकबलनवीनरोगेष्वित्यमोघ एवायमभिनवरोगलक्षण-परिज्ञानप्रयासः । किञ्च, अनभ्यस्तनवीनरोगलक्षणविशेषो भिषङ् नवीनरोगेषु परिज्ञातरोगलक्षणसादृश्याऽसादृश्यदर्शनात् संशयानो नैव वा शक्नुयारुजः प्रतिकर्तुम्, हन्याद्वातुरमसमञ्जसोपक्रमणेन । न चायमलं पूर्वत एव प्रतिविधातुं वक्ष्यमाणस्वस्त-कसन्निपातस्य पञ्चमे, सप्तमे वा दिवसे भविष्यन्तीमकस्माज्ज्वरनिर्मुक्तिं प्रायः प्राणान्तकरीम्, आन्त्रिकाख्ये वा सन्निपाते द्वितीये तृतीये वा सप्ताहे जनिष्यमाणं रक्तस्रावञ्च, तस्मादितोऽपि पुष्पकलफलो नवीनरोगलक्षणाभ्यासप्रयासः । अत-एवाहुः—"तस्माद्विकारप्रकृतीरधिष्ठानन्तराणि च । समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत् ॥" इति ( च., सूत्र. १८. अ. ) ।

५. अथ पञ्चमं कार्यमधीतायुर्वेदानां भिषजां दुर्दैवशान्नवीनायितेषु, शारीरादि-विषयेषु, केषुचिदाहृतनूतनविज्ञानेषु च उपदेशनम् । सन्ति च हन्त केचन वैद्या ये उपदिश्यमानाः प्रकुप्येयुः, सर्वज्ञाभिमानेन स्तब्धाश्च उद्विजेरन् नवीनविषयकथामात्रेण । न खलु शक्यं तादृशानुपदेष्टुम् । दिष्ट्या सन्ति चापरे ये शास्त्रज्ञा अपि स्वकीयां न्यूनतां सम्यगवबुध्य स्वगुणसम्पदि प्रयतन्ते । तादृशानां कृते सत्वरं स्थापनीयाः

पृथग्विद्यालयाः कुशलैः । सन्तु वा महाविद्यालये एव तादृशाः शिक्षकशिक्षणालयाः येषु वर्षेण वर्षद्वयेन वा नैपुण्यविशेषं कर्माभ्यासञ्चार्जयित्वा विशेषज्ञोपाधिविशेषेण समलङ्क्रियेरन् भिषजः । ईदृशेषु च शिक्षणालयेषु उपदेश्यानि—शारीरपरिचयः, शारीरक्रियाविज्ञानम्, वैकृतशारीरविज्ञानम्, रोगविज्ञानोपायाः, पञ्चकर्मविधयः, शल्यतन्त्रम्, जिवाणुविद्या, नवीनचिकित्साविधयः, व्यवहारायुर्वेदपाश्चात्यागदतन्त्रादयश्च केचन कालोचिता विषयाः । एवं सुशिक्षिताश्च वैद्याः सर्वथा राजपुरुषाणामपि श्रद्धां लभेरन् व्यवहारादिषु इति शक्यं सम्भावयितुम् । एवं विधैश्च शक्यं महाविद्यालये आयुर्वेदपाठशालासु च सम्यक् शिष्यानपि शिक्षयितुम् ।

अहो सुमहदिदं कर्तव्यजातं, शक्तिश्चाल्पा भिषजामिति च मा तावद्विमनायध्वम् । दृढप्रतिज्ञं हि सत्त्वं कार्यपारं प्रापयति—नोपकरणसम्पद् । अतः प्रार्थयामहे—सुमहदिदं कर्तव्यं पुरस्कृत्य विस्मृतकार्यान्तराः सत्त्ववन्तो भवन्तः संघशक्त्या प्रवर्तध्वम् । स्मारयामि चात्र प्रसङ्गे दृष्टान्तम्—

"रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगाः, निरालम्बो मार्गश्चरणरहितः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः, क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥" इति

किञ्च, अचिरभाविन्या वैद्यकचिकित्सोन्नतेः सन्ति साम्प्रतं शतशश्चिह्नानि । ये हि केचिदायुर्वेदमवैज्ञानिकमित्यधिक्षिपन्ति स्म पाश्चात्यमतावलम्बिनो वैद्यास्त एव स्वगृहेषु साम्प्रतं दुरारोग्य-रोगप्रतीकाराय वैद्यकचिकित्सां शरणीकुर्वन्ति, सफलकामाश्च स्तुवन्ति वैद्यकम् । सन्ति चानेके तादृशा ये पाश्चात्यमतं भूम्ना परित्यज्य वैद्यकचिकित्सामेव वृत्त्यर्थं लोकोपकारार्थञ्चाश्रयन्ते । सहस्रश्च दृश्यन्ते हन्त यूरोपीया येऽपि वैद्यकचिकित्सां प्रति भक्तिं ख्यापयन्ति । ये तु केऽपि आई. एम्. एस्. उपाधिधारिणो कर्नेल ज्याक्सन—डा. सदरलयाण्डादयः पाश्चात्यचिकित्सकाः सुज्ञातमपि सत्यमपलपन्तो वैद्यकचित्साशास्त्रं सुमहता श्रमेण आंग्लभाषानुवादमुखेन आलोचयन्तो निन्दन्ति प्राचीनविज्ञानम्, तेषां दुर्युक्तिजालमस्माभिः सर्वथा खण्डशः कृतं पूर्वं हिन्दू विश्वविद्यालयारम्भसामयिकव्याख्याने अन्यत्र च परं कारणमीदृशोपालम्भस्य स्पष्टमेव । सम्प्रति हि कलिकातादिमहानगरीषु आई. एम्. एस्. पदधारिणः पाश्चात्यवैद्यानतिक्रम्य वर्तन्ते केचन सद्वैद्या वित्तोपार्जनेन यशसा चेति दुर्विषहमेतत्तेषाम् । किञ्च पुराणदुरारोग्यरोगिणो डाक्टरपरित्यक्तान् सहस्रशो नीरुजीकुर्वन्ति भवन्तः—इत्यपि कीर्तिगाथा कर्णे प्रविश्य विदारयन्ति तेषां हृदयम् । तदेतादृशस्तेषां गात्रदाहः साफल्यमेव वैद्यकस्य व्यनक्ति ।

अथापरमपि साफल्यचिह्नं हरिद्वारे आयुर्वेदमहाविद्यालयस्थापनार्थम् अस्मत्परमसुहृदा परमोदारस्वान्तेन महोद्यमेन माननीय श्रीमत् सुखवीरसिंहमहाभागेन अन्यैश्च क्रियमाणस्य प्रयत्नस्य फलोन्मुखत्वम् । तत्र हि महानुभावैः युक्तप्रदेशीयशासनकर्तृभिः आयुर्वेदमहाविद्यालयस्थापनाय सार्धलक्षमुद्रादानं प्रतिश्रुतमिति सन्देशं वः श्रावयतः

आनन्दाश्रुभिरापूर्यते मे नयनम् । अहो प्रथमश्च चिरस्मरणीयश्च वैद्यकेतिहासे पाश्चात्यवैद्यजनाकृष्यमाणहृदयस्य पाश्चात्यराजलोकस्यायं वैद्यकानुरागः । सर्वथा इममेवं दृष्टान्तमनुसृत्य प्रवर्तेरन् अन्येऽपि राजपुरुषाः, भारतीयाः, नरपतयो धनाढ्याश्चेति सानन्दमाशंसामः ।

अपरञ्च चिह्नं सम्प्रति वङ्गेषु यशोहरप्रान्तीयवोर्डेन गवर्नमेण्टानुमोदितस्य आयुर्वेदीयधर्मार्थौषधालस्य स्थापनम् । नखल्वद्यापि केनापि प्रान्तीयवोर्डेन गवर्नमेण्टानुमोदनेनाऽरब्धमिदं कार्यम्, स्थितानाञ्च तादृशौषधालयानां विलोपनाय च प्रतिकूला अभूवन्नद्यापि राजपुरुषाणां प्रयत्नाः, एतदर्थञ्च वेदान्तवारिधिपदभाजो रायबहादुर श्रीमद् यदुनाथमजुमदार महाशयाः यशोहर 'डिस्ट्रिक्ट वोर्ड' सभाधिपतयो राजपुरुषाश्च सर्वथा धन्यवादार्हा वैद्यानाम् । आशास्महे, अचिरेणैव कालेन अन्यैरपि डिस्ट्रिक्ट-वोर्डाख्यप्रान्तीयमण्डलैः स्थापयिष्यन्ते धर्मार्थौषधालया आरोग्यशालाश्च बहुधा ।

इदञ्चावसाने निवेद्यम् । आयुर्वेदोन्नतिं कामयमानैर्भवद्भिः सर्वथा विजितेर्ष्याद्वेषाभिमानैर्विस्मृतस्वार्थै रैकमत्येन सोदरबुध्या वर्तितव्यम् । परस्परविरोधकृतैवेयं भारतीयानां दुर्दशा—मा भूद् वैद्येषु स्वार्थाभिमानान्धता सकलोपजीव्यमायुर्वेदामृतं सेवमानेषु । सन्ति तावदल्पज्ञा बहुज्ञाश्चास्मासु । परं सम्भाव्यते, विद्वेषबुद्धिं परित्यज्य निर्मत्सरैर्भवद्भिर्महोद्देश्यसाधनाय, तुल्यमेव सर्वैः प्रयतिष्यते । अपारसमुद्रापेक्षया घटजलाशययोर्योभेदः, आयुर्वेदवारान्निध्यपेक्षया स एवास्माकम् अल्पविदां बहुविदाञ्च ।

अतः सविनयं प्रार्थयामहे वैद्यलोकम्—

मोहं महाव्यसनजं विजहीहि तस्माद् एतर्हि जागृहि चिरं तमसा न भाव्यम् ।
नीहारनद्धगगनादुपसः पुरस्तादाक्रान्तसर्वहरिदन्त उदेति भास्वान् ॥



# १२

निखिल भारतीय वैद्यसंमेलनस्य द्वादशाधिवेशन-सभापतेः,

## स्वर्गीय हाराणचन्द्र चक्रवर्ति कविरत्न महोदस्य

### अभिभाषणम् ।

यः क्रोधाज्जामदग्निजं त्रिभुवनाद्दावूर्ण्य ससार्णवे वारंवारमुदारधीः प्रतिगतः संमज्ज्य शुण्डाक्रमैः ।
क्षिप्ता भूतल एव कोपमतुलं तत्याज लम्बोदरं वाञ्छापूर्णकरं गजेन्द्रवदनं तं विघ्ननाशं भजे ॥

त्वं कालिकासि कलिकल्मषनाशनाय तारासि दुर्गभवसागरतारणाय ।
मातङ्गिनी भयमतङ्ग-विभञ्जिकासि श्रीकान्तिपुष्टिविभवा कमलात्मिकासि ॥
दुर्गासि दुर्गतिहरा करुणावकीर्णा सर्वान्नदाननिरतासि सदान्नपूर्णा ।
एवं समस्तविभवैकनिदानरूपां तां त्वां नतोऽस्मि भववाग्विभवाय वाणीम् ॥

परात्परमजात्मकं परमकामसन्दोहकं श्रिया गुरुपदाम्बुजद्वयनिबिडसिद्धं रजः ।
करोतु भयभञ्जनं विविधविघ्नविद्रावणं प्रमोहतमसोऽर्द्दनं भवनिबन्धनिर्म्मोचनम् ॥

वर्षेऽस्मिन् प्रववर्ष मर्षणपरो देवो महर्ष्यर्थितो
भारान् भारत नाम भूमिवलये विद्यानिधीनां विधिः ।
येषां प्राक्किरणच्छटाभिरभितो भूमण्डलं प्रोज्ज्वलं
नो रत्नानि च कान्तिमन्ति पुरतो भान्तीह तं वीक्षते ॥
तेषामेकतमं चिकित्सितमहो रत्नं तु यत्नैर्विना
यात्येव प्रलयं प्रपश्यसि न किं नेत्रैस्त्रिभिर्भूपिता ।
त्वत्तेजोऽमृतदीधितेः करुणया पीयूषधारार्पणैः
तत्सद्रक्ष विवर्द्धयस्व नितरामुद्दीपयोद्दीपय ॥

पुरा किल नानाविद्योपार्जितयशोमण्डितपण्डितमण्डलीसमधिष्ठितेऽस्मिन् भारते वर्षे ब्रह्मज्ञाननिधयः कपिल-कणाद-गौतम वादरायणप्रभृतयो महर्षयो यथासन्, अभवंश्च ते ज्ञानगरिम्णा ब्रह्मज्ञेषु सर्वोच्चस्थानमधिकुर्वन्तः, यथा च नीतिवार्त्तादिशास्त्रेषु भृगु-कौटिल्यप्रभृतयो मनीषिणस्तत्र तन्त्रानुशीलनेन जगति प्रधानपदवीमधिरूढाः, तथैवायुर्वेदप्रवर्तका धन्वन्तरि-सुश्रुत-रक्षित-गोपुरात्रेयाग्निवेश-हारीतप्रभृतयो महर्षयोऽध्यापन-योग्याकरण-रुक्प्रतीकारादिभिः कर्मभिः शारीरतत्त्वं सम्यक् समाकलय्य बल-वर्ण सुखायुर्विधित्सवःसमस्ततन्त्रप्रणयनेन जगतां महोपकारं कुर्वन्तोऽमरतया प्रतिभासन्त इवेदानीमपि । कालक्रमतस्तत्रतत्राध्यायनाध्यापनाद्यननुशीलनेन भिषक्छद्मचर-प्रवर्ति-

ततया सुमहदायुर्वेदशास्त्रमिदानीं विलुप्ततरमिव प्रतिभाति । मोहयन्ति चेदानीं वैदेशिकपाश्चात्यचिकित्साशास्त्राणि तत्कौशलानि चायुर्वेदशास्त्रानुशीलनविमुखान् भारतवर्षीयानतत्त्वदर्शिनोऽस्मान् कुहकानिव ।

सुखसंवेदनमेतद् यदुत एवं विधेऽपि दुर्दिने आर्षशक्तिपरिहीना अपि सहसा सुप्तोत्थिता इव वयमायुर्वेदशास्त्रीयप्रकृततत्त्वमनुसन्धित्सवस्तद्विद्यसम्भाषया परस्परं ज्ञानाभिवृद्धये समवेताः स्मः । महर्षिगुणसम्पन्नजनसमालोचनीयमेतदायुर्वेदतन्त्रम्, यस्य च प्रामाण्येनानुमापितं प्रामाण्यमपौरुषेयस्यापि वेदस्य तत्रभवद्भिर्गोतमादिभिः, नानादिग्देशादागत-नानाशास्त्रपारावारपारीण-विद्वज्जनगणवरेण्य-परिपूरितेयम् परिषत्, नगरी चेयम् मुम्बादेवीसमधिष्ठिता इदानीन्तनसमस्तभारतवर्षनिकषायमाणा, तदस्यां नगर्य्यां तादृश्याः परिषदः व्यवस्थापनादि-वपुरादि तत्तद्गुणेन विरहितोऽयं जनः पतित्वेन समाहूतः शङ्कते पाटवादिविरहिततयोपहास्यास्पदतां यास्यति न वेति । आशास्ते च भवादृशैर्महद्भिः सुप्रतिष्ठितया शिलाशकलदेवत्वन्यायेन सर्वथाऽपटुतरोऽपि पतियोग्यतामासाद्य कर्तव्यसम्पादनेन परिषदमेनां कथञ्चिद्विनोदयितुं शक्यत इति । दुःखाकरोति चैनमतीव निष्कर्षः कालस्य, येनाहूतोऽयं सुदूरादर्वाक् पञ्चपेभ्यो दिवसेभ्यः ।

'तथाप्याशैशवसञ्चितप्रबलतरायुर्वेदशल्यतन्त्रानुशीलनवासना-वशीकृत-मनसा बहुतरविघ्नसङ्कुलगुरुकुलवासासहनीयश्रमसहकारेण कलनिनादादिगङ्गातटवर्ति-गङ्गाधरप्रसादलब्धेषु यत् किञ्चिदापञ्चाशद्वर्षानुशीलनलब्ध'—शल्यशालाक्यादितन्त्रनैपुण्यं तदेव विज्ञापयितुं वाग्विभवेन विना कृतोऽपि बलवदभिलापप्रणोदितया समुत्सुकोऽस्मि । तत्र च सदुःखं निवेदयामि—अध्यवसाय-जिज्ञासादिगुणसम्पन्न—सच्छिष्याभावेन बहुतरायासलब्धस्याऽपि यत् किञ्चिनैपुण्यस्य क्षणप्रभाप्रभाविकाशवदतीव विरलप्रचारः संवृत्तः । मन्ये मज्जीवनपर्यन्तस्थायिना तन्नैपुण्येन गन्धर्वपुरवन्नातिचिरं स्थातव्यमिति । सन्ति पाश्चात्यशल्यतन्त्रनिष्णाताः के चनेदानीमायुर्वेदविद्भिपगवृत्तिपरिशीलनेन विज्ञापनप्रभावमासाद्य ख्यात्यर्थोपार्जनमात्रपरमपुरुषार्थाः, ते च कविराज इति नाम्नैव परित्यक्तशल्यतन्त्रव्यवसायाः सुचिराभ्यस्तपाश्चात्यशल्यतन्त्रसाहाय्येनाप्यायुर्वेदीयशल्यतन्त्रमालोचयितुं न बहु मन्यन्ते । केचन तादृशा एव विद्वांसः प्राच्यशल्यतन्त्रमालोचनगुणवत्तादिविरहिततया सम्यग्बोधाविषयीभूतं ज्ञानगाम्भीर्यादियुक्तं भ्रमप्रसादादिकलुषितं विमृश्य नितरामुपेक्षन्ते । एवम्भूते प्रतिकूले काले वयमत्र कृतकृत्या भवितुं शक्नुमो न वेति न जानीमहे ।

मन्यामहे यद्यपि पाश्चात्यशल्यतन्त्रस्यासम्पूर्णतया प्राच्यशल्यतन्त्रमालोचयितुं कालो वर्तत इति । अत्र च भीतभीता इवाशङ्कामहे यदस्मदुक्तमाकर्णयन्तः सभ्या विषमसाहसिकतामाकलयन्तस्तीव्रकटाक्षेण निर्भर्त्सयन्त्यस्मानिति । प्रत्युत अस्मान् प्रतीच्यशल्यतन्त्रस्यासम्पूर्णतैव सिद्धये प्रेरयति, अन्यथा नवोत्साहेन प्रचरतां कृतयोग्यानां प्रतीच्यशल्यतन्त्रविदां वर्तमानतायां स्वयं सिद्धा मादृशाः प्राचीनाः कथं कथ-

मपि प्राच्यशल्यतन्त्रानुसारेण अन्तर्विद्रधिप्रभृतिष्वपि चिकित्सावकाशं लब्धुं नार्हन्ति। असम्पूर्णता च पाश्चात्यशल्यतन्त्रेषु व्रणशोथानामामावस्थासु कारणीभूतदोषानुपेक्ष्यैव यदेकजातीयमेव भेषजमुपदिष्टं, तेन च तेषां सिद्धिर्यादृच्छिकी इति। परमर्षिभिस्तु कारणभूतदोषानादायैव तत्तद्दोषप्रत्यनीकभावेन भेषजत्वेन बहुश उपदिष्टा लङ्घन-शोधन-विम्लापन-निर्वापण-विस्रावणोपनाहादयः निरत्यया उपक्रमाः, तत्प्रभावेण च सिद्धिः करतलामलकवत् सर्वत्र प्रचलति। पक्वावस्थासु च भेदनाद्यनन्तरं शोधनक्रम ( Antiseptic process ) मात्रसहायस्ते शोधन-रोहण-सवर्णीकरणादिक्रमेण प्रतिविधित्सून् परमर्षीन् स्प्रष्टुमपि न क्षमन्ते। तदिदं ब्रूमः...पाश्चात्यानां तन्त्रेषु यावन्तं कालमीदृशाभावः स्थास्यति तावदेव वयञ्चेत् शिक्षोपायावासाद्युपकरणसचिवाः सम्भूतसम्भारा भवितुमर्हामस्तदा नियतमेव बहुविघ्नसङ्कुलाया अपि प्राच्यशस्त्रप्रक्रियायाः सम्यक् साफल्यमनुभवामः।

तदत्र विवेचयिष्यते—यदुत शिक्षणीयेष्वायुर्वेदशल्यतन्त्रादिविषयेषु मुख्यत्वेनैव कतिपया एव विषया वक्ष्यमाणाः प्रथमतः साग्रहं संग्रहीतुं युज्यन्ते—विषयाश्च ते शल्यतन्त्रे शस्त्रक्षाराग्निकर्माणि, कायचिकित्सातन्त्रे च वमन-वस्त्युत्तरवस्तयः। एतेषु च वस्त्युत्तरवस्ति-शस्त्रकर्माणि पाश्चात्योपदिष्टक्रमेणैवानायासलभ्यानि भविष्यन्तीति कृत्वा तत्र नस्माभिः किमपि वक्तव्यमस्ति। दीर्घकालं सोदाहरणालोचनाद्यभावेन सूत्रकारनिविडवाक्यानामतिदुरधिगमतया क्षाराग्निकर्मादयस्तु सर्वथेदानीमभिनवत्वेनेव प्रतिभान्ति। इत एव सर्वान्तःकरणेन बह्वायासस्वीकारेणापि सावहितैः सोदाहरण-तत्तत्कर्मयोग्याकरणाय च निपुणतरं यतितव्यम्।

भो भो विरलतरप्रचरायुर्वेदोन्नतिकामाः समवेताः सुधियः! दीर्घकालं शास्त्रदृष्ट्या स्वमनीषया च गभीरगवेषणया आचरणप्रत्यक्षीकृतफलदृष्ट्या च यदुपलब्धं क्षारकर्मविषयकं तदेव समासेन किञ्चिन्निवेदयामः। आशास्महे मदीयमेतत् क्षुद्रप्रबन्धपर्यालोचनेन केचन चेच्छिक्षार्थिनः कर्मजीवनेष्वग्रेसरतामभिलपन्तस्तत्त्वबुभुत्सवोऽस्मत्सकाशात् किञ्चिदवगन्तुं समुत्सुका भवेयुस्तर्हिसानन्दमेव सोपक्रमोपसंहारं नितरामकपटं तदुपदेष्टुं प्रभवामः।

यत् प्राप्तं तदेतत्—यदाह सुश्रुतः......"तत्र प्रतिसारणीयः कुष्ठकिटिमदद्रु-किलास-मण्डल-भगन्दरार्बुददुष्टव्रण-नाडी-चर्मकील-तिलकालकन्यच्छव्यङ्ग-मशक-बाह्यविद्रधि-कृमि विषादिषु उपदिश्यते। सप्तसु च मुखरोगेषु उपजिह्वाधिजिह्वोपकुश-दन्तवैदर्भेषु तिसृषु च रोहिणीषु। एतेषु चैवानुशस्त्रप्रणिधानमुक्तम्।"

अत्र चैतेषु सर्वेषु कुष्ठेषु, अर्बुदे दुष्टव्रणे सर्वेषु च मुखरोगेषु नाड़ीभगन्दरादिषु च शास्त्रोक्तविधिना क्षारप्रयोगेणैवाशातिरिक्तं सुफलं प्राप्तम्, अतिदुःसाध्या जालिनीनाम्नी प्रमेहपिड़का, यस्याश्च 'कार्वङ्कल' इति नाम्ना पाश्चात्यानां प्रसिद्धिस्तत्रापि अनुशस्त्रं क्षारप्रयोगेणैव सुखमातुरमुत्थापयामः। किं बहुना पाश्चात्यतन्त्रप्रसिद्ध 'केन्सरा'भिधे-

येष्वसाध्येष्वपि दुष्टव्रणेषु क्षारपातनमेवातितरां युक्तं भेषजमिति बहुशः परिलक्ष्यते। अपि चास्मदनुमतशस्त्रप्रयोगसुखसाध्येषु नाडीव्रण-भगन्दरेषु शस्त्रपातभीतानामबलाजनादीनां शस्त्रपातायोग्यानाञ्च क्षीणदुर्बलानां क्षारसूत्रप्रयोग एव वरम्। एवञ्च क्षीणमूलार्बुदस्य, शस्त्रपातसुखसाध्यत्वेऽपि स्थूलमूले च तस्मिन् शस्त्रपातापेक्षया क्षारप्रयोग एव सुकरत्वेन समीचीनतया प्रतिभाति। स्रवत्प्रभूतशोणितेषु सद्योव्रणादिषु रक्तरोधकत्वेन क्षाराग्निप्रयोग एवान्तिमः पन्थेति मन्यामहे बहुशोऽभिसमीक्ष्य।

कण्ठरवेण शल्यतन्त्रेष्वनुक्तेष्वपि कतिचिद् रोगनिचयेषु दृष्टान्तेनानेन क्षारप्रयोगस्य यदननुभूतपूर्वां सिद्धिमुपलभामहे तत्प्रकाशप्रलोभनमिदानीमतिवर्तितुं न शक्नुमः। यद्येतदपि विदितमस्ति यदस्माभिरुद्भावितेयमभिनवप्रणाली न कथमपीदानीं प्रोत्साहयति भिषजः सर्वानेवानायासेन तथाप्यनुमन्यामहे केऽप्युत्पत्स्यन्ते वर्त्तन्ते वा तादृशो भिषजो विपुलेऽस्मिन् भूमिवलये येषामनुशीलनपरम्परयाऽस्माभिः सूत्रितेयं शैली कालेन जगतामुपकाराय प्रभविष्यति।

तत्र गण्डेषु महर्षिभिः सुव्यक्तमनुक्तस्यापि क्षारप्रयोगस्य सुफलतायाः दृष्टचरता नियोजयति मां परिषदः सकाशे व्याहर्तुम्।

विशेषतस्तु कफजादिवृद्धावपि बुद्ध्यावेक्ष्यावेक्ष्य अस्मत्प्रयुक्तः क्षारः शस्त्रपातशङ्काऽनाकुलिततया निरवशेषमातुरमारोग्येणोपयोजयतीति पश्यामः। निवेदितमेतत् सविस्तरमस्मत्प्रणीते सुश्रुतार्थसन्दीपनाख्ये सुश्रुतसंहिताभाष्ये तद्यथाः..........

"तत्र क्षारपाचनक्रमस्त्वसुकरः सुचिरं गुह्यप्रविष्टश्चेति विशदं निवेदयिष्यामः। तद्यथा प्रथमन्तावदेकतो वृद्धावेकस्मिन् पार्श्वे उभयतश्चोभयोः पार्श्वयोः कनिष्ठाग्रमितं मुष्कप्रदेशं काकोडुम्बरादिजैः कर्कशैः पत्रैर्विघृष्य शस्त्रेण वा विलिख्य द्वित्राणि दिनानि क्षारं पातयेत्। ततः क्षारभक्षितत्वेन प्रसुप्तेऽस्मिन् देशे हंसपक्षनाडी-परिणाहां पृथुमुखीं लौहशलाकां शनैः शनैर्भ्रामयन् प्रवेशयेद्यावन्नातुरो वेदनामनुभवेत् शोणितं वा नागच्छेद्। अनुभूतायां वेदनायां शोणिते वागते पुनः क्षारं निपात्य यथावसरं कच्चीनालं प्रवेश्य कच्चीपत्रेणैवाच्छाद्य वस्त्रपट्टेनावेष्ट्य बध्नीयात्। सर्वमेवं दैनन्दिनं कुर्यात् यावद् भिन्नान्तरावरणत्वेन अन्तरुदकं सवेगं नागच्छेदागते चोदके प्राग्वत् कच्चीनालं प्रवेश्य जयन्तीपत्राणि अग्निसन्तप्ते पिठरे सममङ्गुलोत्सेधं विन्यस्य वस्त्रावच्छन्नेन पाणिना प्रपीड्य 'रोटी' इति प्रसिद्धं पिष्टकमिव कृत्वा कदलीपत्रोपरिविन्यस्तेन सर्वतः वृषणमावेष्ट्य वस्त्रपट्टेन बध्नीयात्। मुञ्चेच्च द्व्यहात् त्र्यहाद्वा यावदारोग्यदर्शनात्। उपद्रवञ्च यथास्वं प्रतिकुर्वीत।" इति।

समादिष्टमपि शास्त्रकृद्भिः परमर्षिभिः गुल्मरोगेषु पानीयक्षारप्रयोगमुपेक्ष्य प्रतिसारणीयक्षारप्रयोगेण कतिचिदातुरानुत्थापयितुमशक्नुमः। कोष्ठग-व्याधिषु प्रतिसारणीयक्षार-प्रयोग-व्यवस्थायाः सविशदमनुक्ताया अपि साफल्यमनुभूय "एवमन्यान्यपि बुद्ध्यावेक्ष्यावेक्ष्य यत् साधु मन्येत तदपि कुर्वीत" इति स्मरणं प्रेरयत्यस्मान् तामेवा-

श्रयितुम्। सर्वेष्वपि गुल्मेषु न तावदेषा कार्यकारिणी भवितुमर्हति। यत्रैव उदराच्छादककलामात्र-निम्नवर्त्ती भवेत्तत्रैवैषा समाश्रयणीया। तत्र च प्रयोक्तव्ये क्षारे गुल्मस्यावस्थानस्थानं सम्यङ् निर्णीय तत्केन्द्रीभूतस्थानमासाद्य व्रीहिमुखेन शस्त्रेण तथा व्यधनं कर्त्तव्यं यथा गुल्मस्यापि चतुर्भागैकभागोऽपि विद्धो भवेत्। ततः शस्त्रमुद्धृत्य तेनैव छिद्रपथेन शलाकया प्रतिसारणीयक्षारं गुल्माभ्यन्तरं प्रवेशयेत्, ततः व्रणमुखं मध्वाज्येनाभ्यज्य यथोक्तं बन्धमाचरेत् व्रणितोपासनीयञ्चावेक्षेत। एवं कृते प्रदाहानन्तरं गुल्मः सम्यगेव प्रचलीयेत। प्रचुरतरमांसशोणितसम्भृते दीर्घकालोच्छ्रिते गुल्मे च तादृशः प्रयोगश्चेत् तद्गतमांसशोणितकोथमापाद्य गुल्मं तमात्मशक्त्या विपाचयेत्तर्हि अन्तर्विद्रधिवदुदराच्छादिकां कलां विपाट्य व्रणं संशोध्य व्रणबन्धं बध्नीयात् व्रणितोपासनीयञ्चावेक्षेत। इत्येवं परैरपरिशीलितः पन्थाऽस्माभिरुद्भावितः।

कायचिकित्सायाञ्च असाध्यत्वेनाभिहितेषु श्वित्रार्शःसु सयुक्तिकं क्षारप्रयोगेणैव शश्वदेवासंशयमातुरमारोग्येणोपयोजयामः।

सत्स्वपि बहुषु वक्तव्येषु समयाभावेन अप्रस्तुततया एतावन्मात्रमुक्त्वैव विरमामः यत्—ये तावत् पाश्चात्यभाव-भाषानुप्राणिताः तद्विद्यसम्प्रदाया ईदृग्ज्ञानगम्भीर्यादिगुणयुक्ततया सर्वाङ्गसम्पूर्णमप्यायुर्वेदशास्त्रम् अवैज्ञानिकत्वेन अव्यवहार्यतामारोपयन्त उपहसन्त इव उपेक्षन्ते तान् प्रति न किमपि वक्तव्यमस्ति। ते यद्यपि सम्यगालोच्य आयुर्वेदशास्त्रं, तत्र अवैज्ञानिकत्वादिदोषानानुभूय तथा प्रतिपद्येरन् तर्हि न भविष्यत्यस्माकं किमपि दुःखकारणम्, प्रत्युत आस्तां तावत्तेषामायुर्वेदज्ञानं, नास्ति तेषां तद्भाषापरिचयोऽपि। न पुष्णन्त्येवमभिमतं सर्वतत्त्वार्थविदः। आशंसामहे नाम्ना समक्षकारितया च सभ्यानां के नाम न विदाङ्कुर्वन्ति कलिकातामहानगरीवास्तव्यम् इदानीं स्वर्गतं तत्र भवन्तं शल्यहर्त्तारं सुरेशप्रसाद-सर्वाधिकारिणम्। एकदा सुश्रुतार्थसन्दीपनभाष्यं समालोचनतया ते न कथाप्रसङ्गतो निम्नोद्धृतमभिसमीक्ष्य अभिहितन्तावद्—एतादृक् चिकित्सानैपुण्यम् अत्युन्नतपाश्चात्य-शल्यतन्त्रेषु नातितरां वर्तत इति। पाश्चात्यतन्त्रेष्वनभिज्ञा वयं न जानीमहे किमेतत् तथ्यमतथ्यं वेति, सुधियः समवेता भवन्त एव तत्र प्रमाणम्। किन्नाम तद्वचनं यत्तादृशमपि शल्यहर्तारं विस्मापयत्यञ्जसा—उच्यते—

"अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं नान्यथा भवेत्, पिपीलिका-शिरोग्रस्तं तदप्येके वदन्ति तु ॥
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः, प्रवेशयेत् कृत्तनखो घृतेनाक्तं शनैः शनैः ॥
प्रवेशयेत् क्षीरसिक्तं शुष्कमन्त्रं घृताप्लुतम्, अङ्गुल्याभिमृषेत् कण्ठं जलेनोद्वेजयेदपि ॥
हस्तपादेषु संगृह्य समुत्थाप्य महाबलः, भवत्यन्तःप्रवेशस्तु यथा निर्धुनुयुस्तथा ॥
तथान्त्राणि विशन्त्यन्तः स्वां कलां पीडयन्ति च, व्रणाल्पत्वाद् बहुत्वाद्वा दुष्प्रवेशं भवेत्तु यत् ॥
तदापाट्य प्रमाणेन भिषगन्त्रं प्रवेशयेत्, यदास्थानं निविष्टे च व्रणं सव्यीदेतन्द्रितः ॥
स्थानादपेतमादद्ये प्राणान् गुम्फितमेव वा, वेष्टयित्वा तु पट्टेन घृतमेकं प्रदापयेत् ॥
घृतं पिबेत्सुखोष्णञ्च चित्रातैलसमन्वितम्, मृदुक्रियार्थं शकृतो वायोश्चाधः प्रवृत्तये ॥"

इति सुश्रुत चिकित्सा, २ अध्या०।

अत्रैतावदेव वक्तव्यमस्ति यद् ज्ञानविज्ञानप्रभवस्यापि भगवत ईदृग्ज्ञानकार्पण्यं के नाम कृतबुद्धयो विश्वसन्ति यद् भारतेऽस्मिन् वर्षे मानवानुत्पाद्य तेषां रुक्प्रतीकारोपकरणं पारावारापरपारेषु स्थापयाम्बभूव ।

मन्यामहे—येनैव दुर्दैववशेन सुसभ्या अपि वराका वयं देशान्तरजातेन वस्त्रादिना निवारयाम आत्मनोलज्जाम्, यथैव दुर्भाग्यतया आहारेषु प्रधानसाधनं लवणमपि परमुखापेक्षितयैव संगृह्णीमः, यथैव निर्बुद्धितया अस्मद्देशीयानां देशकालाऽसात्म्यम् आहारविहारादिकं विहाय अस्मत्प्रतिकूलेषु आहाराचारादिषु यतमाना ध्वंसोन्मुखा अपि न प्रतीमः—तदेव दुर्दैवं सैव दुर्भाग्यता सैव च निर्बुद्धिता चिकित्सायामपि परमुखानि अपेक्षयितुमस्मान् प्रेरयति । अहो विन्दमानां सुखविरेचनीं निरत्ययां हरीतकीमपहाय विदेशजातमशोधितपारदविकृतिं 'क्यालोमेल' इति पाश्चात्यैराख्यातं समुपसेवमानास्तज्जैरुपद्रवैः सर्वथा परिपीडिता अपि न कुण्ठिता भवामः ।

अत एव ब्रूमो वयम्—अयि सकलगुणगणपारावारापरपारीणाः समवेता भिषजः! नानाविद्यासु वैशारद्यं लभमाना अपि भवन्तः साष्टाङ्गायुर्वेदतन्त्रस्य सुविशदं समनुशीलनेन पुनरुज्जीवयितुमर्हन्ति चेदेतच्छास्त्रं, तदैव भवतां शास्त्रसेवा सार्थिका भविष्यतीति मन्यामहे । नो चेद् भवद्भ्यो भीतभीता इव विद्यैषा देशादस्माद् अचिरादेव तिरोहिता भविष्यति । उक्तञ्च कविना—

"बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति"

इति शम् ।





श्रीमान् वैद्य पंचानन पं. कृष्णशास्त्री कवडे बी. ए. पूना।
अध्यक्ष, नि भा. व. १३ वैद्यसंमेलन राजमहेन्द्री (सन १९२२)।
प्रधान मंत्री, आयुर्वेद महामण्डल।

॥ श्रीः ॥

वैद्यपंचाननानां निखिलभारतीयत्रयोदशवैद्यसंमेलनाधिवेशनाध्यक्षाणां

# पण्डित कृष्णशास्त्रि कवडे बी० ए० महोदयानां

## जीवन चरित्रम् ।



श्रीमतां कवडे इत्युपाह्वानां कृष्णशास्त्रिणां महाराष्ट्रीयपुण्यपत्तननगरमलंकुर्वणानां सुप्रथितयशोमहिम्नां विदुषां परिचयकरणं पुनरुक्तप्रायमेव । तथापि कीर्तिमत्पुरुषयशोवर्णनं उत्तुंगयशोगिरिशिखरमारुरुक्षुणां आरोहणक्षमां क्षुण्णसरणिं दिशन् महदुपकारकं भवतीति मनस्याधाय किंचित्प्रयत्यते—

महाराष्ट्रदेशे ये केचन चिरलायुर्वेदपारावारीणस्तदुन्नत्ये सततंबद्धपरिकराः कृतानेकपरिश्रमाः शुभनामधेयाः सांप्रतं विलसंति तेषु पंडितप्रवराः कृष्णशास्त्रिणो मूर्धन्या एव । एभिर्विद्वद्वरैः शाके १८०५ तमेवर्षे भाद्रे मास्यसिते पक्षे द्वितीयायां तिथौ स्वजन्मना स्वजनकजननीसंतोषमुदपादि । अष्टवर्षात्मकः श्रीमतां जीवनक्रमो जन्मग्रामे 'पिंपरीपेंढार' इत्याख्ये गतः । नवमे हायने बुद्धिकौशाग्र्यं संपादयितुं भगवत्याः सरस्वत्याः प्रसादमभिकांक्षन्तो पुण्यपत्तनमागमन् । खैस्तीये १९०५ शकाब्दे पुण्यपत्तन एव राष्ट्रीयसभायां स्वकीयैस्तरुणसतीर्थ्यैं सह स्वदेशव्रतं निश्चयेन साकं शपथीकृतम् । तदुध्याचर्यमाणं तद्व्रतं सर्वेषां विदितप्रायमेव । पंडितप्रवराणामांग्लशिक्षणं पुण्यपत्तनस्थायां 'न्यू प्रेपरेटरी क्लासेस्' इत्याख्यायां शिक्षणसंस्थायां जातं, तस्मिन्नेव काले श्रीमद्भिः, कै० प्रो० जिनसीवाले, लोकमान्य तिलक, अप्पासाहेब परांजपे, इत्येतेषां महाशयानां व्याख्यानश्रवणेन आंग्लशिक्षणानंतरं कस्यामपि परकीयसंस्थायां दास्यत्वं न स्वीकर्तव्यमिति महान् निश्चयोऽङ्गीकृतः । यदा तु भुवः स्वदेशविषयको महानुद्योगः प्रादुर्भूतस्तदा एभिर्महाभागै स्वकीयं तीक्ष्णतरं स्वदेशव्रतमंगीकृत्य शिक्षणसंस्थायामपि स्वदेशविषयकमतीव संचलनं दत्तम् । महाभागैः खैस्तीये १९०६ शकाब्दे स्वबुद्धि कौशलेन 'बी० ए०' इत्यांऽग्लशिक्षणोपाधिर्लब्धा । पदवीप्रापणानंतरं पुण्यपत्तनस्थायां 'भावेस्कूल' इत्याख्यायां संस्थायां शिक्षकत्वेन वर्षद्वयपर्यंतं सानंदं सोल्लासं च कार्यं कृतम् । किन्तु खैस्तीये १९०८ शकाब्दे लोकमान्य तिलक, दे० भ० शिवराम महादेव परांजपे, इत्येतयोर्राष्ट्रकार्यकारिणोः स्वदेशशकटधुरंधरयो रुपरि यद्राजद्रोहात्मकत्वेन नियंत्रणं जातं तत्संबधिनं पुस्तकमेषां परमपूज्यैः भ्रातृभिः प्रसिद्धीकृतं, तस्य च रूपांतरकरणे एषां महाभागानां नामाऽग्रेसरत्वेनभावेस्कूलाधिपैः श्रीमद्भिः 'किंकेड' इत्युपाह्वैर्दृष्टम् । तेन च कृष्णशास्त्रिणां तच्छिक्षणसंस्थायाः पूर्वसंबंधः लुप्तः ।

अनन्तरं व्यवहारन्यायशास्त्रस्याध्ययनं कर्तव्यमिति मनसि निश्चित्य कृष्णशास्त्रिभिस्तस्याध्ययनमारेभे । किंतु श्रीमतां 'भाऊसाहेब लवाटे' इत्युपाह्वानामिदं न्यायविदः कर्म युष्मभ्यः अनुचितमित्येवंरूपेण संवादेन तदध्ययनं तथैव समुच्छिष्टम् । ततः देशभक्तिपरायणैः बाबासाहेब परांजपे इत्युपाह्वैर्महाभागैस्त्वयायुर्वेदीयमध्ययनं कर्तव्यमित्यतीव प्रेम्णा सूचितम् । तच्छिरसा प्रमाणीकृत्य वै० शा० सं० वैद्यरत्न गणेशशास्त्री जोशी, वै० शा० सं० सदाशिव वासुदेव भावे,

इत्युपाह्वयोर्विद्वद्वरेण्ययोः साकं चरकसंहिताऽध्ययनं प्रारब्धम्। अनया पद्धत्या संपूर्णायुर्वेदीय-शिक्षणं वैद्यवरेभ्यः भावेशास्त्रिभ्यः सकाशात्संपादितम्। तदेव प्राणाचार्य-बालशास्त्री लागवणकर, वै० शा० सं० अप्पासाहेब पटवर्धन इत्येताभ्यामन्यैश्च बहुभिरायुर्वेदपारावारीणैः सहाऽऽयुर्वेदीया सुसम्भाषा कृता। एतेहि मथुरानगर्यां पञ्चमायुर्वेदीय वैद्यसम्मेलनावसरे 'वैद्यपञ्चाननेति' पदवीमलंकुर्वन्ति स्म।

तस्मादद्यावधि प्रतिवर्षं सम्मेलनाय गत्वाऽऽयुर्वेदशास्त्रसेवां कुर्वन्ति। तथा चाऽऽयुर्वेदशास्त्र प्रेम्णा प्रान्तीयराजकीयसभातस्तथा वरिष्ठराजमण्डलसभातः आयुर्वेदशास्त्रपुनरुज्जीवनार्थं अतीवप्रयतन्ते। खैस्तीये १९१२ शकाब्दे यदा ऑंग्लवैद्यानां रजिस्टर इत्याख्यस्य नियंत्रणस्य प्रश्नः सर्वस्मिन् देशभागे प्रचलितस्तदा पुण्यपत्तनस्थायुर्वेदीयौपधालयस्य नामशेषकरणसमये 'लोकमान्य तिलक' दे-भ हरीनारायण आपटे, इत्येतयोर्महानुभावयोः स्वदेशसेवाकार्यधुरीणयोः साकं प्रयत्नं कृत्वा (ना० ना० सि० कामत इति) महाभागतः 'मुम्बई कायदे कौंसिल इत्याख्यया राजशासनसंस्थया' औपधालयः सुरक्षितः। तद्वदेव प्रतिवर्षं आयुर्वेदीयवैद्यसम्मेलनावसरेऽपि प्रश्नं समुत्थाप्य सर्वस्मिन् देशभागे म्यु० पा०, लो० बोर्ड इत्याख्याभिसंस्थाभिः प्रस्तावरूपेण विना मूल्यं औपधालयस्थापनरूपकार्यकरणे प्रयत्नः कृतः। तस्यैवाद्य भारतवर्षे 'म्युनिसिपालिटी' डि० लो० बोर्ड, इत्येतासां संस्थानां धर्मार्थायुर्वेदीयौपधालयोद्घाटनरूपं प्रत्यक्षदृष्टफलं वर्तत एव। तथैव श्रीमद्भिः पुण्यपत्तन एव महाराष्ट्रीयायुर्वेदविद्यालयः स्थापितश्च तत्रैवाध्यापनकार्यं कृतम्। कलकत्ता नगरे च मद्रास नगरे यथाक्रमं षष्टं सप्तमं वैद्यसम्मेलनं गत्वा अष्टमायुर्वेदीयवैद्य संमेलनं पुण्यपत्तने निमन्त्रितम्। तस्य च संमेलनस्य मन्त्रिपदं स्वयमेव स्वीकृत्य संमेलनागतसङ्कट-समूहान् दूरतः निःसार्य संमेलनकार्यधूः सुव्यवस्थिततया—ऊढा। अष्टमायुर्वेदीयसंमेलनं कीदृक् जातं एतत्तु सर्वेषां विदित प्रायमेव।

ततः राजमहेंद्रीनगरसंजाते त्रयोदश वैद्यसम्मेलने पंडितप्रवराः कृष्णशास्त्रिणः अध्यक्षपद-मारूढाः। तदाहि पूर्वक्रमेणैवायुर्वेदोद्धरणकार्यमतीवसुमनोहरं कृतम्। अद्यापि राजसभायां वा यत्र कुत्रापि आयुर्वेदोद्धारार्थमुचितः समयः प्राप्तश्चेत् तत्र यत्रायुर्वेदं पुरस्कृत्य प्रयत्नो विधीयत एव महाभागैः। तथा च निखिलभारतीयायुर्वेद विद्यापीठशिक्षणक्रमनिश्चयकरणसमितेः सभासद आसन्। तथा च जनस्थाने एकोनविंशतितमं वैद्यसम्मेलनमागत्य पाश्चात्य-पौर्वात्यपद्धत्यनुरोधेन स्वलिखितं निःसंदिग्धं, शास्त्रीयविवेचनपरिप्लुतं, पंडितप्रवरसंमान्यं, क्षोमनिर्णयात्मकं प्रबंधं निर्माय संपाद्य स्वयं मुद्राप्य च तस्य प्रसिद्धीकरणं कृतम्। इत्येवंरूपमायुर्वेदोद्धारार्थं कृतप्रयत्नानां पंडितवरेण्यानां कृष्णशास्त्रिमहाभागानां संक्षेपतः चरित्रं वर्तते। अस्तु, एते हि महाभागाः दीर्घायुषः भवन्त्विति श्रीशचरणकमले प्रार्थनां कृत्वा विरमामः। *

---

* मई सन् १९३० वर्षीय वै० स० पत्रिकातः समुद्धृतम्।

निखिल भारतीय त्रयोदश वैद्यसम्मेलनस्य सभापते-

## वैद्यपञ्चानन पण्डित कृष्णशास्त्रिकवडे बी० ए० महाशयस्य

### अभिभाषणम् ।

गुणत्रयविभेदेन मूर्तित्रयमुपेयुषे । त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥१॥

ब्रह्मदक्षाश्विदेवेशभरद्वाजपुनर्वसु—सुताग्निवेशचरकप्रभृतिभ्यो नमो नमः ॥२॥

योगेन चित्तस्य पदेन वाचां, मलं शरीरस्य च वैद्यकेन

योऽपाकरोत्तं प्रवरं मुनीनां, पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥३॥

नमामि धन्वन्तरिमादिदेवं, सुरासुरैर्वन्दितपादपद्मम्  ॥४॥

लोके जरारुग्भयमृत्युनाशं, दातारमीशं विविधौषधीनाम् ॥५॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥६॥

१. अयि विद्वद्वरेण्याः, आयुर्वेदाभिवृद्धिमभिकांक्षमाणा गोदावरीपुण्यतटनिवासिनः, आयुर्वेदपारावारपारीणा भिषग्वर्याः, सभ्याः सभास्ताराश्च, विदितचरमेवैतच्छ्रीमतां यदस्य त्रयोदशवैद्यसंमेलनस्य सभापतिस्थाने मोहमयीस्थानां आयुर्वेदमार्तण्ड यादवजी त्रिकमजी आचार्यशर्मणां योजना स्वागतसमित्या पूर्वं कृताऽऽसीदिति । मम परमसुहृद्भिर्यादवजीशर्मभिः संशोधितं माधवनिदानं केन न पठितम् ? चरकसंहिता केन नावलोकिता ? वर्षद्वयात्प्रागेव प्रकाशिता श्रीडल्हणटीकासमन्विता सुश्रुतसंहिता कस्य दृष्टिपथं नागता ? अपरं चायुर्वेदीयग्रन्थमालायां श्रीमच्छङ्कराचार्यगुरुश्रीमद्गोविन्दभगवत्पादाचार्यविरचितस्य रसहृदयतन्त्रस्य, यशोधरविरचितस्य रसप्रकाशसुधाकरस्य, शोढलवैद्यविरचितस्य गदनिग्रहस्य, श्रीमदुपाध्यायविरचितस्य आयुर्वेदप्रकाशस्य,-रससाररसायनखण्ड-राजमार्तण्ड-रससंकेतकलिका-वैद्यमनोरमा-धाराकल्प-नाडीपरीक्षा-द्यनेकायुर्वेदीयाप्रसिद्धग्रन्थानां संशोधनं प्रकाशनं च कृत्वा यादवजीशर्मभिः आयुर्वेदस्य या महती सेवा कृता, आयुर्वेदीयसंमेलनस्य आयुर्वेदविद्यापीठस्य च यन्महत्कार्यं संसाधितं तदनुसृत्य तेषां योजना सभापतिस्थाने एतत्पूर्वमेव भवितुमुचिताऽऽसीत् । संवत्सरेऽस्मिंश्च मम परमसुहृद्वर्याः यादवजीशर्माणः संमेलनस्याध्यक्षपदमलङ्करिष्यन्तीति श्रुत्वा चाहं परं संतुष्टोऽभवम् । आसीच्च मे मनसि महती आशा यदस्मिन्संमेलने आयुर्वेदोद्धारार्थं मनोवाक्कायकर्मभिर्यतमानानां भिषक्श्रेष्ठानां साररूपममृतोपममुपदेशं शृणुयाम इति । परं मासद्वयात्पूर्वं यादवजीशर्मभिः स्वागतसमित्यै पत्रं प्रेषयित्वा 'अध्यक्षपदं स्वीकर्तुमसमर्थोऽस्मीति' निवेदितम् । अनन्तरं

स्वागतसमित्या चैकमत्येन धुर्यपदं मयि समारोपितम्। मम सुहृच्छ्रेष्टैः ए० लक्ष्मीपतिभिश्च तन्त्रीद्वारेण 'कृपया अध्यक्षपदं स्वीक्रियतामिति' सनिर्बन्धं प्रार्थना कृता। वरतरमभविष्यद्यदि मत्तोऽप्यर्हतरः कश्चिद्वयोवृद्धो ज्ञानवृद्धो भिषक्श्रेष्टोऽध्यक्षपदे वृतोऽभविष्यत्। मत्तोऽप्यर्हतरेषु विद्यमानेषु भिषग्वरेष्वस्यां संसदि ममैव योजनां सभापतिस्थाने कृत्वा महान्मे गौरवः श्रीमद्भिः कृतः। अनुल्लंघनीया हि आयुर्वेदोद्धारार्थं सर्वथा बद्धपरिकराणां तत्र बहुशः कृतोद्यमानां श्रीमतामाज्ञा। नायं मम सम्मानः। अपि तु वयोवृद्धानां ज्ञानवृद्धानां गुरुकल्पानां महाराष्ट्रीयभिषगग्रेसराणामेवायं सम्मान इति विचिन्त्य प्रणतिशतपुरस्सरं साभिनन्दं साभारं चैतत्स्थानं स्वीकरोमि। कार्यभारनिर्वाहे च यद्यपि मम शक्तिरतीव परिमिता तथापि सर्वात्मना समुद्यमं कर्तुं कृतनिश्चयस्य मे महदनुग्रहात्तत्रभवतां भवतां साहाय्येन च सर्वं कार्यं निरंतरायं भवेदिति दृढं विश्वसिमि। अयि श्रेष्ठाः! अनाघ्रातसाहित्यशास्त्रगन्धस्य मे भाषणं विद्वत्तोपाय न भवेदिति दृढं प्रत्येमि। तथापि केवलं स्वाभिप्रायो गीर्वाणवाण्या प्रकटीकरोमीति धियैव सुधियो भाषणमिदं शृणुयुरिति प्रार्थये।

२. अयि भिषक्श्रेष्टाः, विदितचरमेव सर्वेषामत्र समागतानां यद्दिवंगतानां शंकर दाजीशास्त्री पदे महाभागानां प्रयत्नैर्निखिलभारतवर्षीयवैद्यसंमेलनस्य प्रथमाधिवेशनं श्रीगोदावर्याः प्रभवस्थानादनतिदूरे नासिकक्षेत्रे गोदावरीतटे षडधिके ऊनविंशतितमे ऐशवीये संजातम्। ततश्च पनवेल, प्रयाग, कानपुर, मथुरा, कलिकाता, मद्रास, पुण्यपत्तन, लाहोर, देहली, इंदोर, मुंबई, एवं भारतवर्षे नगरान्नगरं गत्वा गोदावर्याः प्रवाहमिव प्रतिवर्षं अधिकाधिकं लोकसंमतं भूत्वा पुनरपि गोदावरीमुखादनतिदूरे स्थितं राजमहेन्द्रीनगरं संप्राप्तम्। श्रीगोदावरीमाहात्म्ये 'आदावन्ते च दुर्लभा' इति गोदावर्या महात्म्यं वर्णितम्। परंतु संमेलननिमित्तेनात्रागतानां सर्वेषामस्माकं सा सुलभा संजातेत्यहो भाग्यम्। सप्तर्षिनामभिः प्रसिद्धैः सप्तभिर्मुखैः श्रीगोदावरी इतोऽनतिदूरे समुद्रं प्रविशति। निखिलभारतवर्षीयवैद्यसंमेलनमपि एवमेव दिने दिनेऽधिकाधिकं लोकादरास्पदं लोकप्रियं च भूत्वा भारतजनतामहोदधौ प्रांतीयसंमेलनरूपैरनेकमुखैरनिरुद्धसंचारं करिष्यति। इतः परं चायुर्वेदस्याभ्युदयेन लोकानां स्वास्थ्यरक्षणं प्राणरक्षणं चेतोऽप्यधिकतरं भविष्यतीति शुभचिन्हानि स्पष्टतरं दृश्यन्ते। आंध्रदेशस्तावत्प्रथममेव गोदावर्याः पुण्यप्रवाहेण पावनः संजातः। परमपरमप्येकं कारणं विद्यते येन श्रीमतां देशः पावनतमः संवृत्तः। यतोऽद्वैतमतप्रतिष्ठापकाः श्रीमच्छङ्कराचार्याः, विशिष्टाद्वैतमतप्रतिपादकाः श्रीरामानुजाचार्याः, द्वैतमतप्रवर्तकाः श्रीमध्वाचार्याः, शुद्धाद्वैतमतोपदेष्टारः श्रीवल्लभाचार्याः, किमु विशेषतया वक्तव्यम्, अद्यावधि सुप्रथिताः सर्वेऽप्याचार्याः आत्मजन्मभिरांध्रदेशमेव कृतार्थमकुर्वन्, इत्याचार्यप्रसविष्णुरयं देश इति नाविदितं श्रीमताम्। वेदविद्याया वैदिककर्मणां च प्रायः सर्वत्र लोपो विद्यते। अत्रः पुनः सर्वं यथापूर्वं दरीदृश्यते। मोगलनृपाणां काले उत्तरभारते महाराष्ट्रेषु च ये विघ्नोपनिपाता

अपतंस्ते श्रीमतां भाग्येनांध्रदेशेऽननुभूताः। यावनधर्मग्रंथे कुराने यद्यन्नास्ति तत्सर्वं मिथ्याऽस्ति। जगति च यद्यत्सत्यं तदवश्यमेव कुराने विद्यते। अतो यवनधर्मग्रन्थ-कुरानव्यतिरिक्तं यस्यां कस्यामपि भाषायां यद्यल्लिखितं तत्सर्वं सर्वात्मना नाशनीयमिति सिद्धान्तमुररीकृत्य अवरंगजेबनृपः प्रतिदिनं यावच्छक्यं संस्कृतग्रन्थेन्धनप्रज्वलिताग्नि-प्रतप्तेन जलेन स्नानं संसाधयन्नासीदिति एल्फिन्स्टनसंपादिते इतिहासे सुप्रथितमेव। एतादृशानां नृपतीनां राज्यं श्रीमतां भाग्येन आंध्रदेशे नासीत्। तेन च भारतवर्षस्या-परस्मिन्भागे ग्रन्थसंपन्नाममात्रा स्थिताऽपि श्रीमतां देशे आयुर्वेदग्रन्थसंपदद्यापि स्पृहणीयावस्थायां वर्तते। अति प्राचीने भेडकाश्यपसंहिते अद्यापि इतोऽनतिदूरे तञ्जापुरीसरस्वतीभाण्डागारे एवोपलभ्येते। संहिताद्वयमप्येतदांध्रभाषायामेव लिखित-मिति विशेषः। याश्च भेडसंहिताः सांप्रतमुपलभ्यन्ते ताः सर्वाः अस्यैव ग्रन्थस्य प्रतिकृतयः। डॉ० होर्न्लेमहोदयमतानुसारेण अस्य लेखनकालः ऐशवीयाधीधिकषोडश-शतकम्। इयं भेडसंहिता गतसंवत्सरे एव कलिकाताविश्वविद्यालयसंस्थायाः कृते आशुतोषमुकर्जीमहाभागैः संशोधनपूर्वकं मुद्रिता। क्षारपाणिसंहिता-जतूकर्णसंहिता-भारद्वाजसंहितात्रयमप्यस्मिन्नेव भूभागे समुपलभ्यते। आयुर्वेदसूत्रं, रुग्हृदयं, रुग्विलासः, रुग्हृदयसार इत्यादयः सूत्रग्रन्थाः तथा अष्टाङ्गहृदव्याख्या विज्ञानेश्वरगङ्गाधर—माधवप्रणीता हृदयप्रियासहिताः, किं च रसतन्त्रप्रबन्ध आनन्दकन्दः, बसवराजविरचितः शिवतत्त्वरत्ना-करश्चात्रैवोपलभ्यते। अतःपरं रसप्रदीपिका रससिद्धान्तानुशासनमित्यादयो रसग्रन्थाः परहितसंहितावृहद्योगतरंगिणीयोगरत्नावलीहितोपदेशभेषजसर्वस्वधन्वन्तरिविलासयोगश-तक-सन्निपातचंद्रिकाप्रभृतय अनेके संग्रहग्रन्थाः श्रीमद्देशे एव सुलभाः। देशांतरेषु विद्यमा-नेषु निघुण्टग्रन्थेषु पुष्पफलमूलत्वक्शाखारूपौषधिपथ्याङ्गवर्णनं न दृश्यते, इयं त्रुटिः श्रीमतां देशे प्रसिद्धतरेण कार्मणनिघुण्टुना निरकास्यत। यतस्तत्र ईदृशं आंध्रदेशीयवनौषधीनां वर्णनं दृश्यते। तेनेदमपि प्रतीयते यत्कार्मणनिघण्टोः प्रणेता इममेव देशं स्वजन्मना अलञ्चकारेति। तथा अन्येऽपि निघण्टवोऽत्र सन्ति। तेषु च पङ्गसवर्णनात्मको निघण्टु-र्विशेषतो दर्शनीयो भिषग्वरैः, अपरं चायुर्वेदबहुलप्रचारो ह्ययं देश इति आंध्रदेशस्य कीर्तिः श्रूयते। चरकसुश्रुतवाग्भटाद्युक्तेभ्यः प्रयोगेभ्यः रसतन्त्रोक्तानां प्रयोगाणामुपयोग आंध्रेष्वधिकतर उपलभ्यते। अत्र सर्पविषस्योपयोगो विशेषतः क्रियते लङ्घनचिकित्सा च बहुशो विधीयते। किंचायुर्वेदीयातुरालयपरिपालनार्थं आयुर्वेदाभिवृद्धिमभिकांक्ष-माणैर्नृपश्रेष्ठैः प्रदत्तानां दानानां कानिचिच्छासनानि अस्मिन्नेव देशे समुपलब्धानि। एषां शासननामुल्लेखो मदीयपरमसुहृद्वरैः पं० डी० गोपालाचार्लुमहाभागैः पुण्यपत्तनी-याष्टमवैद्यसंमेलनसमये पठिते विद्वत्त्वपूर्णे महत्त्वपूर्णे च प्रबन्धे कृत इति प्रायः सर्वेषां चिरपरिचितान्येव तानीति मन्ये। सप्तपञ्चाशुत्तरसहस्रतमे ऐशवीये चेङ्गलपटपण्डले मधुरान्तकोपमण्डलान्तर्गते तिरुमकूडलुग्रामे श्रीवीरचोलेश्वरेण राजकेशरिवीरराजेन्द्र-देवेन श्रीवेङ्कटेश्वरमंदिरस्य गर्भगृहभित्तिस्थशिलाफलकेषु लिखितेऽस्मिन्शासने भगवतः

श्रीवेङ्कटेश्वरस्य नित्योत्सवादिकैः कैङ्कर्यैः वेदशास्त्रपाठशालया च सह विद्यार्थिजनस्यारोग्यपरिपालनार्थं उत्तममेकमातुरालयं निर्वर्तनीयमिति आशासितं दृश्यते ।

## वीरचोलातुरालयशासनम् ।

अयमातुरालयः "श्रीवीरचोलेश्वरातुरालय" नाम्ना प्रसिद्धिमुपयातव्यः । अत्र पञ्चदशानामातुराणामवकाशः प्रकल्पनीयः । अस्मिंश्च एकः कायचिकित्सकः, एकः शल्यचिकित्सकः, द्वौ पुरुषपरिचारकौ, द्वे च स्त्रीपरिचारिके, अपरः सेवकपुरुषश्चैकः, द्वारपालश्चैकः, एकः रजकः, कुलालश्चैकः, एते तत्तत्कार्यकरणाय नियोज्या इति ।

कायचिकित्सकः—परम्पराधिगतस्वाम्यविशेषः आलपाकवासी सवर्णगोत्रोद्भवः 'कोदण्डरामाश्वत्थामभट्टर' नामकः अत्र कायचिकित्सकपदव्यां प्रतिष्ठितः । अस्य प्रत्यहं च कुरिणित्रयपरिमितं धान्यं काशाष्टकसंख्यातं द्रव्यं च दातव्यम् ।

शल्यचिकित्सकः—अस्य नाम अनुदाहृत्यैव "शल्यक्रियैप्पण्णुवान्" -( शल्यक्रियाकरः ) इति तत्कृत्येनैव निर्दिष्टः । अस्य प्रतिदिनमेककुरिणिपरिमितं धान्यं देयमुपकल्पितम् ।

परिचारकौ—भेषजोपयोगिनीरोषधीराहर्तुं औषधपचनयोग्यानां काष्ठानामानयनाय भेषजोपकल्पनाय च द्वौ पुरुषपरिचारकौ नियमितौ । एतयोश्च प्रत्येकशः एककुरिणिपरिमितं धान्यं एककासुद्रव्यं च निर्णीतम् । अपरपरिचारकः—रुग्णानां परिचरणाय अन्यकृत्यनिर्वहणाय च कश्चिदन्यपरिचारकः नियमितः । अस्य भृतिः दिनस्यैकनाडी परिमितं धान्यम् ।

स्त्रीपरिचारिके—द्वे च स्त्रीपरिचारिके आतुराणां यथोचितं यथाकालं च भेषजपथ्यादिप्रदानाय परिचर्यायै च नियमिते । एतयोः प्रतिदिनं नाडीचतुष्टयपरिमितं धान्यं एककासुद्रव्यं च दातव्यम् ।

रजकः कुलालश्च—आतुरवस्त्रादिपरिशोधनायैको रजकः तत्रोपयोज्यानां मृण्मयपात्राणां सज्जीकरणाय एकः कुलालश्च नियोजितौ ।

द्वारपालकः—अस्मिन् आतुरालये द्वारपालोप्येको नियमितः । तस्य च प्रतिदिनं नाडीचतुष्टयपरिमितं धान्यं, एककासुद्रव्यं च देयतया निर्दिष्टम् ।

आतुराणां शयनाय आस्तरणोपयोज्याः सप्त कटाः, आतुरालये रात्रिषु दीपोपकरणाय वत्सरस्य पञ्चचत्वारिंशन्नाडीपरिमितं तैलं च निर्णीतमस्ति । आतुरालये चिकित्सायै सज्जीकर्तव्यानां ब्राह्मी-रसायन-वासाहरीतकी-गोमूत्रहरीतकी-दशमूलहरीतकी-उत्तमकर्ण्यादितैल-बलाकोरण्टकादितैल-लशुनाद्यैरण्डतैल-बिल्वादिघृत-मण्डूरवटक-द्रववर्ति-सुनेत्रावर्ति-कल्याणलवणादीनां एकविंशतिसंख्याकानां भेषजानां पट्टिका च विरचिता । तेषां भेषजानां परिमितयश्च लिखिताः । इतोऽधिकतरः शासनविस्तरभिया न क्रियते ।

गुंट्रूरुमण्डलान्तर्गतमलंकापुरग्रामे प्रसूत्यारोग्यशालाविषयकं मलेकापुरशिलाशासनं गृहत्यां शिलायां काकतीयवंशचूडामणेः, महाराजश्रीगणपतिदेवमहाराजस्य काले ( ऐशवीये सार्धदशशते काले ) लिखितमपरं शासनमस्ति। राजमहेन्द्रवरपरिसरवर्तिनः कोरुकोण्डपुरस्य पालकेन श्रीराजामुम्मुडिनायकमहाशयेन नवत्युत्तरे द्वादशशततमे शालिवाहनशकवर्षे लिखितमन्यच्छासनं विद्यते। एवमन्यान्यपि शासनानि सन्ति। तेषामवलोकनात्स्पष्टमवगम्यते यदस्मद्देशीया राजानः पुरातनादपि कालादारभ्य आतुरालयप्रतिष्ठापनेन प्रसूतिशाला-वैद्यशालाप्रतिष्ठापनेन विद्वद्वैद्यपरिपोषणेन वैद्यपुङ्गवेभ्यो ग्रामादिकं दत्त्वा तदुत्साहवर्धनेन, एवमादिभिश्चान्यैः कार्यैरायुर्वेदं पोषयन्त आसन् इति। अतोऽत्रागमनेन संमेलनस्य महांल्लाभो भविष्यतीति दृढं विश्वसिमि। आयुर्वेदोद्धारार्थं क्लेशानपरिगणय्यात्रागतानां भिषग्वराणां गोदास्नानपुण्येनायुर्वेदस्य गतवैभवं पुनरपि प्राप्स्यते, इत्याशासे।

३. अयि वैद्यवराः! मम प्रास्ताविकभाषणस्य पठनात्पूर्वं एकं कष्टतमं कार्यमवश्यं करणीयम्। आयुर्वेदोद्धारार्थमहर्निशं यतमानानां वैद्यरत्न पं. डी. गोपालाचार्लुमहाभागानां स्वर्गमनेन या महती हानिः संजाता सा नूनमनिर्वचनीया। आयुर्वेदाध्यापनं यथाशास्त्रं भवेदिति पं. डी. गोपालाचार्लुमहाभागैः मद्रपुरे आयुर्वेदमहाविद्यालयः संस्थापितस्तत्सिद्ध्यर्थं स्वयं प्रतिवर्षं पञ्चसहस्राधिकमुद्राव्ययं कृत्वा ते आयुर्वेदसेवामकुर्वन्। आयुर्वेदप्रचारिणीसभां स्थापयित्वा अनेकायुर्वेदीयग्रन्थांश्च प्रकाशयित्वा आयुर्वेदीयातुरालयांश्चिकित्सालयांश्च नवीनया रीत्या प्रचालयित्वा तैरायुर्वेदोऽधिकतया लोकादरपात्रं कृतः। यद्यपि चाङ्ग्लभाषायां तेऽप्रवीणा आसंस्तथापि तेषामायुर्वेदमहाविद्यालयव्यवस्था इंग्लैण्डदेशादचिरादागतेनापि तद्देशीयवैद्यवरेणानुकरणीया स्पृहणीया चासीत्।

चिकित्सितात्पुण्यतमं न किञ्चिदपि शुश्रुम, नहि जीवितदानाद्धि दानमन्यद्विशिष्यते।
नार्थार्थं नापि कामार्थमथ भूतदयां प्रति, वर्तते यश्चिकित्सायां स सर्वमतिवर्तते॥

इति चरकवचनमवलम्ब्य केवलपरोपकारधिया लोकानां प्राणत्राणं कृत्वा ते राज्ञस्तथैव लोकानामपि विश्वासार्हा आदरास्पदं चाभूवन्। कलिकातायां पष्ठवैद्यसंमेलने ते प्रथममेव संमेलने उपस्थिताः। संमेलनकार्यस्य महत्त्वं ज्ञात्वा च भिषजां निर्बन्धात्ते स्वयं मन्त्रिपदस्वीकारमकुर्वन्। मद्रासप्रांते संचारं कृत्वा प्रांतीयवैद्यमण्डलानि वैद्यसभाश्च स्थापयित्वा आयुर्वेदमुद्दिश्य तैः सर्वत्रान्दोलनं कृतम्। किमु वक्तव्यम्। आयुर्वेदोद्धारमुद्दिश्य ये ये प्रयत्नाः संसूचितास्तेषां सिद्धये पं० डी० गोपालाचार्लुमहाभागा वृद्धत्वेऽपि युद्धकार्यतरुणायमानभीष्म इव कार्यमकुर्वन्। एवं यावज्जीवमिह मनसा वाचा कायेन च आयुर्वेदोन्नत्यर्थं कार्यं कृत्वा अचिरादेव सिद्धिर्भवेदिति स्वर्गेऽपि तदुद्धारार्थं कार्यं कर्तुं दिवंगता इति मन्ये। अस्तु प्रभोरिच्छा सदैवानुवर्तनीया।

४. अयि विद्वच्छ्रेष्ठभिषग्वराः, निर्वृत्तचरेषु संमेलनेषु अध्यक्षपदमारूढैः संमेलन-

सभापतिभिरायुर्वेदेतिहासतत्परम्परादिविषयाणां आयुर्वेदस्याष्टाङ्गोपाङ्गानां त्रिदोषतत्त्वरसवीर्यविपाकप्रभावाद्यायुर्वेदीयसिद्धांन्तानां च सप्रपञ्चं विवेचनं कृतम् । आयुर्वेदस्य वर्तमानहीनावस्थायाश्च वर्णनं कृत्वा तन्निवृत्तयेऽभ्युपाया अपि संसूचिताः । अतो न मम बहु वक्तव्यमवशिष्यते । यत्किञ्चिद्वक्तुमिच्छामि तत्कालोचितं संक्षेपतश्च वक्ष्यामि । इदं तावत्त्रयोदशवैद्यसंमेलनम् । इतः पूर्वेषु संमेलनेष्वस्माभिः किं कृतं, किं संसाधितं, किं च करणीयमिति प्रथममेव विचारः कर्तव्यः । द्वादशसंवत्सरपर्यन्तमेकत्र संमील्यायुर्वेदहिताहितमुद्दिश्यास्माभिः संमेलनसभासु य ऊहापोहः कृतः, ये च प्रस्तावा ऐकमत्येन संमानिताः, संमेलनस्थायिसमित्या आयुर्वेदविद्यापीठेन च यत्कार्यं कृतम्, तत्सर्वं समालोच्य कियतांशेनास्माकं प्रयत्नाः सफलीभूताः ? कियदग्रे च वयमागताः, कियद्दूरं चास्माभिर्गन्तव्यं, कार्यसिध्यर्थं च के केऽपरे समुद्यमाः समाश्रयणीया इति सिंहावलोकनेन निर्णेतुमुचितोऽयं कालः संप्राप्तः । एवं विचार्यमाणे निराशाया अवसरोऽपि न विद्यते । संमेलनप्रस्तावानुसारं यद्यपि शब्दशः कार्यं न संवृत्तं तथापि यदल्पमात्रं कार्यं कृतं तदतीवोत्तेजनपरमाशाजनकञ्च । अस्मिन्काले लोकानां विचारेषु आचारेषु व्यवहारेषु च यत्स्पृहणीयं परिवर्तनं दृश्यते तन्नूनं संमेलनकार्यस्यैव फलमिति मे मतम् । द्वादशवर्षात् प्राक् लोकानां मनसि आयुर्वेदानुरागः आदरश्च आसीत् । परं सः कृतिरूपेण प्रायोऽव्यक्त आसीत् । राजाश्रयस्य वार्ताऽप्यनुच्चारणीयाऽऽसीत् । द्वादशवर्षपर्यन्तं संमेलनेन यत् तप आचरितं तस्य फलमुन्मुखमिति ज्ञात्वा को न आनन्दभाक् भवेत् । संमेलनप्रसङ्गेनायुर्वेदचिकित्सापद्धतेरुपयोगिता फलदायिता सशास्त्रता च लोकानामनुभवपथमधिकतरमागता । तत्तत्स्थानादागतानां वैद्यवराणां दर्शनेन संभाषणेन चिकित्सया च संमेलनसमये लोकानां ये लाभा अनायासेन संजातास्तेनायुर्वेदस्य महत्कार्यं संसाधितम् । आयुर्वेदविद्यालयार्थं धर्मौषधालयार्थमारोग्यशालार्थं च दानशौण्डैरुदारचरितैर्धनिभिः संस्थानिकैश्च दानं दत्त्वा आयुर्वेदोद्धारकर्मणि यथाशक्ति साहाय्यं कर्तव्यमिति प्रार्थना स्थाने स्थाने प्रति संमेलने कृता । तस्याः प्रार्थनायाश्च फलमद्य वयं पश्यामः ।

यतो वैद्यसंमेलनप्रभावाद्भारतीयनगरेष्वायुर्वेदीया धर्मौषधशाला विद्यालयाश्च स्थापिताः स्थाप्यन्ते च इति अधोलिखितपाठशालादिनामपार्यलोचनया विद्वद्दृष्टिपथमागच्छेत् ।

पुरनाम, पाठशालादिनाम, प्रस्थापकनाम, अध्यापनादिकार्यकारिनाम,

## मद्रास प्रांत ।

१ मद्रपुरम्, आयुर्वेदमहाविद्यालय, वैद्यरत्नपंडित ए. लक्ष्मीपति महाशयाः
२ ,, ,, आतुरालयौषधालयादि सर्वाङ्गसमन्वितः डी. गोपालालार्डुमहाभागाः
३ ,, औषधालयः ,, ,,

४ मद्रपुरम् , आयुर्वेदवैद्यपाठशाला, कृष्णस्वामि अय्यर
५ ,, आतुरालयः, ,,
६ ,, औषधालयः, ,,
७ ,, मैलापुर व्यंकटरमण आयुर्वेदविद्यालयः, नटेशशास्त्रिणः
८ ,, औषधालयः, ,, ,,
९ ,, जार्जटाउन मद्रपुर कन्यकापरमेश्वरी आयुर्वेद औषधालयः
१० ,, वेपरीभागे धमार्युर्वेदौषधालयः, चंगलवरायः
११ ,, मुंगंबाकं कलवल कंरणन्श्रेष्ठि कलवलरामानुजंश्रेष्ठि
१२ मद्रपुर म्युनिसिपालिटीसंस्थया प्रतिवर्षं सहस्रमितं रूपकाः दीयन्ते ।
१३ नेल्लोर औषधालयः
१४ एल्लोर ,,
१५ बिभ्रवाडा ,,
१६ तेनाल्ली ,,
१७ तिरुपति औषधालयः
१८ कोकोनाडा औषधालयः
१९ गंतूर औषधालयः
२० सालेम ,, म्युनिसिपालिटी
२१ राजमहेंद्री ,, ,,
२२ अनंत ( पद्मनाभ पुरम् )
२३ रामेश्वर ,, ७२ द्विसप्तत्यौषधालयाः
२४ त्रिचनापल्ली ,, म्युनिसिपालिटी
२५ त्रिवेंद्रम् ,, आयुर्वेदविद्यालयः सर्वाङ्गसमन्वितः
२६ त्रावणकोरमंडले शताधिकाः ( १०० ) आयुर्वेदीय धर्मार्थौपधालयाः आरोग्यशालाश्च सन्तीति श्रूयते ।
२७ महिशूर, षट्त्रिंशत्संख्याकाः ( ३६ ) आयुर्वेदधर्मवैद्यशालाः ५ पंचयावनवैद्यशालाः
२८ नैजाम, सप्तदश आयुर्वेदौषधालयाः, हैद्राबाद, त्रिंशत् यूनानिधर्मौषधालयाः

## महाराष्ट्र-प्रांत ।

१ मुंबई, प्रभुराम आयुर्वेदविद्यालयः औषधालयादिसंभारसंभृतः औषधालयः, आतुरालयः, डॉ० पोपट प्रभुराम ।
२ ,, आयुर्वेदपाठशाला, आयुर्वेदमार्तंड यादवजी त्रिकमजी आचार्य पं. हरिप्रपन्नशर्माणश्च
३ ,, मराठी वैद्यकवर्ग, पुरुषोत्तमशास्त्री हेर्लेकर, विनायकशास्त्री गुर्जर

४ मुंबई, राष्ट्रीय वैद्यक विद्यालय, (.नेशनल मेडिकल कॉलेज ) डॉ० साठे
५ मुंबई, वैद्यसभाधर्मौषधालयः, मुंबई वैद्यसभा
६ ,, ,, ,,
७ पनवेल, धूतपापेश्वर धर्मौषधालयः, वैद्य अप्पाशास्त्री साठे विष्णुशास्त्री पुराणिक
८ पुण्यपत्तनम्, महाराष्ट्रवैद्यविद्यालयः, डॉ० नरहर परांजपे शिवराम वैद्य गंगाधर शास्त्री जोशी
९ ,, तिलकमहाविद्यालयः, नानलाभिधाः पुरुषोत्तमशास्त्रिणः, जोशी गङ्गाधरशास्त्रिणः
१० ,, धर्मार्थायुर्वेदीय म्युनिसिपलिटी औषधालयः, लागवणकरोपह्वाः बालशास्त्रिणः, गजानन रामचंद्र गद्रे
११ ,, धर्मार्थौषधालयः, पुण्यपत्तनीयम् वैद्यमंडलम्, जोशी इत्याख्याः गंगाधरशास्त्रिणः
१२ ,, ताराचंद हणमंत रामनाथ धर्मौषधालयः
१३ ,, नारायणधर्मार्थौषधालयः, डॉ. ना. म. परांजपे जोशी इत्याख्याः वैद्यभूषण गणेश शास्त्रिणः
१४ सतारा, आर्याङ्ग्लवैद्यकपाठशाला औषधालयः, आयुर्वेदप्रसारमं डॉ. वि. व. भिडे.
१५ वडूज, औषधालयः डि. लो. बोर्ड.
१६ अ. नगर, आयुर्वेदविद्यालय आयुर्वेद औष. आयुर्वेदप्रसारक मंडलम्, वैद्यपंचानन गंगाधर शास्त्रि गुणे.
१७ येवले, गंगादास छविलदास आयुर्वेदविद्यालयः औषधालयः, वल्लभदासमहाभागाः, दाताराभिधा वैद्यभूषण वामनशास्त्रिणः
१८ धुले, धर्मौषधालयः, प्राणिरत्नकसंस्था वासुदेवशास्त्रिनिर्झरकर।
१९ अमलनेर, आयुर्वेदविद्यालयः, खानदेशराष्ट्रीयशिक्षणसंस्था, वैद्यपंचानन गंगाधर शास्त्रि गुणे।
२० कारंजा, काण्णवधर्मार्थ औषधालयः, श्रीरामकाण्णडव दत्तात्रयशास्त्रिगाडगोल।
२१ एलिचपूर, राधाबाई औष. श्री. देशमुख
२२ मूर्तिजापूर औषधालयः
२३ अकोला, धर्मार्थौषधालयः, हरिशास्त्रिपराडकर
२४ अमरावती, आयुर्वेदविद्यालयः, धर्मौषधालयः, पंढरीनाथवामनमुले।
२५ नागपूर, आयुर्वेदविद्यालयः औषधालयश्च इंदूरकरवैद्य

## गुर्जर प्रान्त।

१ सुरत, धर्मार्थौषधालयः

२ भाडेश्वर, धर्मार्थौषधालयः ( भडोच ) आतुरालयश्च
३ वटोदर, दिवाकरधर्मार्थौषधालयः, माधवराव दिवाकर
४ अहमदाबाद, आयुर्वेदविद्यालयः औषधालयादि संभारसंभृतः, डॉ. रावलमहाशयाः
५ पाटण. ,, ,,
६ जामनगर, धर्मार्थौषधालयः

## राजपूताना।

१ अजमेर, धर्मार्थौषधालयः, रामदयालुशर्मा
२ जयपुर, राजकीय आयुर्वेदविद्यालयः, जयपुराधिपतयः, आयुर्वेदमार्तंड श्रीलक्ष्मीरामस्वामिनः

## संयुक्तप्रांत, देहली।

१ देहली, वनवारीलाल आयुर्वेदविद्यालयः
२ देहली, तिब्बिआयुर्वेदविद्यालयः, हकीम अजमलखान
३ पिलिभीत, ललितहरिवैद्यकविद्यालयः
४ प्रयाग, आयुर्वेदमहाविद्यालयः, औषधालयश्च, आयुर्वेदविद्यालय समिति जगन्नाथप्रसाद शुक्ल।
५ काशी हिन्दूविश्वविद्यालयः

## वायव्य प्रांत।

१ हृषीकेष, आयुर्वेदविद्यालयः औषधालयश्च, बाबा कालीकमलीवाला

## पंजाब प्रान्त।

१ लाहोर, दयानंद वैद्यकविद्यालयः, आर्यसमाज

## वंग प्रान्त।

१ कलिकाता, अष्टाङ्गायुर्वेदविद्यालय, कविराजयामिनीभूषणरायाः
२ जेसोर, धर्मौषधालयः डि. लो. बोर्ड

## विहार प्रान्त।

१ मुजफ्फरपुर, राजकीयआयुर्वेदमहाविद्यालयः, विहारप्रान्ताधिपतयः

अन्येऽपि सहस्रशः आतुरालयभेषजालयविद्यालयाः सन्तीति जाने। तथापि विस्तरभिया सर्वेषां नामानि निर्देष्टुं नापारयम् इति तत्तदालयाधिपतयः क्षन्तुमर्हन्ति।

उपरिनिर्दिष्टेषु रुग्णालयपाठशालादिषु बहवः स्वकार्यं स्पृहणीयतया संपादयन्तीति तत्समये मयानुभूतचरम्।

५. मुंबई, पनवेल, जामनगर, अहमदाबाद, राजकोट, लाहोर, कलिकाता, मद्रास इत्यादि पत्तनेष्वायुर्वेदीयौषधशालाः स्थापिताः। तेभ्योऽपि महाँल्लाभो भवति लोकानाम्। पष्ठवैद्यसंमेलनसभापतिभिः आयुर्वेदोन्नत्यर्थं येऽभ्युपायाः संसूचितास्तेषु प्रथम उपायः चिकित्साकर्मणि प्रधानभूतस्य वैद्याख्यपादस्य संस्कारः इति। अस्य संस्कारार्थं आयुर्वेदविद्यालयानां स्थापनं परमावश्यकम्। एषु विद्यालयेषु शास्त्रानुकूललक्षणलक्षिताः सद्वैद्याः आयुर्वेदीयविषयान् शिक्षेरन्। सर्वेषां विद्यालयानां पाठ्यप्रणाल्या ऐक्यरूप्यमुचितम्। तत्तत्प्रांतीयानामेतेषां विद्यालयानां च सूत्रमेकस्मिन् विश्वविद्यालये संबद्धं भवेत्। विश्वविद्यालयश्चायम् भारतस्य सर्वेष्वपि प्रांतीयविद्यालयेषु प्रदत्तपरीक्षेभ्यः छात्रेभ्यः समानमेव उपाधिं प्रदद्यात्। एतेषु विद्यालयेषु प्रयोगशालाऽपि स्थापनीया। भेषजसंग्रहालयोऽपि अत्रापेक्ष्यते। द्वितीयस्य भेषजपादस्यापि संस्कार आवश्यकः। येषु येषु देशेषु या या ओषधय उपलभ्यन्ते, तत्र एवंविधानि प्रामाणिकस्थानानि परिकल्पनीयानि, येभ्यः देशांतरीयवैद्या आवश्यकतानुसारम् ओषधीः उपलभेरन्। एवं प्रसिद्धनगरेषु सिद्धौषधानामपि प्राप्तिस्थानानि स्थापनीयानि येषु सर्वाण्यायुर्वेदप्रसिद्धानि सिद्धौषधानि उपलभ्येरन् सर्वसमये। एतेषां च निर्माणरीतिरपि एकरूपैव संभवेत्। आयुर्वेदमार्तण्डलक्ष्मीरामस्वामिभिः येऽभ्युपायाः संसूचितास्ते यावच्छक्यमुपयोजिता दृश्यन्ते। भारतवर्षे आयुर्वेदीयविद्यालयानाम् औषधालयानाम् आतुरालयानां च वृद्धिः प्रतिदिनमनवरतं भवति। एकरूपा पाठ्यप्रणाली कलिकातासंमेलने एव निश्चिता। आयुर्वेदविद्यापीठमेव आयुर्वेदस्य विश्वविद्यालः। द्वादशवर्षात् प्राक् पुण्यपत्तनीयवैद्यशास्त्रोत्तेजकसभा, मुंबईस्थप्रभुरामआयुर्वेदविद्यालयसंस्था, बटोदरस्थश्रावणमासदक्षिणापरीक्षासंस्था, पुण्यपत्तनीयमहाराष्ट्रवैद्यकशिक्षकसंस्था, सातारानगरस्थायांग्लवैद्यकसंस्था, जयपुरस्थराजकीयायुर्वेदविद्यालयसंस्था देहलीस्थबनवारीलालायुर्वेदविद्यालयसंस्था लाहोरस्थदयानंदवैद्यकसंस्था, मद्रपुरस्थायुर्वेदमहाविद्यालयसंस्था, एवं सर्वाऽप्येताः संस्थाः प्रदत्तपरीक्षाणां छात्राणां योग्यतानुरूपं प्रमाणपत्रं दक्षिणासमन्वितम् उपाधिं च प्रयच्छन्ति। परमधुनाऽऽयुर्वेदविद्यापीठं निखिलभारतवर्षे भिन्नभिन्नपत्तनेषु परीक्षाकेंद्रस्थानानि प्रकल्प्य तत्त'स्थानादागतान् छात्रान् परीक्ष्य प्रदत्तपरीक्षेभ्यश्छात्रेभ्यः' भिषक् 'आयुर्वेदविशारद' अथवा 'आयुर्वेदाचार्य' इति योग्यतानुसारम् उपाधिं प्रयच्छति। विद्यालयेष्वेतेषु अद्यापि भेषजपरिचयागारं प्रयोगशाला शवच्छेदागारं वैकृतशारीरवस्तुगृहं रसशाला भेषजोद्यानं ग्रंथसंग्रहालयः इत्याद्यङ्गानि नोपलभ्यन्ते। परं तेषामपि समावेशोऽचिरादेव भविष्यतीति दृढं विश्वसिमि। संमेलनांगभूतेन आयुर्वेदविद्यापीठेन या एकरूपा पाठ्यप्रणाली निश्चिता तामनुसृत्य च भारतवर्षीयपत्तनेषु या परीक्षाव्यवस्था क्रियते सा लोकानां विश्वासार्हा आदरास्पदं च संजाता। प्रतिवर्षं त्रिशताधिकाः छात्राःपरीक्षार्थमागच्छन्ति। प्रतिवर्षं च परीक्षार्थिनां छात्राणां संख्या वर्धत एव। इदमेव अस्य

विद्यापीठस्य लोकप्रियताया बलवत्तरं प्रमाणम् । आयुर्वेदीयसंमेलनाधिवेशनसमये प्रतिवर्षं यत् प्रदर्शनं क्रियते तच्च वैद्यान् लोकांश्चात्यन्तमुपकरोति । यतः प्रदर्शनेऽस्मिन् पुष्पमूलफलशाखादिपंचांगानां तथैव यावच्छक्यमुपलब्धानामोषधीनां सिद्धौषधानां मणिमंत्राणां शारीरवस्तूनां यंत्रशस्त्रादिकानां मुद्रितामुद्रितप्रधानायुर्वेदीयग्रन्थानामायुर्वेदोपयोगिनां सर्वेषां वस्तूनां च समावेशः क्रियते । तेन च वनौषधीनां परिचयः अनायासेनैव भवति । अदृष्टपूर्वाणि अनेकानि सिद्धौषधानि अनायासेनैव दृष्टिपथमायान्ति । एवं आयुर्वेदोद्धारार्थं अद्यावधि ये प्रयत्नाः कृताः, तैरायुर्वेदस्य उद्धारोऽभूदित्यत्र न कोऽपि संशयः । द्वादशवर्षात्प्राक् यदा नारभ्यत संमेलनकार्यं तदा यः कोऽपि दानशौण्डो धनिकः आतुरोद्धारार्थं पाश्चात्यवैद्यकरीत्या प्रचलितौषधालयाय सहस्रावधिरूप्यकदानेनात्मनं कृतकृत्यमन्यत । परमधुना तत्र महती परिवृत्तिः । यतः पूर्वोक्तसदृशो धनिकः स्वीयं द्रव्यं आयुर्वेदपद्धत्या प्रचलितौषधालयाय दत्त्वा तत्सफलयति । अयं केवलं वैद्यसंमेलनस्यैव उपकार इति सर्वेऽपि तत्रभवन्तो भवन्त उररीकुर्युः । द्वादशवर्षात् प्राक् आयुर्वेदस्य राजसाहाय्यं कियन्मात्रमासीत्तत्सर्वेप्यत्र समागतः भिषग्वराः जान्त्येव । आयुर्वेदस्य राजसाहाय्य कियन्मात्रमपि नासीत् । तेन च तस्य ईदृशी कष्टतमा हीनावस्थाऽऽसीत् । राजसाहाय्यार्थं च सम्मेलनेनाद्यावधि यथाशक्ति प्रयत्नाः कृताः । ते च प्रयत्नाः फलोन्मुखा इति मे मतिः । यदि च वयमेवमेवानवरतं प्रयतेमहि तर्हि निश्चयेन यशभाजो भवेम इति स्पष्टानि चिन्हानि दृश्यन्ते । भारतवर्षीयलोकानामारोग्यावलोकनार्थं राजशासनसभासु आयुर्वेदीयवैद्यानां प्रतिनिधिभूतः कोऽपि वैद्यः सभासदत्वेन स्वीकर्तव्यः इत्याशयात्मकः प्रस्तावः अस्माभिः पूर्वमेव कृतः । म्युनिसिपालिटी लोकलबोर्ड इति नाम्नाच प्रसिद्धाभिः स्थानिकपरिषद्भिः आयुर्वेदीयधर्मार्थौषधालयान् विद्यालयान् आतुरालयांश्च प्रवर्तयित्वा आयुर्वेदसाहाय्यं कर्तव्यमित्याशयात्मकोऽपरः प्रस्तावः संमेलनेषु अस्माभिः कृतः । वैद्यसंमेलनात् पूर्वं अधिकारप्राप्त्यर्थं संमिलितासु सभासु राजकीयविषयाणां उद्घाटनं अनेकवारमभवत् । परं आयुर्वेदविषयकः प्रस्तावः विचारार्थं न कदाऽपि गृहीत आसीत् । परं गतद्वादशसंवत्सरेषु लोकानां दुःखविमोचनार्थमधिकारसंपादनार्थं तत्प्रतिपादनार्थं च याः प्रांतीयराजकीयसभाः समभूवस्तास्वितरमहत्त्वपूर्णप्रस्तावैस्सह आयुर्वेदस्य प्रस्तावोऽपि सर्वत्र स्वीकृतो दृश्यते । एतासु प्रांतीयराजकीयसभासु राजानं सामंतांल्लोकांश्चोद्दिश्य आयुर्वेदीयातुरालयान् आयुर्वेदविद्यालयांश्च संप्रवर्तयित्वा सर्वैरायुर्वेदोत्तेजनं कार्यं इत्याशयात्मकः प्रस्तावः सर्वेषामेकमत्येन संमतः कृतः आसीत् । किमतःपरं यद्राष्ट्रीय महासमित्या ( Indian National Congress ) अपि अयं प्रस्ताव ऐकमत्येन नागपुरादिनगरस्थाधिवेशनेषु स्वीकृतः । एतत् संमेलनातिरिक्तस्य कस्य कार्यमिति सुधियो विभावयन्तु । तेषु तेषु सामन्तमण्डलेषु च आयुर्वेदसाहाय्यार्थं प्रयत्नाः कृताः । अचिरादेव चायुर्वेदः सामन्तानां कृपापात्रं भविष्यति । गताष्टवर्षे प्रतिवर्षं यस्यां कस्यामपि

राजशासनसभायामायुर्वेदाय राजसाहाय्यं कर्तव्यमित्याशयात्मकः प्रस्तावः आनीतः। प्रधानराजशासनसभायां चायुर्वेदस्योत्तेजनं आदरणं च कियन्मात्रं शक्यम, इष्टं च इत्येतद्विषयविमर्शनार्थं समितिरेका नियजनीया इत्याशयात्मकः श्रीमतः असदअह्निखानमहाशयस्य प्रस्तावो राजमंत्रिभिः स्वीकृतः। तं प्रस्तावमुद्दिश्य कार्यं प्रचलत्येव। अनंतरं च प्रायः सर्वासु प्रांतीयराजशासनसभासु एतादृशाः प्रस्तावाः विचारार्थमुपन्यस्ता आसन्। केषु केषु प्रांतेषु च आयुर्वेदविमर्शकमण्डलानि स्थापितानि दृश्यन्ते, मद्रप्रांते च द्वित्रिवर्षात् प्राक् डॉ० कोमनमहाशयानाम् देशीयऔषधपरीक्षणविषये योजना आसीत्। तैश्च महत्परिश्रमपूर्वकं लिखितोऽभिप्रायः मद्रासराजकीयमुद्रणाधिकारिणा प्रकाशितः। कोमन महाशयस्य अभिप्रायमुद्दिश्य द्रविडवैद्यमंडलेन मद्रासआयुर्वेदीयसभया च उत्तरमपि प्रकाशितम्। मुंबईप्रांतीयराजशासनसभयापि देशीयौषधपरीक्षणकार्यं कस्मिन्नपि पाश्चात्त्यवैद्यशास्त्रनिपुणे उपन्यस्तमिति श्रूयते। मध्यप्रांतीयराजकीयशासनसभायां च आयुर्वेदीयमहाविद्यालयप्रतिष्ठापनार्थं पंचसप्ततिसहस्ररूपकव्ययानुमोदनार्थं प्रस्ताव उपन्यस्त आसीत्। आयुर्वेदीयौषधालयार्थं म्युनिसिपालिटी संस्थया डिस्ट्रिक्टलोकलबोर्ड संस्थया वा कृतः व्ययः शासनानुरूप एव इति तस्यामेव सभायां मंत्रिमहाशयैः अभिप्रायः प्रदर्शितः। संयुक्तप्रांतीयराजशासनसभायामपि एतादृशः प्रस्तावः विमर्शनार्थं आगत आसीत्। संमेलनकृतां प्रार्थनामनुरुध्य विहारप्रांते राजशासनानुरूपं संस्कृतमहाविद्यालये आयुर्वेदाध्यापनं संप्रवर्तितम्। मद्रप्रांतीयाधिपतिभिरपि आयुर्वेदविमर्शनार्थं समितिरेका नियुक्तेति सर्वेषां विदितचरमेव। समित्या चानया प्रश्नावलिरेका मुद्रिता सा च मद्रप्रांतीयवैद्येभ्यः भरतवर्षीयवैद्येभ्यश्च उत्तरार्थं प्रेषिता। वंगीयराजशासनसभायामपि एतादृशः प्रस्ताव ऐकमत्येन स्वीकृतः। आयुर्वेदविमर्शनार्थं च तत्राप्येका समितिर्नियुक्ता। वंगीयायुर्वेदविमर्शिन्या समित्या अपि प्रश्नावलिरन्या मुद्रिता, उत्तरार्थं वंगीयकविराजेभ्यः भरतवर्षीयवैद्येभ्यश्च प्रेषिता।

६. एवमायुर्वेदाय राजसाहाय्यं भवेदिति धिया संमेलनेन कृताः प्रयत्नाः फलोन्मुखा इति शुभचिन्हानि दृश्यन्ते। एतावन्तं कालमैकमत्येनानवरतं च यथाऽस्माभिः प्रयत्नाः कृतास्तथैव यदि फलप्राप्तिपर्यन्तं प्रयतेमहि तर्हि अचिरादेव कालादायुर्वेदे राजसाहाय्यं भविष्यति। परं खिद्यते नश्चेतः मद्रप्रांतीयपक्षभेदश्रवणेन। मद्रप्रान्तीयवैद्येष्वनेके पक्षभेदाः सांप्रतं संजाताः। तेन च कार्यहानिः स्यादिति शंका प्रदर्श्यते। गते वर्षे असहकारिताकार्यक्रममुद्दिश्य यन्महदान्दोलनं कृतं तस्य परिणाम एवमभूद्यद्राजकारणाद्यायोऽलिप्तस्य वैद्यस्याऽपि मनसि विकल्पः संभूतः। तत्र राजनियुक्तायुर्वेदविमर्शकसमितिप्रश्नेभ्यः केनाप्युत्तराणि न दातव्यानीत्येकः पक्षः। आयुर्वेदोद्धार एवास्माकं ध्येयमिति सहकार्येण असहकार्येण विरोधेन येन केनाप्युपायेन आयुर्वेदोद्धारकार्यं संसाधनीयमिति अवश्यमेव उत्तराणि दातव्यानीत्यन्यः पक्षः। वस्तुतस्तु आयुर्वेदविषये पक्षभेदानामवसरोऽपि नास्ति। प्राणरक्षणं सर्वेषां पक्षानामुद्देश्यम्। रणाङ्गणेमूऽपि च्छितानां

शस्त्रादिहतानाम् , अपरेषां च दुःखविमोचनार्थं शत्रुमित्रभेदं विस्मृत्य चिकित्सा क्रियते । तथैव आयुर्वेदशास्त्रविषये सांप्रतं प्रसृताया असहकारिताया अवसरोऽपि नास्तीति सर्वेऽपि सुधियः संमानयेयुः । आयुर्वेदाभ्युदयार्थं के के चोपाया अस्माभिरवलम्बनीया इति विषयमुद्दिश्य सप्तवर्षात्प्रागेव कलिकातासंमेलनसभापतिभिः पण्डितश्रीलक्ष्मीरामस्वामिभिर्यदभिहितं तदपि चिन्तनीयम् ।

"परिशुष्यतो वैद्यकतरोः पुनरभ्युदयाय प्ररोहाय च बहव उपायाः कर्त्तव्या निश्चेतव्याश्च । तेषु सर्वेषु प्रथमो राज्ञः प्रजानां चोभयोः सौमनस्यं सहकारिता च । नहि केवलं राजसाहाय्येन प्रजाभिस्तिरस्कृता सिध्यन्त्यर्थाः । नापि राजविरोधे सत्यपि प्रजानां प्रतीपयत्नैः किमपि संपाद्यते । उदारनीतिपटीयसां घोषितसहानुभूतिपटहानां वर्तमानभारतराजानामायुर्वेदोदये कर्तव्यस्य न केवलं वैद्यरत्नोपाधिना प्रसिद्धभिषजां ख्यापने पर्यवसानं भवितुमर्हति वयं बह्वधिकमाशास्महे—वारं वारं प्रार्थनया स्वीयनिवेदनौचित्यविश्वासेन स्वीयाभिश्च कृतिभिरनुमोदनसाहाय्याकर्षणक्षमाभिः कालेन राज्ञो बहुमूल्यां महाफलां च सहयोगितां प्राप्नुयाम । वयमाशास्महे—यत्पाश्चात्यारोग्यदर्शनस्येव प्राच्यायुर्वेदस्य शिक्षायै पाठशालाः परीक्षा उपाधयश्च निर्धार्येरन् । वयमाशास्महे यत्केवलसंस्कृतदेशभाषाभिज्ञेभ्यो वैद्येभ्यो वनस्पतिशारीररसायनादिविज्ञानलाभाय विद्यालयेषु आंग्लभाषाज्ञाननिगडनमन्तरा प्रवेशः सुलभः संभवेत् । वयमाशास्महे मुद्रणावशिष्टानां संहितादिनिबन्धानां संपादने व्याख्याने प्रचारणे च साहाय्यमुत्तेजनाय लभेमहि । वयमाशास्महे भिषजो दक्षतरा ( Doctors ) इव प्रामाणिकत्वेन संभाव्येरन् तेषां लेखश्च राजाधिकरणैर्विश्वस्तः संमान्येत । एवमादि बहुविधं वयमाशास्महे । ............सत्यस्माकं बद्धपरिकरत्वे राजोपेक्षां दूरीकर्तुं शक्यमेव । कस्मिन्नप्यर्थे कृतनिश्चयाः प्रजा राजानं रश्मिविवादायाकर्षन्ति । राज्ञां कृतकौदासीन्यं च प्रजानां हार्दपरीक्षार्थं भवति ।"

अत एतावन्तं कालं संमेलनेन यो मार्गः समाक्रान्तः तस्यैवानुसरणं आयुर्वेदाय हितप्रदं भविष्यतीति दृढं विश्वसिमि । राजनियुक्तायुर्वेदविमर्शकसमितिप्रश्नेभ्य उत्तराण्यदत्वा आत्मनाशं करिष्यामः । अस्माकं मौनसमाश्रयणं आयुर्वेदीयसिद्धान्तानामसमर्थनीयत्वप्रदर्शकं गणयिष्यते । निखिलभारतवर्षीयवैद्यसंमेलनं च भारतवर्षे उपहास्यतां यास्यति । यतो गतसंमेलने एव मुंबय्यामस्माभिरैकमत्येन प्रस्तावः कृतो यत्संमेलनसभापतीनां मण्डलं आयुर्वेदीयसिद्धान्तविषयकशंकानां समाधानं कर्तुं सदैव सिद्धम् । राजनियुक्ताधिकारिणोऽन्ये वा केचन महाभागा यदि शंकासमाधानमिच्छन्ति तर्हि तैरवश्यमेव पत्रप्रेषणादिकं कार्यमिति । अपरं च आयुर्वेदविमर्शनविषये प्रधानराजाधिकारिभिः पूर्वं पत्रप्रेषणसमये निखिलभारतवर्षीयवैद्यसंमेलनस्थायिसमितेरायुर्वेदविद्यापीठस्य चास्तित्वमपि अगृहीतमिवासीत् । अतोऽस्य निषेधः संमेलनेन कृतः इति प्रायः स्मरन्त्येव सर्वे । अधुना तु मद्रासायुर्वेदविमर्शकसमित्या संमेलनसंस्थाः पत्र-

प्रेषणादिनानुगृहीताः । समित्या चानयाऽस्य कार्यस्य हेतुरत्यन्तं स्पष्टतया लिखितः । राजनियुक्तायुर्वेदविमर्शकसमितिप्रश्नानामयमेव हेतुर्यद्ये ये आयुर्वेदस्य यावनचिकित्सापद्धतेश्च पुरस्कर्तारस्तैःस्तैः आयुर्वेदीयग्रन्थेषु प्रतिपादितानां विवादात्मकानां सिद्धान्तानां सविस्तरं विवेचनं कृत्वा चिकित्सकधिया वादविवादं कृतवतां शास्त्रज्ञानां शंकासमाधानं कृत्वा आयुर्वेदः यावनचिकित्सापद्धतिर्वा राजाश्रयं तदुत्तेजनं चार्हतीति सिद्धये वैद्यानां संधिरुपलभ्येतेति ( The object of the proposed inquiry is to afford the exponents of the Ayurvedic and Unani Systems an opportunity to state their case fully in writing for Scientific criticism and to justify state encouragement of these Systems. ) अत एव च मद्रप्रांतीयवैद्येभ्यः भरतवर्षीयवैद्येभ्यश्च प्रश्नपत्रिकाः प्रेषिताः । एवं स्थिते वस्तुतत्त्वे यदर्थमस्माभिर्गते द्वादशवर्षे सर्वात्मना प्रयत्नाः कृताः यश्च मार्गोऽस्माभिर्विवेकपूर्वकं स्वीकृतस्तस्य त्यागः फले दृष्टिपथे विद्यमानेऽपि कृतः स्यातर्हि भाविनो वैद्या अस्माकं गणना केषु करिष्यन्तीति विचार्यताम् । किमद्यावधि कृतं कार्यं रसातलं गच्छतु । प्रवासक्लेशादिकानगणय्य संमेलनकार्यार्थमत्रागतेषु भिषग्वरेषु न कोऽपि एवं मतप्रतिपदको भवेदिति विश्वसिमि । आयुर्वेदविमर्शकसमितिप्रश्नानाउत्तरनमुप्रदानेन यदि आयुर्वेदानुकूलो ग्रहो भवेदायुर्वेदश्च राजसाहाय्यविमुखो भवेत्तर्हि तत्र संमेलनमेव दोषभाक् भविष्यति ।

७. अपरं च शास्त्रीयवादविवादेषु सहकार्यमसहकार्यमनादृत्य केवलं शास्त्रदृष्ट्यैव विचारः करणीयः । जगति सर्वत्रायुर्वेदीयसिद्धान्तध्वजप्रतिष्ठापनमेवास्माकं ध्येयं भवितुमुचितम् । आयुर्वेदीयचिकित्सापद्धतेस्तत्त्वानि नूनमनुपमानि । एकैकतत्त्वमनुसृत्य एकैस्याः चिकित्सापद्धतेरुत्पत्तिः संभूता संभविष्यति च । स्वेदतत्त्वमनुसृत्य नवीना एव स्वेदचिकित्सापद्धतिरमेरिकादेशेषु उत्पन्नेति ज्ञायत एव श्रीमद्भिः । लङ्घनतत्त्वमनुसृत्य लङ्घनचिकित्सापद्धतिरुदिता अमेरिकादेशेषु । एवमेव अनेकतत्त्वानि सिद्धान्ताश्चायुर्वेदे विद्यन्ते येषां व्याख्यानेन आयुर्वेदध्वजः सर्वत्र विलसेत् । आयुर्वेदचिकित्साऽपि यशस्विनीत्यनुभवेन सिध्येत् । तथापि पाश्चात्त्यवैद्यशास्त्रप्रवीणा आयुर्वेदमुद्दिश्य बहुश आक्षिपन्ति, यदत्रत्या निदानपद्धतिश्चिकित्सापद्धतिश्च सर्वथैव त्याज्येति । एतादृशानां आक्षेपाणां खण्डनमतीवावश्यकम् । तच्च प्रश्नावल्युत्तरदिग्दर्शनेनानायासतो भविष्यति । संमेलनेन भिषग्वरैश्च मद्रासप्रांतीयायुर्वेदविमर्शकसमितिप्रश्नानां सविस्तराण्युत्तराणि यदि प्रेषितानि न स्युस्तर्हि अचिरादेव तानि प्रेषणीयानीति सर्वान्भिषग्वरान् संप्रार्थ्य प्रश्नोत्तरदिशं प्रदर्शयामि ।

## मद्रदेशीयवैद्यविमर्शकसमितिप्रश्नानां उत्तराणि ।

१ आयुर्वेदमुद्दिश्यैव प्रश्नानां उत्तराणि दास्यामि ।

२ (अ) धातुसाम्यक्रिया चोक्ता तंत्रस्यास्य प्रयोजनम् ।
विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते ।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ।
तद्दुःखसंयोगा व्याधयः ।

इति चरकसुश्रुतवचनान्यनुसृत्य धातुवैषम्यं रोगः, धातुसाम्यं चारोग्यं, इति आयुर्वेदगतं व्याधिलक्षणं सुस्पष्टमेव । लक्षणमिदं च सर्वेऽपि सुधियः संमानयेयुः । शरीरगतवैषम्यमूला एव सर्वे रोगाः, इत्यत्र नव्यशास्त्रसंप्रदायानुयायिनामपि शंकावसरो न लभ्यते । शरीरमनः शरीरि—( आत्मा ) समवायः पुरुष इत्युच्यते, तत्र आत्मा च निर्विकारः सुखदुःखरहितः । निजागंतुविभागेन तत्र रोगा द्विधा स्मृताः । तेषां कायमनोभेदादधिष्ठानमपि द्विधा । एवं रोगा अपि निजाः, आगंतवः, शारीराः, मानसाश्च एवं चतुर्विधाः । पुनस्तेऽपि सहजाः गर्भजाः जातजाः पीडाकृताः कालजाः प्रभावजाः स्वभावजाः इति सप्तविधाः । एवमनेकविधा अपि व्याधयः वैषम्यमूला एव । दोषा एव हि सर्वेषां रोगाणामेककारणम् । इति वचनेऽपि वैषम्येव रोगकारणमिति स्पष्टम् । तद्वैषम्यं च कस्माज्जायते इति पृष्टं चेत्तर्हि—

कालार्थकर्मणां योगा हीनमिथ्यातिमात्रकाः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥

श्लोकेऽस्मिन् रोगस्य आरोग्यस्य च कारणमतीव स्पष्टतया वर्णितम् । कालार्थकर्मणां हीनमिथ्यातियोगैः शरीरे वैषम्यं जायते । तेन वैषम्येण च रोगाः प्रादुर्भवन्तीत्यत्र किमशास्त्रीयम् । शरीरगतानां धातूनां घटकावयवानां प्रमाणं च यावत्कालं समं स्यात् तावत्कालं शरीरस्य आरोग्यं स्यात् , यदा च शरीरघटकावयवानां धातूनामाहारविहारादिकारणैः असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामकारणैर्वा शरीरगतवातपित्तकफानां चयप्रकोपप्रसरस्थानसंश्रयनिमित्तकं धातु–( दोष ) वैषम्यं जायते तदा व्याधयः समुद्भवन्ति । अस्य सविस्तरं विवरणं कलिकाता संमेलनाधिपतिभिः आयुर्वेदमार्तण्ड पण्डित श्रीलक्ष्मीरामस्वामिभिः प्रथमतः द्वादशपृष्ठपर्यन्तं कृतम् । तत्सुधीभिर्यथावसरं द्रष्टव्यम् । अस्मिन् सिद्धान्ते किमप्यशास्त्रीयमसमर्थनीयं वा न विद्यते । गुणलक्षणकार्यात्मकं दोषाणां वर्णनमायुर्वेदीयग्रंथेषु बहुलतरमुपलभ्यते । परं वस्तुरूपनिदर्शकं तेषां वर्णनं न दृश्यते । अतो वातपित्तकफाः काल्पनिकाः न तु शरीरगताः शरीरधातवः इति पाश्चात्यवैद्यकशास्त्रविदुषामन्यथाग्रहः संजातः । तेन विपरीतग्रहेण च नानाविधा आक्षेपा उपन्यस्यन्ते, वस्तुतो विचार्यमाणे दोषा अपि शरीरगताः अवयवा इति सुस्पष्टम् । दोषशब्दः आयुर्वेदीयग्रंथेषु केनाऽर्थेनोपयोजित इत्यस्य प्रश्नस्य निर्णयः दोषशब्दस्य निर्देश आयुर्वेदे येषां येषां शब्दानां साहचर्येण कृतो दृश्यते तेषां सर्वेषां समुच्चयविचारेण भविष्यति । दोषधातुमलमूलं हि शरीरं, त्वचः कलाः धातवः दोषाः मलाः यकृत्प्लीहानौ इत्यादिवचनेषु दोषाणां निर्देशः

कृतः। समानानामेव हि प्रायेण समभिव्याहारा भवन्ति। यदुपरिनिर्दिष्टवाक्येषु धातुमलैः सह दोषशब्दस्य साहचर्यं दरीदृश्यते न तत्केवलं संख्यानार्थं, प्रत्युत विशिष्ट-गुणकर्मसाम्यख्यापनार्थम्। पुण्यपत्तनीयमहाराष्ट्रवैद्यकपाठशालाध्यापकैः नरहरि शिवराम परांजपे इति सुप्रथितनामधेयैर्वैद्यवर्यैः अकोलावैद्यसभायां दोषविज्ञानमुद्दिश्य निबन्धः पठितः। तस्य समारोपः सर्वैः भिषग्वरैरवश्यं मनसि निधेयः। समारोपान्ते दोषविषये यः सिद्धान्तः साररूपेण सर्वेषां विचारार्थं तैरुपन्यस्तः सोऽग्रतो दीयते। दोषधातुमलाः शरीरावयवा इति स्पष्टतमं प्रतिभाति। शरीरं चेदं पांचभौतिकं षड्रसात्मकं सेन्द्रियं सजीवमिति सुप्रथितम्। तस्मिंश्च संग्रहात्मको वर्धनात्मकः विशरणात्मकश्च व्यवहारः कायतनुशरीरशब्दप्रयोगेणावगम्यते। तस्मात् अवयविनः देहस्य संग्रहवर्धनविशरणात्मकस्य व्यापारस्य चालका ये अवयवा दोषधातुमलास्तेऽपि पांचभौतिकाः सेन्द्रियाः सजीवा इति वक्तुं न कोऽपि संशयः। तथापि तेषां अस्तित्वं अनुमानेनैव सिध्यति।

२ (आ) आदौ निदानविधिना विदध्याद्रोगनिश्चयम्।
ततः कर्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत्॥
रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः।
दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम्।

इति श्लोकेषु रोगनिदानं कथं कर्तव्यं चिकित्साकर्म च कथं करणीयमिति संक्षेपतया वर्णितम्। रोगनिदानसमये हेतुप्राग्रूपरूपोपशयसंप्राप्तिपंचकस्य विचारः सूक्ष्मतया करणीयः। रोगिपरीक्षासमये च आतुरगृहमभिगम्य उपविश्य आतुरमभिपश्येत्, स्पृशेत् पृच्छेच्च। त्रिभिरेतैर्विज्ञानोपायै रोगाः प्रायशो वेदितव्या इत्येके। तत्तु न सम्यक्। षड्विधो हि रोगाणां विज्ञानोपायः। तद्यथा पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति। तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते—'सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छति' इत्येवमादयः। स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनत्वादयः स्पर्शविशेषाः, ज्वरशोफादिषु। चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबलवर्णविकारादयः। रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः, घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानां च गन्धविशेषाः। प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रयं बलमन्तरग्निं वातमूत्रपुरीषाणां प्रवृत्त्यप्रवृत्ती कालप्रकर्षादींश्च विशेषान्। आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात्।

धातुसाम्यक्रियैवायुर्वेदस्य प्रयोजनम्। अतः चिकित्साकर्मसमये वैद्यस्यैतत्प्रधानं कर्तव्यं यद्रोगिशरीरे कस्य घटकावयवस्य वृद्धिः क्षयो वा संजातः इति ज्ञातव्यम्। ज्ञात्वा च वृद्धानां ह्रासनं क्षीणानां वर्धनं च कार्यम्। इदमेव चिकित्सातत्त्वमायुर्वेदे संतर्पणापतर्पणनाम्ना बृंहणलंघनपर्यायेण वा प्रसिद्धेन द्विविधोपक्रमत्वेन वर्णितम्। लंघनमपि शोधनशमनरूपेण पुनर्विभज्यते। स्नेहस्वेदवमनविरेचनशिरोरेकवस्त्यस्र-

विसुतीनां समावेशः शोधनलंघने भवति। पाचनदीपनक्षुत्तृड्व्यायामातपमारुतानां समावेशश्च शमनलंघने भवति। चिकित्साकर्मणि च कस्य द्रव्यस्य उपयोगः कया रीत्या करणीय इति रसगुणवीर्यविपाकप्रभाववर्णनप्रसंगेन पण्डित श्रीलक्ष्मीरामस्वामिभिः चतुर्विंशतिपृष्ठादारभ्य चतुस्त्रिंशत्पृष्ठपर्यंतं मनोरमतया प्रतिपादितम्। तद्भिषग्वरैरवश्यमवलोकनीयम्। चिकित्साकर्मणि सुविमलकीर्तीच्छुभिः भिषग्वरैः किं किमवश्यं करणीयमित्यधोलिखितश्लोकद्वये सम्यक्तया प्रतिपादितम्।

दूष्यं देशं बलं कालमनलं प्रकृतिं वयः, सत्त्वं सात्म्यं तथाऽऽहारमवस्थाश्च पृथग्विधाः।
सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे, यो वर्तते चिकित्सायां न सस्खलति जातुचित्॥

श्लोकयोरनयोर्व्याख्यानं पं० श्रीलक्ष्मीरामस्वामिभिः पंचत्रिंशत्पृष्ठादारभ्य षट्पंचाशत्पृष्ठपर्यन्तं हृदयंगमतया कृतम्। तच्चानाघ्रातायुर्वेदगंधैः पाश्चात्यवैद्यपण्डितैरवश्यमवलोकनीयम्। पुण्यपत्तनीयायुर्वेदौषधालयेभ्योऽपरेभ्योऽपि धर्मौषधालयेभ्यः प्रमाणदानेन आयुर्वेदीयचिकित्साफलं संसाधयितुं सिद्धोऽस्मि।

( इ ) संग्रहणीक्षयातीसारादिरोगेषु आयुर्वेदचिकित्सा विशेषतः फलदायिनीति सर्वत्र लोकग्रहः, अनुभवोऽपि तथैवेति विस्तरोऽनावश्यकः। क्षयस्यासाध्यावस्थां गतौ द्वौ रुग्णौ आयुर्वेदीयचिकित्सया रोगमुक्तौ संजाताविस्युद्घोषयितुं महान्मे आनन्दो भवति। तयोर्नाम्नी स्थाने च यथावसरं प्रकाशयामि।

३. ( अ ) देशीयायुर्वेदीयौषधालयातुरालयविद्यालयादिसंस्थाभिरहं साक्षात् संबद्धोऽस्मि।

( आ ) वर्तमानायुर्वेदविद्यालयौषधालयातुरालयाः।

१ आरोग्यदानदृष्ट्या अपरिपूर्णाः।
२ आयुर्वेदाध्यापनदृष्ट्याऽप्यपरिपूर्णाः।

द्रव्याभावाद्विद्यालयादिकानां कार्यप्रसारोऽतीव कष्टप्रायः संजातः। प्रतितालुकाग्रामं औषधालय एकः, प्रतिजिल्हास्थानं च आतुरालयसमन्वितो विद्यालयः आवश्यकः। सच वनस्पत्युद्यानभेषजसंग्रहालयरसशालौषधशालाग्रंथसंग्रहालयादिनानाविधसंभारसमन्वितो यथाकालं करणीयः।

( इ ) एवंविधानां संस्थानामभावे आयुर्वेदस्य कर्मपथाभ्यासशिक्षादानं कष्टतरं संजायते। अतो विद्यमानस्य प्रत्यूहस्य निराकरणमादौ करिष्यामि। वर्तमानायुर्वेदविद्यालयेषु प्रवर्त्यमाना शिक्षणसरणिरतिसुलभेति न कोऽपि संदेहः। परं गुरुगृहमेव विद्यालयातुरालयौषधालयादिसंभारसमृद्धमायुर्वेदशिक्षणसर्वस्वमिति धिया पठतश्छात्रस्य गुरुगृहे आयुर्वेदज्ञानसंपादनं यद्यपि कष्टतरं तथापि नापर्याप्तं इति निःसंदेहमहं प्रतिपादयामि। संप्राप्तं चायुर्वेदः कष्टायां दशायां वर्तमानोऽपि चिकित्साफलतेजसा यदात्मनो भास्वरतां भासयति तत्र प्राचीनायुर्वेदीयशिक्षापद्धतिरेव प्रधानं कारणमिति न कोऽपि संदेहः। वर्तमानशिक्षापद्धत्यां विशेषवस्तुसंभारसमन्वयेन आयुर्वेदज्ञानसंपादने

सुलभता ज्ञानाभिवृद्धिर्वा भवेत्, परं गुरुगृहमेव आयुर्वेदसर्वस्वज्ञानदायि बुद्ध्या शिक्षणं संपादयतां छात्राणां कृते गुरुपरंपराशिक्षणज्ञानपद्धतिरपरिपूर्णेत्युच्चारयितुमहं न प्रभवामि।

४ देशीयवैद्यकशिक्षणपद्धतेरुदात्तध्येयमनुसृत्य यथोचितशिक्षणज्ञानार्थं संसूचिताः सूचनाः संमताः। शनैः शनैः एवमपि स्यात्।

( आ ) सांप्रतमेतद्ध्येयमुदात्तं वर्तमानदशायां किं किं करणीयं के के चोपायाः समुपयोजनीया इत्यस्य निर्णयः संमेलने एव भविष्यति।

५ कलिकाताविश्वविद्यालयनियुक्तसमितिमताद्भिन्नं मे मतम्।

६ आयुर्वेदीयशिक्षणप्रणाल्यां पदार्थविज्ञानशास्त्र ( Physics ) रसतंत्र ( Chemistry ) जीवशास्त्र ( Biology ) इत्येतेषां विषयाणां नव्यवैद्यशास्त्रपद्धत्या च शवच्छेदादिसहितशारीरविकृतशारीरजंतुशास्त्रशल्यतंत्रेत्यादिविषयाणां समावेशः कर्तव्यः। तत्र न कापि हानिः। परंतु तेषां ज्ञानमावश्यकमित्याग्रहो न युक्तः। आयुर्वेदविद्यापीठशिक्षणप्रणाल्यनुसारेण शिक्षणं संसूचितया दिशा संमेलनमतानुसारेण परीक्षा उपाधयश्च निर्मिता भवेयुः। समवसितदेशीयशिक्षणक्रमस्य अधीतपंचकाव्यस्य विद्यालयेऽस्मिन्प्रवेशाधिकारो भवेत्। अध्ययनकालश्च यथाग्रंथं त्रिवर्षादारभ्य षड्वर्षपर्यन्तं स्यात्। अध्ययनभाषा च गीर्वाणभाषोपबृंहिता देशीयभाषा स्यात्।

७ वर्तमानपाश्चात्यवैद्यनिपुणानां नामसंग्रथन ( Medical Registration ) शासनमिवायुर्वेदार्थमन्यच्छासनमनावश्यकम्। तथापि संमेलनद्वारेण सद्वैद्यानामेकत्रसंग्रथनमत्यन्तमिष्टम्। संमेलनसभासद् ( च ) नियमानुसारेण ये वैद्यसभासदो भवितुमर्हन्ति तेषामेवात्र संग्रथनं भवेत्।

८ पाश्चात्त्यदेशीयवैद्यकपद्धतीरनुसृत्य प्रवर्तितौषधालयातुरालयव्ययस्य तौलनिकपद्धत्या कृतेन पर्यालोचनेन सुस्पष्टं सिद्ध्यति यत् रोगिणमेकमुद्दिश्य देशीयौषधालये चतस्रः कला ( 4 P. ) आरभ्य नवकला ( 9 P. ) पर्यन्तं व्ययो दृश्यते। पाश्चात्यचिकित्साव्ययस्तु अष्टकला ( 8 Pies ) आरभ्य द्विकलाधिकाणकत्रयं ( as. 3 P. 2 ) विद्यते। पुण्यपत्तनीयम्युनिसिपालिटीसंस्थासंप्रवर्तितौषधालयानुद्दिश्याहमेतत् साधिकारं ब्रवीमि।

९ आयुर्वेदस्य हानिः कथं संजाता तदभ्युदयार्थं च के के उपायाः समवलंबनीया इत्येतद्विषये न कोऽपि विवादः। पूर्वतनैः सभापतिभिरस्य विवेचनं कृतचरमेव।

१० भारतनृपश्रेष्ठैः सामन्तचक्रैश्च आयुर्वेदोद्धारकार्यं स्वीकृतं चेत्तर्ह्येतद् भवतु।

११ राजशासनसभासु आयुर्वेदीयवैद्यानां सभासदत्वेन स्वीकारो भवेत्।

१२ लोकानां प्राणत्राणार्थं प्रतितालुकग्रामं देशीयवैद्यपद्धतिमनुसृत्य औषधालयं प्रचलतु।

३ म्युनिसिपालिटी डिस्ट्रिक्टबोर्ड इत्यभिधानां स्थानिकसंस्थानां आयुर्वेदीयौप-

धालयविद्यालयादिकार्यार्थं जनताधनव्ययस्य यथारुचि स्वातंत्र्यं भवतु ।

४ आयुर्वेदीयातुरालयौषधालयविद्यालयवनस्पत्युद्यानभेषजसंग्रहालयसंदिग्धौषध-निर्णयरसशालाग्रन्थसंग्रहालयेत्यादिनानाविधसंभारोपकल्पनमायुर्वेदार्थं भवतु ।

५ पाश्चात्यवैद्यनामसंग्रथनशासनजनितविघ्नानां दूरीकरणं भवतु ।

६ विषोपविषादिदेशीयवस्तुसंपादने विद्यमानशासनजनितविघ्ना दूरतोऽपसार्यन्ताम् ।

७ अमुद्रितायुर्वेदीयाप्रसिद्धग्रंथानां संशोधनं मुद्रणं च भवेत् ।

८ अस्वास्थ्यमुद्दिश्य भिषग्वरैः प्रदत्तो लेखो राजकार्यालयेषु सम्मानितो भवेत् ।

९ क्रमिकशिक्षणपुस्तकेष्वायुर्वेदीयपाठानां समावेशो भवेत् ।

( आ ) १० आधीतायुर्वेदानां भिषग्वराणां पाश्चात्यवैद्यशास्त्रनदीष्णानां च भेदबुध्या यथा राजकार्यालयेषु राजानुमोदितसंस्थासु विषमव्यवहारा न भवेयुस्तथा सर्वथा प्रयतितव्यम् ।

( इ ) ११ लोकमतानुसारं कार्यार्थं म्युनिसिपलसंस्थायां लोकनियोजनसमये पाश्चात्यवैद्यकशास्त्रनदीष्णानामिव वैद्यानामपि मताधिकारो भवेत् ।

( ई ) विश्वविद्यालयसंस्थाश्चायुर्वेदं संमानयित्वा प्रदत्तपरीक्षां विद्यार्थिनां उपाधिवितरणं कुर्युः ।

आयुर्वेदीयग्रंथान् संशोधनपूर्वकं संमुद्रय अप्रसद्धिग्रन्थप्रकाशकायोपायनदानेना-न्येन वाऽभ्युपायेनानुग्रहं कुर्युश्च ।

( उ ) आयुर्वेदाभिवृद्धिमभिवांछद्भिः पुरुषैरितरसंस्थाभिश्च यद्यत्शक्यं तत सर्वं सर्वात्मना संसाधनीयम् ।

प्रश्नोत्तराण्यतीव संक्षेपतया प्रदत्तानीत्यहं जाने । अस्यां प्रश्नावल्यां द्वितीयप्रश्न एव विवादास्पदम् । तस्य विवरणं व्याख्यानं च स्वतंत्रप्रबंधरूपेण कर्तुमुचितम् । तथापि कलिकातासंमेलनसभापतिभिः सप्तवर्षात् प्राक्कृतमभिभाषणं मद्रासदेशीयवैद्यविमर्शक-समितिद्वितीयप्रश्नमुद्दिश्य लिखितमिवावभासते । अतश्च मया तस्य निर्देशः कृतः । आयुर्वेदीयग्रन्थेषु प्रतिपादितानि पंचमहाभूतानि अपराणि च न्यायमीमांसादिग्रंथेषु प्रतिपादितान्यन्यानि तत्त्वानि संमतानि न वा विवादार्थमुपपादितप्रमाणेषु प्रत्यक्षानु-मानादिप्रमाणानि च संमतानि न वेत्यज्ञात्वा अस्य विवरणं निरर्थकम् । त्रिदोषसिद्धये च आगमप्रमाणं स्वीकार्यं नोचेत् तत्सिद्धिर्नभवतीति न केनापि प्रतिपाद्यते । आगम-प्रमाणमपहायापि तदितरप्रमाणैः तत्सिद्धिर्भवत्येवेत्यस्माभिः प्रतिपाद्यते । आयुर्वेद-ग्रंथीयरसवीर्यविपाकप्रभावाद्यौषधवर्णनपद्धतिरपि पाश्चात्यवैद्यशास्त्रविदुषामसंमताऽ-स्ति । तथापि पथ्यापथ्यविवेकदृष्ट्या लोकानां भिषग्वराणां चानुभवेन सा उपयुक्तमेति सिद्धम् । अर्वाचीनरसतंत्रानुसारेण हरीतक्यां ( Tanic Acid ) नामकः पदार्थ उपलभ्यते । तस्य धर्मश्च स्तंभकः । परं हरीतकी विरेचयतीति सर्वेषां सुप्रसिद्धोऽनु-भवः । अत्र किं संमाननीयं रसतंत्रं ( Chemistry ) आयुर्वेदानुभवो वा ।

कपर्दिकाशंखशुक्तिमौक्तिक भस्मनां गणना रसतंत्रानुसारेण एकस्मिन् वर्गे क्रियते। आयुर्वेदग्रंथेषु तु अत्यौषधं सूक्ष्मसूक्ष्मतयाऽनुभवा वर्णिताः। एवमनेकविधाः प्रश्नाः सन्ति। तेषामूहापोहः उद्घाटनं वा अल्पावसरे कर्तुं अशक्यम्। श्लेष्मकज्वरेण संक्रामकरोगेण पुण्यपत्तनं यदा समाक्रान्तमासीत्तदा पुण्यपत्तनीयैः भिषग्वरैः किमपि वेतनमगृहीत्वा आयुर्वेदीयातुरालयौ प्रचालितौ। तौ च लोकानां तथा विश्वासार्हौ आदरपात्रं च संजातौ यथा समीपवर्तिनं पाश्चात्यवैद्यकातुरालयमपहाय लोकाः आयुर्वेदीयातुरालयं वरतरं मत्वावलम्बयामासुश्चिकित्सार्थम्।

## वंगीयायुर्वेदविमर्शकसमितिप्रश्नानां विचारः।

१ आयुर्वेदचिकित्साया लाभः हिंदूयवनयहुदिखिस्तिपारसीकादिसर्वजातीनां भवतीति कस्यापि चिकित्सालयस्य रुग्णसंख्यायाः सिध्यति। मम चिकित्सागृहेऽपि एवमेवानुभवो दृश्यते। आयुर्वेदपद्धतेः स्वीकारो नृपाधिकारिभिः कृतश्चेत् तालुकाग्रामवासिनामन्येषां च दूरतरग्रामेषु निवासं कुर्वतां औषधसाहाय्यं भविष्यति।

२ वर्तमानावस्थायां आयुर्वेदस्यांगोपांगानि विकलानि संजातानि तानि नवीनग्रथोपलब्धज्ञानेन पूरणीयानि। यद्यदायुर्वेदोपयोगि नवीनं ज्ञानं तत्तदात्मसात्करिष्यते। अधुनातनाः शास्त्रीयशोधाः अग्राह्या एव इति न केषामप्याग्रहः। परं यद्यद्ग्रहणीयं तत्तदात्मसात्कृत्वा गृहीतं चेत्तु आयुर्वेदपोषणं भविष्यति इत्येवमायुर्वेदाभिमानिनामाग्रहः शास्त्रमूलकः।

३ सांप्रतं कषायचूर्णगुटिकालेहतैलघृतादिसिद्धौषधानां भस्मनां चोपयोगः क्रियते। विशिष्टस्यौषधस्योपयोगः विशिष्टतया क्रियते इति कथयितुं नैव शक्यते। विशिष्टरोगे च कस्याश्चिकित्सायाः समाश्रयः क्रियते कानि चौषधानि सफलतयैवोपयुज्यन्ते इति कथयितुं सुशकम्। परमेतान्यौषधानीतरवैद्यचिकित्सितौषधेभ्योऽधिकतरं गुणावहानीत्यातुरालयस्थलेखव्यतिरेकेण कथयितुं नेष्टम्। पाश्चात्यवैद्यशास्त्रपण्डितप्रकाण्डानां प्रथितयशसां उपदेशानुसारं औषधानि गृहीत्वाऽपि अप्राप्तारोग्या आयुर्वेदीयचिकित्सासमाश्रयणादनन्तरं केचन रुग्णाः रोगमुक्ताः संजाताः इत्येतादृशोऽनुभवः प्रतिप्रान्तं सर्वेषां विद्यत एव।

४ चरकसुश्रुतसंहितयोः कालः पंचशताधिकद्विसहस्राद्वर्वाचीनो भवितुं नार्हति। तस्मिन् काले आयुर्वेदस्य स्थितिः स्पृहणीयाऽऽसीत्। सिकंदर इति ख्यातेन ग्रीसभूपतिना भरतवर्षं समाक्रान्तम्। परं यदा तस्य सैनिकाः सर्पदष्टास्तदा ग्रीसदेशीयाः भिषजः मूढा इवाभवन्। तेषां हि सर्पविषशमनमगदं अज्ञातमासीत्। तदा च तेषां विषोपशमनमायुर्वेदीयभिषग्वरा एवाकुर्वन्। सिकंदरस्य आहतसैनिकानां क्षतसंशोधनकर्मण्यप्यायुर्वेदीयभिषजामेव योजना कृताऽऽसीदिति श्रूयते। अत एव च युद्धावसाने भरतवर्षीयराजेन सह सिकंदरेण यः संधिः कृतः तस्मिन् आयुर्वेदनिष्णा-

तद्वैद्ययोर्दानमवश्यमिति निर्बन्धः कृतः। अपरेषामपि प्राचीनायुर्वेदीयविभवप्रदर्शकवस्तूनां प्रतिपादनं कर्तुं शक्यते। आयुर्वेदस्यावनतस्थितेः कारणान्यनेकानि। आयुर्वेदस्य प्राचीनवैभवस्य अधुनातनायाः हीनावस्थायाश्च विवरणं सविस्तरं मम सुहृद्वरैर्महामहोपाध्यायकविराजगणनाथसेनमहाभागैः कृतचरमेव। राजश्रयाभावे वैद्यानां च तटस्थवृत्त्या नवीनाविष्कारग्रहणस्य प्रयत्ना न कृताः। राजश्रयलाभेनायुर्वेदीयातुरालये कार्यस्य सन्धिलाभे चैतत्कार्योत्तेजनं भवेत्।

५ वर्तमानं शारीरस्थानं शारीरज्ञानार्थं इंद्रियविज्ञानार्थं वा अपर्याप्तम्। महामहोपाध्यायकविराजगणनाथसेनमहाभागैरियं त्रुटिः स्तोकेनांशेन प्रत्यक्षशारीरस्य प्रथमभागप्रकाशनेन दूरीकृता। इंद्रियविज्ञानशिक्षाया अपि ग्रंथलेखनमावश्यकम्। द्रव्यगुणशास्त्रस्याध्यापनार्थं निघण्टवो विद्यन्त एव। कायचिकित्साशल्यतंत्रं च चरकसुश्रुतसंहितयोरावश्यकभागान् गृहीत्वा अध्यापयितुं सुशकम्। स्वस्थवृत्तं प्रतिबंधकौषधानीतरसंकीर्णप्रकरणानि चायुर्वेदीयग्रन्थेषूपलभ्यन्ते। यदि काश्चन त्रुटयो भवेयुस्ता दूरीकर्तुं शक्यन्ते।

६ आयुर्वेदीयाः संहिताग्रंथाः अपरे च ग्रंथाः लोकानां सुलभा भवेयुरिति ग्रंथप्रकाशकेभ्य साहाय्यं कर्तव्यम्।

७ सांप्रतं तु यानि औषधानि मूलद्रव्याणि वाऽऽपणे उपलभ्यन्ते तान्येव गृह्यन्ते। किंतु परीक्षणपूर्वकं तानि गृहीत्वा तेभ्यश्चूर्णानि गुटिकाश्च क्रियन्ते।

( अ ) सांप्रतमुपयुज्यमानानामौषधानां सिद्धौषधानां च परीक्षानिष्कर्षनिर्णयार्थमद्यावधि प्रयत्ना न कृताः।

( आ ) तथैव मूलद्रव्याण्यौषधयश्च उत्तमान्येव संभवेयुः, तेषां संग्रहोपि उत्तमतयैव भवेत्, अथ च तान्यापणे विक्रीणीरन्नित्येतद्विषये न केनापि प्रयत्नाः कृताः। रसशालायां प्रयोगं कृत्वा प्रयोगनिर्णयः सर्वेषां ज्ञानार्थं प्रकाशनीयः।

८ मद्रदेशीयवैद्यकग्रंथोत्तमष्टमम्।

९ आयुर्वेदाध्यापनार्थं सांप्रतं पाठशालाः विद्यालयाश्च स्थाने स्थाने स्थापिताः स्थाप्यन्ते च। परं आयुर्वेदशिक्षणस्य उत्तमो मार्गो अद्यापि गुरुगृहमेव इति सानंदं कथयामि। आयुर्वेदीयशिक्षणपाठ्यप्रणालिमनुसृत्य आयुर्वेदोऽध्याप्यते। परं छात्रशीलनिरीक्षणादिदृष्ट्या गुरुरेव शरणम्

१० राजसम्मतायुर्वेदमहाविद्यालयप्रवर्तनं कृतं चेत् तर्हि तत्र—

( अ ) पर्याप्ता विद्यार्थिन आयुर्वेदाध्ययनार्थमागच्छेयुः।

( आ ) भिन्नभिन्नायुर्वेदीयानां अङ्गोपाङ्गानां पर्याप्ता अध्यापका अपि लभ्येरन्।

( इ ) विद्यार्थिनामध्यापनार्थं आवश्यकं सर्वमातुरालये सुलभं भविष्यति। एतादृशान्महाविद्यालयात्परीक्षानंतरं वहिरागतानां वैद्यानां स्थितिरवश्यं स्पृहणीयतरा भवेत्। एवंविधसंस्थायाः कृते दशलक्षरूपकेभ्य आरभ्य त्रिंशल्लक्षपरिमितरूपकाणां व्ययः आवश्यको भवेत्।

११ महाविद्यालयप्रवेश परीक्षा ( Matriculation ) पर्यन्तमध्ययनकृताय गीर्वाणभाषायां विशेषनिपुणाय च महाविद्यालयप्रवेशाधिकारो भवेत्, शिक्षणक्रमश्च चतुर्वर्षादारभ्य षड्वर्षात्मको भवेत्। शिक्षणं च गीर्वाणभाषाद्वारेण दातव्यम्।

१२ संसूचितानां विषयाणां ज्ञानं विद्यार्थिनां लभाय भवेत्। एतेषां विषयाणां शिक्षणप्रबंधः स्वतंत्रो भवेच्चेत्तर्हि तदतीवोत्तमं नो चेत् आयुर्वेदोपयुक्तस्य भागस्य शिक्षणं यथावसरं दातव्यम्।

१३ शिक्षक्रमस्तु उपाधिदृष्टया निश्चेतव्यः।

१४ पाश्चात्त्यवैद्यनामसंग्रथनशासनेनायुर्वेदीयवैद्यानां महती हानिः संजायते। अस्वास्थ्यविषयको वैद्यानां लेखो राजकार्यालयेषु तिरस्क्रियते। तेनचायुर्वेदेषु बद्धादराऽपि जना अनिच्छया पाश्चात्त्यवैद्यविद्यानिपुणमेव गच्छन्ति चिकित्सार्थम्। शासनमिदं तु पाश्चात्यवैद्यकनिपुणार्थं कृतमप्यधुना तदायुर्वेदीयभिषग्वराणां तापजनकं संजातम्।

१५ मद्रदेशीयवैद्यविमर्शकसमितिप्रश्नावल्यां सप्तमप्रश्नस्योत्तरम्।

१६ दशमप्रश्नोस्योत्तरम्।

१७ कालेन कथयितुं शक्यते।

एवं देशीयवैद्यकविमर्शकसमितिप्रश्नोत्तराणां दिग्दर्शनं कृतम्। ७. एतत्तु मनसि निधेयं यदीतरशास्त्राणामभ्यासमिव आयुर्वेदोऽपि गुरुमुखादेवाध्येतव्यः केवलाक्षरज्ञानेनास्य तत्त्वं विज्ञातुं न शक्यते। यैर्यैश्च पाश्चात्त्यपण्डितैरायुर्वेदीयग्रंथानामास्थापूर्वकमध्ययनं कृतं तेषां सर्वेषां आयुर्वेदानुकूलो ग्रहः संजातः। डॉ० वाईज प्रो० वुइलसन्, डॉ० क्लार्क इत्यादिपाश्चात्त्यवैद्यविद्यापंडितैः सर्जन् जनरल सर पार्डे ल्यूकिस महाभागैरप्यायुर्वेदस्य प्रशंसा कृता। अस्मात् एवं सिध्यति यः कोऽप्यायुर्वेदाध्ययनं निपुणतया कुर्यात्तस्यायुर्वेदतत्त्वानामाकलनं समीचीनं भवेत्। परमायुर्वेदीयग्रंथं हस्तेऽगृहीत्वा आयुर्वेदीयग्रंथप्रतिपादितसिद्धान्तानुद्दिश्य यथारुच्यभिप्रायं प्रकटयितुमुद्युक्तस्यायुर्वेदः सदैवाज्ञातो भवेत्। आयुर्वेदस्य शास्त्रीयता उपयुक्तता च नैतादृशैर्विवादैः संसाधनीया, प्रत्युत तत्प्रतिपादितसिद्धान्तानुसारमनुभवो दृष्टो न वेति विचिन्त्य निश्चेतव्या। अनुभवश्चायं सर्वथायुर्वेदानुकूल इत्यत्र न कोऽपि संदेहः।

## भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।

अयि श्रेष्ठाः! चिकित्साकर्मणः वैद्यः, औषधं, परिचारकः, रोगी चेति चत्वारः पादाः, येषु पुनर्वैद्यः प्रधानतया गणितः। अतः प्रधानभूतस्य वैद्यस्य स्वगुणसंपदाधानार्थं प्रयत्ना आवश्यकाः। तेषु प्रथमः प्रयत्न आयुर्वेदीयग्रन्थसंग्रहालयरूपो भवेत्। आयुर्वेदग्रन्थानां संपादनं संशोधनं प्रकाशनं च कियत् महत्त्वपूर्णं कार्यं तद्यादवजीशर्मणां प्रयत्नैरेवानुमेयम्। तैरद्यावधि पंचदशाधिकाः रसग्रंथाः प्रकाशिताः। आयुर्वेद-

विषयकाणां सप्तशतसख्याकग्रंथानां नामानि 'ऑफरेक्टसूच्यां'मुपलभ्यन्ते। गतसंवत्सरे एव सरस्वतीनिधानकवीन्द्राचार्याणां सूचीपत्रं प्रकाशितम्। तस्मिन् द्विशतायुर्वेदीय-ग्रन्थानां नामानि विद्यन्ते। तस्माच्च हेमाद्रेः चरकसंहिताया अपि टीका लिखिताऽसीत् इति ज्ञायते। बहवश्च संहिताग्रंथाः अश्रुतपूर्वाः तत्र दृश्यन्ते। कवीन्द्राचार्यास्तावत् शाहजहानसमकालीना आसन् इति तेनैव दत्तेन सर्वविद्यानिधानेत्युपाधिना अनुमीयते। कवीन्द्राचार्यो गोदातटनिवासी महाराष्ट्रीयब्राह्मण आसीत्। अस्याः सूचेरनुसारेण प्रयत्नाः कृताश्चेत्तर्हि बहवआयुर्वेदीयग्रंथाः सर्वेषां सुलभा भवेयुः। अस्मिन् संवत्सरे कलिकाताविश्वविद्यालयसंस्थया भेडसंहितां प्रकाशयित्वा महदुपकृतं सम्मेलनम्। निर्णयसागराख्यमुद्रणालयाधिपतिभिः पांडुरंग जावजी इत्येतैः दाताराभिधवैद्यभूषणवामनशास्त्रिभिः परिशोधितां श्रीचक्रपाणिटीकासमन्वितां चरक संहितां तथैव भिषग्वराढमल्लविरचितटीकासमन्वितां शार्ङ्गधरसंहितां महता व्ययेन प्रकाशयित्वा आयुर्वेदस्य महत्साहाय्यं कृतम्। वडोदाग्रन्थसंग्रहालयाधिकारिभिः कवीन्द्राचार्यसूचीपत्रप्रकाशनेनापि अज्ञातपूर्ववैद्यकग्रंथानां परिचयं कारयित्वा उपकृतं सम्मेलनम्।



### ग्रन्थकृतामभिनन्दनम्



अयि श्रेष्ठाः! अत्र प्रोच्यतेऽभिमानास्पदमवश्यवक्तव्यं किंचित् यतस्तद्विना मदीयं कार्यमेव त्रुटिपूरितं स्यादित्यहं मन्ये। तथाहि त्रयो ग्रन्थकाराः सुहृद्वराः सुगृहीत-नामधेया अवश्यं सर्वेषामस्माकमायुर्वेदशास्त्रवृद्धिमभिकाङ्क्षमाणानां स्तुतिभाजनम्। तत्र प्रथमं पण्डितश्रेष्ठमहामहोपाध्यायगणनाथसेनाभिधानमवतरति। एषां पण्डितमहाभागानां प्रत्यक्षशारीरस्य प्रथमो भाग उपोद्घातसहितः सद्वैद्यैरादृत एव। तद्दर्शनेन विद्वद्भिरेषां ग्रन्थचातुरी समनुभूतचरी। अयि श्रेष्ठाः! तं ग्रन्थं पाठयतां प्राचीनमहर्षिग्रन्थ-पाठनरसास्वादोऽनुभवपदवीमागच्छति। तस्यैव ग्रन्थस्य द्वितीयभागमपि सर्वे विद्वांसः सोत्कण्ठाः प्रतिक्षणं प्रतीक्षन्ते। तामुत्कण्ठामचिरादेव सुहृद्वराः पूरयेयुरित्याशासे। अन्यत्किञ्चिन्निवेदनीयम्। अचिरादेव पण्डितवरेण्यैः सिद्धान्तनिदानस्य प्रथमो भागः प्रणीय प्रकाशितः। यत्र च पूर्वोक्तचातुरीमनुभूयान्यदप्यपूर्वं ज्ञानं वैद्यवरा अधिगमिष्यन्ति। यतस्तत्राधुना सर्वत्र जनपदोद्ध्वंसिनः पूर्वतनग्रन्थेष्वनुपलब्धा ग्रन्थिकज्वरश्लेष्मकज्वरश्वसनकज्वरान्त्रिकज्वरादयो बहुधा सप्रपंचं प्रपञ्चिताः। अत्र ग्रन्थे विशेषतोऽभिनन्दनीयमेतद्यदत्र पाश्चात्यग्रन्थेषु यदधिकं तद् वैद्यशास्त्रपद्धतिमनुसृत्य ग्रन्थशरीरे निबद्धम्। येन च सद्वैद्या एतं ग्रन्थं जीवाणुवादप्रदर्शकमपि त्रिदोषतत्त्वाङ्गीकारिणं सरसतया मसात्करिष्यन्ति।

अथ च वैद्यप्रवरैर्नेत्ररोगचिकित्साप्रथितयशोभिर्बालकृष्ण शिवराम मुञ्जेमहाभागैर्नेत्ररोगनामा यो ग्रन्थः प्राणीयत, यश्च सांप्रतं चित्रशालामुद्रणालये मुद्र्यते तेन

मुञ्जेमहाभागा अवश्यं स्तुतिभाजनम् । यतस्तैरस्मिन् ग्रन्थे नेत्रशारीरमारभ्य तद्भेद-प्रदर्शनपूर्वकं तत्तद्रोगविषयकं चिकित्साविषयकं च सविस्तरं वर्णनं गीर्वाणभाषया कृतम् । एतावत्कालपर्यन्तं माधवनिदानगतकिञ्चिज्ज्ञानातिरिक्तं न किञ्चिद्वैद्यवरा जानन्ति स्म । एतद्ग्रन्थालोडनेनाधुना वैद्या नेत्ररोगज्ञानकुशला भवेयुरायुर्वेदाध्यायिनो नेत्ररोगज्ञान-विधुरा भवन्तीति कलङ्कमपाकुर्युरिति विदाङ्कुर्वन्तु श्रीमन्तः । एतस्मिन् ग्रन्थेऽपि पूर्वपद्ध-तिमनुरुध्यैवायुर्वेदगतरोगनामानि तान्येव । यत्र तादृशं नोपलभ्यते तत्रैव नवीनमन्यथ रोगनाम प्रदर्शितम् । अत्र एतावत्कालपर्यन्तमुपलभ्यमाननयनरोगनिदानचिकित्सादिक-माहृतम् । अतःपरमप्येवमेव नासिकागलादिरोगविषयकप्रबन्धान् प्रणीय वैद्यवराननु-गृह्णीयुरज्ञातज्ञापनेन मुञ्जेमहाभागा इति सविनयमाशासे । डॉ. मुञ्जेमहाभागा राज-कीयविषयव्यापृतान्तःकरणा इति सुप्रथितं तथापि पूर्वोक्तग्रन्थवत् अत्रापि ते यथाकालं प्रयतेरन् इति मे मतिः ।

ततः परम् । परमसुहृदः यादवजी त्रिकमजी आचार्याः सादरमभिनन्द्यन्ते । येषां च रसौषधपाठसंग्रहनामा पण्डित हरिप्रपन्नसाहाय्येन ग्रथितः प्रबन्धः केषां नादरास्पदं भविता येन सर्वेषां पाठानामेकत्र संग्रहात् भिन्नस्थानेषु दृश्यमाना औषधभेदा स्तद्गुणभेदाश्च सर्वेषां सुस्पष्टा भवेयुः । किंचानेन प्रबन्धेन विविधा या औषधशालाः सन्ति भविष्यन्ति च तेषामपि सौकर्यं स्यात् । किंच वैद्यसंमेलने नैतदवश्यं विचार्यम् । यदिमं प्रबन्धमनुसृत्य भिन्नभिन्नपाठास्तत्तद्रोगेषु यथोपयुज्यन्ते तथा लोकेषु प्रथनीयं तदर्थं वैद्यसंमेलनेन सद्वैद्यसमितिरेका नियोजनीया । अयं ग्रन्थो रसवद्भिषग्वराणां संग्राह्यः शोभाप्रदश्च भविष्यतीत्यत्र न मे संशयः ।

भरतवर्षीयविश्वविद्यालयसंस्थाभिरमुद्रितायुर्वेदीयग्रन्थानां प्रकाशनं कार्यम् । नवीन-ग्रंथलेखकेभ्यः उत्तेजनमपि देयम् । वर्तमानक्रमिकशिक्षणपुस्तकेषु आयुर्वेदीयपाठानां समावेशः अवश्यं भवेदिति भिषग्वरैः केचन आयुर्वेदीयपाठाः लिखित्वा क्रमिकशिक्षण-पुस्तकव्यवस्थापकेभ्यः प्रेषणीयाः । आयुर्वेदमहाविद्यालयः आतुरालयौषधालयादिनाना-विधसंभारसमन्वितो भवेदिति सर्वात्मना प्रयत्नाः कर्तव्याः । मद्रपुर, लाहोर, प्रयाग, काशी, कलिकाता, त्रिवेंद्रम, अहमदाबाद, पाटण, महिशूर इत्यादिस्थलेषु एतादृश-विद्यालयार्थं प्रयत्नः कृतश्चेत् सः सफलो भविष्यति ।

## आतुरालयार्थं द्रव्यं व्ययीकुर्वतामभिनन्दनम् ।

अनेनैव प्रसंगेन अस्मिन् सम्मेलने एकमानंदावहं वृत्तान्तं कथयितुं महान् मे प्रमोदो भवति । येवलेनामके ग्रामे गंगाराम छबीलदास इत्येतेषां स्मरणार्थं सांप्रतं तत्र विद्यालय औषधालयश्च अतीव प्रशंसार्हं कार्यं करोति । परं आतुरालयाद्विना कर्माभ्या-सज्ञानं कष्टतमं भवति । अतः तैः महाभागैः त्रिचतुर्लक्षरूप्यकाः एतत्कार्यार्थं संकल्प्यो-पचिताः प्रतिवर्षं च द्वादशसहस्रपरिमितः व्ययः अस्माद्धनात् भविष्यति । एव-

मातुरालयौषधालयसमन्वितः आयुर्वेदविद्यालयोऽचिरादेव आयुर्वेदोद्धारकार्यं करिष्यतीति श्रुत्वा कस्य आनंदो न भवेत्। औषधशालास्वपि औषधनिर्माणरीतिरेकरूपा भवितुमर्हति। सिद्धौषधपरीक्षानिष्कर्षनिर्णयः प्रयोगेण निश्चेतव्यः। सिद्धौषधेषु केषां द्रव्याणां उपयोगः कार्य इत्यत्रापि विवादः। पाश्चात्त्यवैद्यपद्धत्या सिद्धानां औषधानामुपयोगो वैद्यैरौषधशालासु च करणीयो न वेत्यस्य प्रश्नस्य निर्णयो विवेकेनैव करणीयः।

तदेवौषधमुद्दिष्टं यदारोग्याय कल्पते।
स एव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत्॥

इति वचनमवलम्ब्य केचन भिषग्वराः सर्वेषामुपलभ्यमानानां पदार्थानामुपयोगं कर्तुमिच्छन्ति। आयुर्वेदीयपद्धत्या सिद्धानामेवौषधानामुपयोग करणीयः इत्यपरे प्रतिपादयन्ति। एषां वैद्यानामपि अयमेव आग्रहो यद्वैद्याः परावलंबिनो न भवेयुः। नो चेत् महायुद्धसमये किनाईन् इत्याद्यौषधानामप्राप्तौ पाश्चात्त्यवैद्यविद्यापंडितानां या अनुकंपनीया स्थितिः संजाता तामेव दशां भिषजः प्राप्नुयुः। अतो यावच्छक्यमापणे उपलभ्यमानं मूलद्रव्यं गृहीत्वा आयुर्वेदीयपद्धत्या यथोचितं संस्कारान् कृत्वा तस्योपयोगः स्वतंत्रतया सिद्धौषधेषु वा कार्यः। किनाईन् इत्यादिशीतज्वरहराणामौषधानामुपयोगो वैद्यैश्चिकित्सायां कार्यो न वेति महान् विवादार्हः प्रश्नः। एषां द्रव्याणां गुणवर्णनं नोपलभ्यते तेषां गुणवर्णनार्थमप्यस्माभिः प्रयत्नः करणीयः। रसौषधानां सिद्ध्यर्थं ये ये संस्काराः क्रियन्ते तेषां प्रतिसंस्कारं को विपरिणामो जायते? इत्यवलोकनीयम्। एवमपरेषामपि न्यूनानां परिहाराय विमर्शनपूर्वकाः समुद्यमाः समाश्रीयन्ताम् इति। ये ये चोपायाः पूर्वसम्मेलनेषु संसूचिताः तेषां सर्वेषामवलंबनं कृत्वा आयुर्वेदोद्धारः करणीयः।

अयि श्रेष्ठाः! यन्मया वक्तव्यं तन्निःसारत्वात् कर्णारुन्तुदमपि यथा श्रीमद्भिः सहजसौजन्याच्छ्रुतिपथमानीतं तथा विविधेऽस्मिन् संमेलनकर्मणि साहाय्यं कृत्वा श्रीमन्तोऽनुगृह्णीयुर्मामिति संप्रार्थ्य जोषं भावं समाश्रयामि।

भिषजां साधुवृत्तानां भद्रमागमशालिनाम्।
अभ्यस्तकर्मणाम् भद्रं भद्रं भद्राभिलाषिणाम्॥

इति शम्।



१४

# वैद्यरत्न, कविराज, योगेन्द्रनाथ सेन

एम० ए०, विद्याभूषण ( कलकत्ता )

सभापति निखिल भारतवर्षीय

# चतुर्दश वैद्य सम्मेलन

## कोलम्बो ( सिलोन )

सन् १९२३ ई०

खेद है कि आपका चित्र, चरित्र और कोलम्बोवाला भाषण प्राप्त न हो सका।

[ चतुर्थाधिवेशनके सभापति पदसे दिया हुआ स्वर्गीय कविराजजी का भाषण यथास्थान छापनेका समय जब आया तब तक आपका वह भाषण सतत प्रयास करते रहने पर भी प्राप्त न हो सका था। अब वह भाषण सौभाग्यवश प्राप्त हो गया है। अतएव यहाँ पर इस अधिवेशनके भाषणके अभावमें प्रकाशित किया जा रहा है। ]

निखिलभारतीयवैद्यसम्मेलनस्य चतुर्थाधिवेशनसभापते र्वैद्यरत्न, विद्याभूषण-

## स्वर्गीय कविराज योगेन्द्रनाथ सेन एम० ए० महाशयस्य

### अभिभाषणम् ।

[ एतच्च कानपुरनगरे १९६९ तमेऽब्दे चतुर्थवैद्यसम्मेलने पठितम्, सुमहता प्रयासेन च विलम्बतः प्राप्तमिति यथास्थानं न मुद्रितम्, चतुर्दशाधिवेशनावसरे पठितं च स्वर्गीय सेनमहाभागानां भाषणं नैवोपलब्धमिति तेषामिदमेव भाषणमत्र समुद्ध्रियते । ]

ओं शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ओम् ॥
यः प्राणदं गदशमार्थमथर्ववेदोपाङ्गं स्वयं निगममायुष आततान ।
भाविप्रजाकुशलकामनया पुरैव तं वेधसं परमकारुणिकं नमामि ॥

भो भो विद्याविनयसम्पन्नाः मान्याः अन्वयवयःशीलशौचाचारवन्तो धीमन्तः श्रीमन्तः आर्यमिश्राः—

### उपक्रमणिका ।

१—अहमात्मानं बहु मन्ये यदद्य अनवद्यचरितेषु सद्वैद्यविद्यापारावारपारीणेषु धिया धिषणमपि उपहसत्सु ज्ञानेन वयसा च मत्तोऽधिकतरेषु विविधगदोपशमनजनितयशोराशिनिरन्तरधवलितदिगन्तरालेषु अगण्येषु मान्येषु अगदङ्कारेषु उपसन्नेष्वपि अहमस्यां परिषदि भवद्भिरनुकम्पमानहृदयैः परिषत्पतिपदे नियोगेनानुकम्पितः । भवताम् अर्हताम् अनतिक्रमणीयताम् अनुचिन्त्यैव एतद्भवदीयशासनम् अवनतेन शिरसा सबहुमानम् अत्यर्थमभ्यर्थयमानोऽपि आत्मनि अप्रत्ययतया विशङ्के, यादृशे गुरुकर्मणि भवद्भिरहं नियोजितः तत् सर्वथा साधयितुम् अलमस्मि न वेति । भवन्तः साधवः । मया पुनः श्रुतं यत्—

"गृह्णाति साधुरपरस्य गुणं न दोषम्"—इति ।
वत्सवतां करुणावतां सतां गुणगृह्णतामनुस्मरन्नेव प्रसरामि ॥

### सम्राजोऽभिषेकमहामहोत्सवः ।

२—जयति जयति महीभुजामग्रवर्ती महाभुजः अस्माकं राजचक्रवर्ती । यस्य शासनं संभ्रमम् अवनतेन मूर्ध्ना समस्तसामन्तनृपमण्डलैः कुसुमस्रगिव समुह्यते । यस्य राज्याधिकारेषु भानुमान् भियेव नास्तं याति । दिष्ट्या तेन महिषीसनाथेन कुलभूधरकन्दराभिराम्रेड्यमानैः युगपदशनिशतपातजातधीरध्वनीन् अपि तिरस्कुर्वद्भिः मुहुर्मुहुरगणितशतघ्नीगर्जितैः उच्चैरुद्घोष्यमाणे राजराजसभाजनागतनिखिलनरपतिवृन्द-

संवाये अभिषेकमहामहोत्सवे मृदुलचरणतलस्पर्शेन एतत् भारतभूमितलं नितरां स्नावितम्।

## गोष्ठीप्रवृत्तिः।

३—माननीयाः सभासदः—आयुर्वेदविदां भिषजां गोष्ठीप्रवृत्तिमधिकृत्य आदौ किञ्चिदभिधास्ये। ईदृशी गोष्ठी प्राक् मनीषिणः श्रीमच्छङ्करशास्त्रिणः प्रयत्नेन नासिकनगरे अथ पनवेलनगरे चासीत्। ततः परं वाराणस्यामवधारितप्रवृत्तिरपि, हा हन्त, विद्यानुरागिणि श्रीशङ्करशास्त्रिणि परलोकमुपगते, तच्छुचा प्रतिषिध्यमानाऽसौ पुनरतीते वर्षे भागीरथीकलिन्दनगनन्दिन्योरन्योन्यसङ्गमपवित्रीकृते प्रयागे अभवत्। ततः परं पुनरियं प्रवृत्तिः। आयुर्वेदवेदिनामेवं गोष्ठीप्रवृत्तिः कालवशान्मन्दीभूतस्यापि आयुर्वेदस्य पुनरुच्छ्वासं सूचयति, तदुक्तचिकित्साविधौ च जनानुरागमाकर्षति। भिषजामस्माकमपि तद्विषयसम्भाषणविधौ उपकरोति।

## स्वर्गतानां कृते शोकः।

४—अथ महीमहितकीर्तयः सुधियः सुगृहीतनामानो ये च महात्मानः मन्दायमानस्य आयुरान्नायस्य तदुक्तचिकित्सितविधेश्च पुनः प्रकर्षाय अगणिततनूपातमध्यवस्य अतीते वर्षे सुरपतिपुरसुन्दरीपरिभोग्याः जाताः, अग्रतस्तेषां पवित्रचरितानां नामग्रहणम् इह स्वस्त्ययनमिव श्रेयसे मन्ये।

तेषु महोदारहृदयः श्रीमत्कृष्णस्वामी ऐयरमहोदयः, स्वयमवैद्यवृत्तिरपि, वैद्यविद्यायां तदुपदिष्टचिकित्सायां च जातपक्षपातः, तदुत्कर्षसाधने अनारतं प्रयतमानमानसः आसीत्।

महामहोपाध्यायपदलाञ्छनानां मत्तातपादानाम् अन्तेसदः इदानीं जयपुरपतिपुरप्रतिष्ठापितविद्यालयायुर्वेदाध्यापकस्य आयुर्वेदपारावारपारदृश्वनः वैद्यरत्नश्रीमल्लक्ष्मीरामाचार्यस्य सकाशात् विधिवदुपात्तविद्यः ज्ञानगरिष्ठः वयसा पुनरप्रवृद्धः मनस्वी किशोरीवल्लभशास्त्री आयुर्वेदमार्तण्डाख्यं पत्रं प्रकाशयन् आयुर्वेदस्य पुनरभ्युदयाय सर्वथा प्रवृत्त आसीत्।

पर्यवदातश्रुतः परिदृष्टकर्मा भिषक्कुलशिरोरत्नभूतः आयुर्वेदार्थविज्ञाने तदुपदिष्टचिकित्सितेषु च असकृत्प्रकटितपाटवतया प्रीतेन नाटोराधिपतिना स्वनगरे राजवैद्यपदे सबहुमानं प्रतिष्ठापितः कविरत्नोपनामा श्रीमदीश्वरचन्द्रसेनोऽपि आयुर्वेदोक्तचिकित्साविधेरुत्कर्षसाधने बहुलप्रसारणे च सर्वथा प्रयतते स्म।

अनारतव्याधिपीडितदरिद्रजनभेषजदानजनितयशोराशिमहनीयः आरानगरवासी मनस्वी बालगोविन्दत्रिवेदी, तथा लक्ष्नौनगरे लब्धप्रतिष्ठः प्लेगुचिकित्सानिबन्धरचयिता श्रीमान् गदाधरः, तथा प्रयागवास्तव्यो भिषग्वरः श्रीमान् बालानन्दमिश्रः—एतेऽपि अस्मिन्नवसरे ससंभ्रमं कीर्तनीयाः।

## आयुर्वेदस्य पुनरुद्धर्ता आचार्यगङ्गाधरः ।

५—मान्याः सभासदः—पुण्यश्लोकः अन्यः कोऽप्येकः यस्य नामनि उच्चार्यमाणे न केवलं सर्वैर्भिषगाचार्यैः, अन्यैरपि, ससंभ्रमम् आवर्ज्यते मौलिः । यस्य जन्मना निखिलवैद्यकुलं कर्मणा च सकलभारतभूमितलम् अतितरां श्लाघितम् । यश्चात्मनो ज्ञानेन आयुर्वेदस्य मन्दीभावदुर्दिनान्धकारे व्याहतबोधदृशां बुभुत्सूनां कृतदीपदर्शन इव आसीत् । दिष्ट्या सोऽसौ भिषक्कुलविजयमुकुटमणिः श्रीमदाचार्य गङ्गाधरः, साक्षाद् गङ्गाधर इव वङ्गभूमाववतीर्णः । येयमस्माकम् आयुर्वर्धनतन्त्राणां ललामभूता चरकसंहिता पठनपाठनयोर्मन्दीभावात् चिरं विलोपमुपगतेवासीत्, सा खल्वनेन सर्वतन्त्रस्वतन्त्रधिया महापुरुषेण अध्ययनार्थिनां कल्पतरुं जल्पकल्पतरुटीकां प्रणीय पठनं पाठनं च प्रवर्त्य पुनरुज्जीवितेव । सांप्रतम् आयुर्वेदविद्यार्थिनः तामेव जल्पकल्पतरुटीकाम् आलम्ब्य निसर्गदुर्बोधपिच्छिलविषमायाम् अपि चरकसंहितायां लब्धप्रसरा भवन्ति । अस्थि-संख्याने भिषजां चरकसुश्रुतादीनां तदितरेषां याज्ञवल्क्यादीनां च परस्परविप्रतिपत्ति-वित् अस्थिविद्याविपश्चित् डाक्टरहरणलिमहोदयः (Dr. A. F. R. Hoernle) चरकसंहितायाः शारीरस्थानस्य जल्पकल्पतरुटीकायाः अस्थिसंख्यानं दृष्ट्वा—

"We have seen that the traditional Non-medical Version entirely neglects to count the two arms and four wrist-bones. From the fact of Gangadhar counting the four wrist-bones, it is evident that he noticed the defect of the traditional recension." ( Studies in the Medicine of Ancient India, Part. 1, P. 50 ).

"अस्माभिर्दृष्टं यत् गतानुगतिका अभिषजः उभयोर्बाह्वोः चतुर्णां मणिबन्धास्थ्नां च परिसंख्याने सर्वथैव प्रमत्ताः । तेषां गतानुगतिकानां प्रतिसंस्कारे तदूनत्वं गङ्गाधरो यदुपलब्धवान् तद् गङ्गाधरस्य चतुर्णां मणिबन्धास्थ्नां परिसंख्यानमेव स्फुटयति"—इत्येनं प्रशशंस ।

अथ यद्यपि जल्पकल्पतरुटीकाधृतचरकसंहितायाः पाठेषु क्वचन क्वचन असङ्गतयः उपलभ्यन्ते, तथापि तत्र आदर्शपुस्तकानामप्राचुर्यमेव कारणं मन्ये । तदानीं गमनागमन-सौकर्याभावात् लोकप्रेषणैर्नानादिग्भ्यः नानादेशेभ्यश्च लिखितानां प्राचीनपुस्तकानां समाहरणम् असाध्यसम्भवमेवासीत् ।

प्रतिदिशम् उच्चैरुद्गीयमानैः काशकुसुमसमानैर्विविधविद्याविज्ञानजनितैर्यशोभि-र्महनीयः श्रीमदाचार्यगङ्गाधरः, न केवलं चरकसंहितायाः टीकां, मनुस्मृतेः तथा भगवद्गी-ताया अपि टीकां वैशेषिकदर्शनस्य च भाष्यं व्यरचयत् । व्याकरणादीन्यधिकृत्यापि विविधान् निबन्धान् आततान । स च षड्दर्शनटीकाकृत्, उपनिषदां व्याख्याकृच्चाप्या-सीत् । बहवोऽध्ययनार्थिनः नानादिग्देशादागत्य तस्माद् विविधा विद्याः अधिजग्मुः ।

महामहोपाध्यायपदभाजो मत्तातपादाः, तथा कविरत्नोपनामा श्रीमदीश्वरचन्द्रसेनोऽपि, तस्यान्तेसदः । चिरादस्तंगतस्यापि तस्य महापुरुषस्य नामसंकीर्तनमपि सर्वदैव अस्माकं श्रेयसे ।

## आयुर्वेदस्य अनादित्वम् ।

६—माननीयाः समासदः—इयं खल्वायुर्वेदविदां कोविदभूयिष्ठा परिषत् । तदत्र आयुर्वेदविषयकमपि किञ्चित् वाच्यं मन्ये । आयुर्वेदस्तावदपौरुषेयः अनादित्वान्नित्यः । न हि नाभूत् कदाचित् आयुषः सन्तानः । शाश्वतश्चायुषो वेदिता । स चायुर्वेदः शाश्वतः निःश्वसितमिव हिरण्यगर्भेण अप्रयत्नेन लीलान्यायेन अभिव्यञ्जितः । श्रूयते हि निःश्वसितवद्वेदस्य अभिव्यक्तिः । तथा च

अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः । इत्यादि ।

न च तस्य कर्ता कश्चित् अस्ति । स्मर्ता च हिरण्यगर्भः स्मर्यते । तथा च

न कश्चिद्वेदकर्ताऽस्ति वेदस्मर्ता चतुर्मुखः ॥ इति ।

हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥

इत्याह महर्षिश्चरकः । सुश्रुतसंहितायाम्—

"अनुत्पाद्यैव प्रजाः श्लोकशतसहस्रम् अध्यायसहस्रं च कृतवान् स्वयम्भूः" ।

इत्यत्र यत् 'कृतवान्' इत्युक्तं तदवबोधमुपदेशं च द्वयमधिकृत्यैव । अर्थेदशमहामूलीयेऽप्येवमेव उक्तं महर्षिणा चरकेण ।

न हि आयुर्वेदस्य अभूतोत्पत्तिरुपलभ्यते । अन्यत्र अवबोधोपदेशाभ्याम् ॥ एतच्च द्वयम् अधिकृत्य उत्पत्तिमुपदिशन्त्येके । इति

## आयुर्वेदस्य उपवेदत्वम् ।

७—केचित्—

युवं च्यवनमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ॥

( ऋग्वेद, १।११७।१३ )

हे अश्विनौ युवां वृद्धं च्यवनमुनिं चिकित्सया पुनर्युवानं कृतवन्तौ ।

सद्यो जंघामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥

( ऋग्वेद, १।११६।१५ )

हे अश्विनौ युवां छिन्नजंघायै विश्पलायै गमनार्थं लौहमयीं जंघां कृतवन्तौ ।

युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद्वयः ॥ ( ऋग्वेद, १०।३९।८ ) ।

युवां जराग्रस्तस्य कलेः पुनर्यौवनमकुरुतम् ।

त्रिधाह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ।

(ऋग्वेद, १।११७।२४) ।

हे शोभनदानावश्विनौ युवां त्रिधा विच्छिन्नं श्यावाख्यम् ऋषिं पुनर्जीवयामासथुः ।

अधेनुं दस्रा स्तर्यं विषक्ताम् अपिन्वतं शयवे अश्विना गाम्।

(ऋग्वेद, १।११७।२०)।

युवां शयवे ऋषये कृशावयवाम् अतः निवृत्तप्रसवां धेनुं पयसा अपूरयतम्।

इत्याद्याः ऋचः आकलयन्तः आयुर्वेदं ऋग्वेदस्य उपवेदं मन्यन्ते। चरणव्यूहे महर्षिणा श्रीकृष्णद्वैपायनेनापि "ऋग्वेदस्यायुर्वेद उपवेदः" इत्युक्तम्।

अस्माकमाद्यगुरवः महीमहनीयानुशासनाः प्रज्ञैकलोचनाश्चरकसुश्रुतादयः पुनः आयुर्वेदमथर्ववेदस्य उपाङ्गमाहुः तथा, च सुश्रुते—

इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्य। इति।

चरके च—

चतुर्णां ऋक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदेऽस्योक्तिः। वेदो हि अथर्वा दानस्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह। इति।

(चरक, श्लोकस्थान, ३० अध्याय)।

वृद्धवाग्भटेऽपि—

तान् दृष्ट्वैव सहस्राक्षो निजगाद यथागमम्।
आयुषः पालकं वेदमुपवेदमथर्वणः॥ इति।

(अष्टाङ्गसंग्रह, सूत्रस्थान, १ अध्याय)।

भावप्रकाशेऽपि—

विधाताऽथर्वसर्वस्वमायुर्वेदं प्रकाशयन्।
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्॥ इति।

## आयुर्वेदस्य लक्षणं निरुक्तिश्च।

८—स च आयुर्वेदः सुखं दुःखं हितम् अहितं चेति चतुर्विधम् आयुः, तस्य स्वलक्षणं, प्रमाणाप्रमाणे च वेदयति। आयुष्याणि अनायुष्याणि च द्रव्यगुणकर्माण्यपि वेदयति। अतः स स्वस्थातुरपरायणं रोगशमनार्थिभिरातुरैः स्वास्थ्यरक्षणार्थिभिः स्वस्थैश्च उपसेवनीयः। अतः खल्वायुर्वेदस्य प्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षणं स्वस्थानां स्वास्थ्यरक्षणं च। तदर्थं हि लोके आयुर्वेदस्य प्रवृत्तिः। स चायुर्वेदः ऐहिकामुष्मिकोभयविधहितोपदेशात् सर्वेषु वेदेषु उत्तमः। उक्तं च महर्षिणा चरकेण—

तस्यायुषः पुण्यतमो वेदो वेदविदां मतः।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितम्॥ इति।

सोऽयमायुर्वेदः प्रत्यक्षफलः। तत्प्रामाण्येनैव अन्ये च सामादयो वेदाः प्रमाणपदवीमारोहन्ति। महर्षिणा अक्षपादेन आन्वीक्षिक्याम् अन्येषां वेदानां प्रामाण्यम् आक्षिप्य पुण्यतमस्य अस्य आयुर्वेदस्य प्रामाण्यबलेनैव पुनरुपपादितम्। तथा च सूत्रं—

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम् आप्तप्रामाण्यात्॥ इति।

(न्यायदर्शन, २।१।६७)।

अस्य वात्स्यायनकृतं भाष्यं च—"किं पुनरायुर्वेदस्य प्रामाण्यम् ? यदायुर्वेदेनोपदिश्यते, इदं कृत्वा इष्टमधिगच्छति, इदं वर्जयित्वा अनिष्टं जहाति, तस्य अनुष्ठीयमानस्य तथाभावः सत्यार्थता अविपर्ययः.....................दृष्टार्थेन आप्तोपदेशेन आयुर्वेदेन अदृष्टार्थो वेदभागः अनुमातव्यः प्रमाणम्"—इति।

## आयुर्वेदस्यावतरणम्।

९—अस्य पुण्यतमस्य आयुर्वेदस्य आविर्भावः उपदेशपारम्पर्यम् इह भूलोके अवतरणं च एवं श्रूयते—भगवान् परमकारुणिकः स्वयम्भूः प्रजासृष्टेः प्रागेव स्रक्ष्यमाणप्रजानां व्याधिविकलतामाशङ्क्य तदुपशमनोपायम् आयुराम्नायम् आदौ सस्मार। ब्रह्मणः प्रजापतिर्जग्राह। प्रजापतेरश्विनौ। अश्विभ्यामिन्द्रः। एवंयावदायुर्वेदस्य उपदेशपारम्पर्ये सर्वेषां सूत्रकृतामविसंवादः। इतः परं भूलोकावतरणे ते पुनर्विभिन्नमतयः उपलभ्यते।

चरकसंहितायाम् आयुर्वेदस्य भूलोके अवतरणम् इत्थम् उपवर्णितम् तथा च—पुरा भूलोके स्वाध्यायोपवासतपोब्रह्मचर्यादीनाम् अन्तरायभूतेषु धर्मार्थकाममोक्षाख्यानां चतुर्णां पुरुषप्रयोजनानां प्रधानसाधनस्य आयुषो व्याघातकरेषु व्याधिषु प्रादुःपत्सु यमनियमसम्पन्नाः लोकशरण्याः तपस्तेजसा हूयमाना हुताशना इव, ब्रह्मज्ञाननिधयः अङ्गिरोभरद्वाजात्रेयप्रभृतयो महर्षयः तेषां व्याधीनाम् उपशमनेन आत्मनो भूतानां च जीवितं दीर्घं चिकीर्षन्तः व्याधिशमनोपायम् अवधारयितुं गौरीगुरोर्हिमवतः शुभे पार्श्वे समेत्य समाहितेन चेतसा व्याधिशमनोपायम् आयुराम्नायं तत्प्रवक्तारं च भगवन्तं मघवन्तम् अवबुध्य आयुर्वेदाध्ययनार्थं सुमेधसं भरद्वाजं सुरलोके इन्द्रसकाशे प्रेषयामासुः। भरद्वाजः शक्रान् हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् आयुर्वर्धनम् आयुर्निगममधिगत्य भूलोके प्रत्यावृत्य अन्येभ्योऽपि ददौ। अथ तेषु भूतानुकम्पिहृदयः पुनर्वसुरात्रेयः पुण्यतमस्य तस्य आयुर्वेदस्य भुवि भूम्ना प्रवृत्तये—अग्निवेशः भेड़ः जतूकर्णः पराशरः हारीतः क्षारपाणिश्चेति—षड्न्तेवासिनः पुनरन्वशात्। तेषु अग्निवेशस्य बुद्धेर्विशेष आसीत्। अतः स प्रथमं तन्त्रस्य कर्ता बभूव। ततो भेड़ादयोऽपि स्वस्वनाम्ना पृथक् पृथक् तन्त्राणि व्यरचयन्।

भावप्रकाशे तु इन्द्रादात्रेयस्य आयुर्वेदाध्ययनमुक्तम्। यदुक्तम्—

"आयुर्वेदं पठिष्यामि नैरुज्याय शरीरिणाम्।
इति निश्चित्य गतवानात्रेयस्त्रिदशालयम्॥
मुनीन्द्र इन्द्रतः साङ्गमायुर्वेदमधीत्य सः।
अभिनन्द्य तमाशीर्भिराजगाम पुनर्महीम्॥
ततोऽग्निवेशं भेड़ं च जूतकर्णं पराशरम्।
क्षारपाणिं च हारीतमायुर्वेदमपाठयत्॥" इति।

सुश्रुते च धन्वन्तरिरिन्द्रादयुर्वेदमधीत्य भूलोकमागत्य औपधेनवादीन् अपाठयत् इत्युपवर्णितम् । तथा चोक्तम्—

ब्रह्मा प्रोवाच । ततः प्रजापतिरधिजगे । तस्मादश्विनौ । अश्विभ्यामिन्द्रः । इन्द्रादहम् । मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः । भवति चात्र—

अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम् ।
शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥

( सुश्रुत, सूत्रस्थान, १ अध्याय । )

तथा—

अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्यगोपुररक्षितसुश्रुतप्रभृतय ऊचुः । भगवन् ! शारीरमानसागन्तुस्वाभाविकैर्व्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद्विचेष्टमानान् विक्रोशतश्च मानवानभिसमीक्ष्य मनसि नः पीड़ा भवति । तेषां सुखैषिणां रोगोपशमनार्थमात्मनः प्राणयात्रार्थं च प्रजाहितहेतोरायुर्वेदं श्रोतुमिच्छाम इहोपदिश्यमानम् । अत्रायत्तमैहिकामुष्मिकं च श्रेयः । तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेनेति । तानुवाच भगवान् । स्वागतं वः । सर्वं एवामीमांस्या अध्याप्याश्च भवन्तो वत्साः । इति च । ( सुश्रुत, सूत्रस्थान, १ अध्याय ) ।

## आयुर्वेदस्य लक्षणम् ।

१०—आयुर्वेदस्य लक्षणं तत्पदव्युत्पादनं च चरके—

हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ इति ।

( चरक, श्लोकस्थान, १ अध्याय ) ।

तत्र आयुर्वेदयतीति आयुर्वेदः । कथमिति चेत् ? उच्यते—स्वलक्षणतः, सुखासुखतः, हिताहिततः, प्रमाणाप्रमाणतश्च । यतश्च आयुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि वेदयति अतोऽपि आयुर्वेदः । इति च । ( चरक, श्लोकस्थान, ३० अध्याय ) ।

सुश्रुतस्तु—

आयुरस्मिन् विद्यते अनेन वा आयुर्विन्दतीति आयुर्वेदः । इत्याह ।

( सुश्रुत सूत्रस्थान, १ अध्याय ) ।

भावप्रकाशे च—

आयुर्हिताहितं व्याधिर्निदानं शमनं तथा ।
विद्यते यत्र विद्वद्भिरायुर्वेदः स उच्यते ॥
अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च ।
तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः ॥

स्वयम्भूर्नराणामल्पायुष्ट्वमल्पमेधस्त्वं चावलोक्य तमिममायुर्वेदमष्टधा विभक्तवान् । यथा,

शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायन तन्त्रं वाजीकरणतन्त्रमिति । इति । ( सुश्रुत, सूत्रस्थान, १ अध्याय ) ।

चरकसंहितायां च—

कायचिकित्सा शालाक्यं शल्यापहर्तृकं विषगरवैरोधिकप्रशमनं भूतविद्या कौमारभृत्यं रसायनं वाजीकरणम्। इति। ( चरक, श्लोकस्थान, ३० अध्याय )।

## चरकप्रादुर्भावः।

११—सभ्याः—यदिदमस्माकं तन्त्रं चरकसंहितेति प्रसिद्धं तच्चरकेण प्रतिसंस्कृतं, न तु कृतम्। तस्य कर्ता पुनः पुनर्वसोरात्रेयस्यान्तेवासी अग्निवेशः। एतच्च प्रत्यध्यायं स्फुटमुक्तम्। तथा च—

"अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते"—इति।

प्रतिसंस्कारो हि संक्षिप्तानां विस्तरः, अतिविस्तृतानां च संक्षेपः। तदुक्तं—

विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम्।
संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम्॥ इति।

( चरक, सिद्धिस्थान, १२ अध्याय )।

चरकेण प्रतिसंस्कृत्य नवीकरणात् तदेवाग्निवेशकृतं तन्त्रं प्रतिसंस्कारात् परं चरकसंहितेति प्रसिद्धिमागतम्। श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्ध्याख्यानि अष्टौ स्थानानि चरकसंहितायाम्। भगवतः फणिपतेरवतारत्वेन सुविश्रुतो बहुश्रुतो महर्षिश्चरकः सर्वभूतोपचिकीर्षया अग्निवेशकृततन्त्रस्य प्रतिसंस्करणकर्मणि प्रवर्तमानोऽपि नैव प्रारिप्सितपरिसमाप्तिमकरोत्। स च श्लोकनिदानविमानशारीरेन्द्रियस्थानानि चिकित्सितस्थानस्य त्रयोदशाध्यायांश्च प्रतिसंस्कृत्य, हा हन्त, अन्तर्दधे। ततः पञ्चनदपुरे जातः दृढबलनामा कश्चिन्मनस्वी चिकित्सितस्थानस्य शेषान् सप्तदशाध्यायान् कल्पसिद्धिस्थाने च प्रतिसंस्कृत्य चरकप्रारिप्सितं समाप्तिमनयत्। उक्तं च चरकसंहितायाम्—

अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना।
संस्कृतं तत्तु संसृष्टं विभागेनोपलभ्यते॥
तच्छङ्करं भूतपतिं संप्रसाद्य समापयत्।
अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे॥
कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषाच्च वलोच्चयम्।
सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत्॥ इति।

( चरक सिद्धिस्थान, १२ अध्याय )।

तदेवमुभाभ्यां प्रतिसंस्कृतं तदग्निवेशकृतं तन्त्रं चरकसंहितेति प्रसिद्धम्।

चरकस्य फणिपतेरवतारत्वं भावमिश्रेण दर्शितं—

यदा मत्स्यावतारे तु हरिणा वेद उद्धृतः।
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान्॥
अथर्वान्तर्गतं सम्यगायुर्वेदं च लब्धवान्।
एकदा स महीवृत्तं द्रष्टुं चर इवागतः॥

तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीड़ितान् ।
स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥
तान् दृष्ट्वाऽतिदयायुक्तस्तेषां दुःखेन दुःखितः ।
अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥
संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह ।
प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ॥
यतश्चर इवायातो न ज्ञातः केनचिद्यतः ।
तस्माच्चरकनाम्नाऽसौ विख्यातः क्षितिमण्डले ॥
स चापि चरकाचार्यो वेदाचार्यो यथा दिवि ।
सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ॥
आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् ।
मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ॥
तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ।
चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥ इति ।

( भावप्रकाश, १ खण्ड ) ।

मत्स्यावतारे हरौ प्रलयसलिलमग्नान् वेदान् उद्धरति फणिपतिरथर्ववेदोपाङ्गभूतमायुर्वेदम् अधिगतवान् । अथैकदा स चर इव प्रच्छन्नविग्रहो भुवि विचरन् तत्र लोकान् विविधव्याधिपरिपीड़ितान् आलोक्य जातकारुण्यः आयुर्वेदानुशासनेन व्याधितानुजिघृक्षुः वेदवेदाङ्गवेदिनः कस्यचिन्मुनेर्गृहे चरकनाम्ना जातः । ततः आत्रेयस्य अन्तेवासिनामग्निवेशादीनां तन्त्राणि संस्कृत्य तेभ्यः सारमाहृत्य चरकाख्यं ग्रन्थं व्यरचयत् ।

"संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह ।
प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ॥"

इत्यत्र विशुद्धस्येत्येतदाख्यापदं विवेच्य श्रीमता गोण्डालाधिपतिना निजनिर्मिते ग्रन्थे ( History of the Aryan Medical Science ) चरको विशुद्धाख्यस्य मुनेः पुत्र इत्युक्तम् । तच्चिन्त्यम् । तत्र विशुद्धपदं विशेषणतयापि सुष्ठु अन्वेतुं शक्यते ।

## धन्वन्तरिप्रादुर्भावः ।

१२—इदानीं धन्वन्तरेः प्रादुर्भावो वर्ण्यते । भगवता मघवता भूलोके लोकान् व्याधिविकलान् विलोक्य करुणावता सता तत्प्रतिकारार्थं भुवि सुरश्रेष्ठो धन्वन्तरिः साङ्गमायुर्वेदमध्याप्य प्रेषितः । धन्वन्तरिर्भुवमागत्य काश्यां कस्यचित् क्षत्रियस्य गृहे लब्धजन्मा तत्र दिवोदास इत्याख्यया आहूयमानः महता तपसा ब्रह्माणं प्रसाद्य काशीराज्ये आधिपत्यमलभत । तथा च भावप्रकाशे—

अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा ।
आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ॥

नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ ।
बाल्य एव विरक्तोऽभूच्चचार सुमहत्तपः ॥
यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम् ।
ततो धन्वन्तरिर्लोके काशिराजोऽभिधीयते ॥ इति ।

## सुश्रुतस्य प्रादुर्भावः तत्कृतं तन्त्रं च ।

१३—विश्वामित्रात्मजः सुश्रुतः तस्माद्धन्वन्तरेः साङ्गमायुर्वेदं विधिवद् अधीत्य तन्त्रमेकम् आततान । तत्तन्त्रमिह सुश्रुतसंहितेति विश्रुतिमागतम् ।

"अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते । तस्मिन् क्रिया । सोऽधिष्ठानम् । तद्दुःखसंयोगा व्याधय इत्युच्यन्ते । चेतनाधिष्ठानभूतमिदं शरीरं पञ्चमहाभूतविकारसमुदायात्मकम् ।" इति । ( सुश्रुत, सूत्रस्थान, १ अध्याय ) ।

"अत्र सप्त सिराशतानि । पञ्च पेशीशतानि । नव स्नायुशतानि । आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः । स्त्रीणां गर्भाशयोऽष्टमः ।" इति । ( सुश्रुत, शारीरस्थान, ५ अध्याय ) ।

यकृत्प्लीहानौ शोणितजौ । शोणितफेनप्रभवः फुप्फुसः । शोणितकिट्टप्रभव उण्डुकः । रक्तमांसप्रसादाद्वृक्कौ । मांसासृक्कफमेदःप्रसादाद् वृषणौ । शोणितकफप्रसादजं हृदयम्, यदाश्रया हि धमन्यः प्राणवहाः । तस्याधो वामतः प्लीहा फुप्फुसश्च । दक्षिणतो यकृत् क्लोम च । परिपक्वस्य भुक्तद्रव्यस्य सारो रसः ।

सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः ॥ इति । ( भावप्रकाश ) ।
रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ।
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥ इति ।
( सुश्रुत, सूत्रस्थान, १४ अध्याय ) ।

अस्थीनि शरीरस्याभ्यन्तरसाराः । तैरेव शरीरं ध्रियते । तदुक्तं—

अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ।
अस्थीनि न विनश्यन्ति सारास्ते वपुषः स्मृताः ॥ इति ।
( सुश्रुत, शारीरस्थान, ५ अध्याय ) ।

१४—अस्थीनि सषष्टीनि त्रीणि शतानि इति आयुर्वेदविदो अस्थिसंख्यानम् मन्यन्ते । तथा च चरके—

त्रीणि षष्ट्यधिकानि शतान्यस्थ्नां सह दन्तोलूखलनखैः । इति ।
( चरक, शारीरस्थान, ७ अध्याय ) ।
अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह । इति ।
( वाग्भट, शारीरस्थान, ३ अध्याय ) ।

त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते । इति ।

( सुश्रुत, शारीरस्थान, ५ अध्याय )

याज्ञवल्क्यस्मृतावपि—

तथाऽस्थ्नां च सह षष्ट्या शतत्रयम् । इति । ( याज्ञवल्क्य, ३।८४ ) ।

शतपथब्राह्मणे च श्रूयते—

त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीनि । इति ।

( शतपथब्राह्मण, १२।३।२।३ ) ।

शल्यतन्त्रे पुनरस्थ्नां शतत्रयमुक्तम् । सुश्रुतेन तन्मतमनुसृतम् । तथा च "त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते । शल्यतन्त्रे त्रीण्येव शतानि । तेषां सविंशमस्थिशतं शाखासु । सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोदरोरःसु । ग्रीवां प्रत्यूर्ध्वं त्रिषष्टिः । एवमस्थ्नां त्रीणि शतानि पूर्यन्ते । इति । ( सुश्रुत, शारीरस्थान, ५ अध्याय ) ।

भावमिश्रेण च सुश्रुतस्य मार्गोऽनुसृतः । तथा च—

शल्यतन्त्रेऽस्थिखण्डानां शतत्रयमुदाहृतम् । इति ।

ऋषयो हि सर्वज्ञाः । तेषामार्षं ज्ञानमव्याहतम् । ते च करतलगतमामलकमिव निखिलभुवनं पश्यन्ति । अतीन्द्रियेऽपि दृष्टिस्तेषाम् अकुण्ठिता । तेषां कथम् एवमिन्द्रियमाहात्म्यानामस्थ्नां संख्याने विप्रतिवादः—इति चेत् ? उच्यते—मुनयो हि स्वेषु तन्त्रेषु स्वतन्त्रतया प्रायशो विभिन्नमतयो भवन्ति । एतच्च सुष्ठु उक्तं—

"नासौ मुनिर्यस्य मतं न भिन्नम् ।" इति ।

एकैरेकस्यास्थित्वमङ्गीकृतम् । पुनरन्यैस्तन्नाङ्गीकृतम् । यथा चरके दन्तोलूखलौ नखाश्च अस्थिमध्ये परिगणिताः । तथा च—

त्रीणि षष्ट्यधिकानि शतान्यस्थ्नां सह दन्तोलूखलनखैः । इति ।

शल्यतन्त्रे तेषामस्थित्वं नैवोररीकृतम् । भुवनविश्रुतेन महर्षिणा सुश्रुतेन शल्यतन्त्रपक्षपातिनाऽपि मतद्वयमुदाहृतम् । तथा च—

त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते । शल्यतन्त्रे त्रीण्येव शतानीति ।

( सुश्रुत, शारीरस्थान, ५ अध्याय ) ।

तन्मन्यामहे अस्थिसंख्याने मुनीनाम् एवं विप्रतिपत्तिः संज्ञायाम् । न तु वस्तुनि ।

## आयुर्वेदाध्ययनस्य प्रयोजनम् ।

१५—आयुर्वेदविदां वरेण्याः—पुण्यः खल्वयम् अस्माकम् आयुर्वेदः, व्याध्युपसृष्टानां व्याधिपरिमोक्षणाय, व्याधीनां निदानं लक्षणम् उपशमनं भेषजं च ज्ञापयति । स्वस्थानां च स्वास्थ्यरक्षणाय आयुष्यानायुष्याणि हेयोपादेयानि द्रव्यगुणकर्माणि च उपदिशति । अतो व्याधितैरिव स्वस्थैरपि स्वास्थ्यरक्षणाय आयुर्वेदः सेवनीयः ।

आयुर्वेदोपसेवाय च लोकः इदम् आयुष्यम्, इदम् अनायुष्यम्, इदं पथ्यम्, इदम् अपथ्यम्, इदं हितम्, इदम् अहितम्—इति ज्ञात्वा, हेयं हित्वा, उपादेयं च गृहीत्वा, अनिष्टं जहाति, इष्टं चाधिगच्छति । तथा च चरके—

तेनर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।
सामान्यं च विशेषं च गुणान् द्रव्याणि कर्म च ॥
समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।
लेभिरे परमं शर्म जीवितं चाप्यनश्वरम् ॥ इति ।

(चरक, श्लोकस्थान, १ अध्याय)।

अङ्गिरःप्रभृतयो महर्षयः पुण्यतमम् आयुर्वेदमधीत्य उपादेयतया आयुष्याणि, तद्विपरीततया अनायुष्याणि द्रव्यगुणकर्माणि, तेषां वृद्धिकारणं सामान्यं, ह्रासकारणं विशेषं, द्रव्यगुणयोरपृथग्भावरूपसम्बन्धं समवायं च, ज्ञात्वा आयुर्वेदविधिमाश्रित्य आरोग्यरूपं सुखम् उपभुञ्जाना दीर्घं जीवनं लेभिरे। पुरुषाः आयुर्वेदविहितनियमान् प्रतिपालयन्त एव नीरोगाः दीर्घजीविनो जायन्ते। यदिदानीम् अखिला लोकाः प्रायशो व्याधिविकलाः स्वल्पायुषश्च दृश्यन्ते तत्रायुर्वेदविधीनाम् अतिक्रमणमेव कारणम्। इह खलु स्वास्थ्यं नाम सर्वैर्निरन्तरं मार्गणीयं किमप्यनर्घं धनम्। सत्यपि धनवत्त्वे, आभिजात्ये, किमधिकं सागरमेखलायाः वसुधाया आधिपत्येपि, नैव अस्वस्थः क्षणमपि सुखम् अनुभवति। व्याधिपरीतः पुरुषः इह अमुत्र च श्रेयस्करं किमपि साधयितुं न खल्वलम्। अतः 'शरीरमाद्यं खलु धर्मसाधनम्' इत्युक्तम्। शरीरं न केवलं धर्मस्य साधनम्, अन्येषां त्र्याणाम् अपि पुरुषप्रयोजनानां साधनम्। सत्येव शरीरस्वास्थ्ये लोकश्चतुर्वर्गसाधने प्रभवति। एवम् अत्यर्थं प्रार्थ्यमानं तच्च स्वास्थ्यरक्षणम् आयुर्वेदाधिगमनं विना न संभवति। अतः सर्वैः सर्वदा सर्वथा आयुर्वेदाधिगमे प्रयत्नो विधेयः।

## दोषत्रयवादः।

१६—व्याधीनामाश्रयः शरीरं सत्त्वसंज्ञं मनश्च। व्याधीनां कारणं त्रिविधम्—असात्म्येन्द्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति। तत् त्रिविधं कारणं शरीरचरं वायुपित्तं कफं च दूषयित्वा विकारान् उत्पादयति। तत्र वातः शीतो लघुः सूक्ष्मश्चलो विशदः खरश्च। पित्तं सस्नेहमुष्णं तीक्ष्णं द्रवमम्लं सरं कटुकं च। कफो गुरुः शीतो मृदुः स्निग्धो मधुरः स्थिरः पिच्छिलश्च।

ते च वातपित्तकफाः यदा समाः प्रकृतिमापन्नास्तदा देहं धारयन्तीति, अतो धातवः इत्युच्यन्ते यदा विषमाः विकृतिमापन्नाः तदा देहं दूषयन्तीति, अतो दोषाः इत्युच्यन्ते। मलिनीकरणान्मलाः इत्यपि। तथा च शार्ङ्गधरेणोक्तं—

शरीरदूषणाद्दोषा धातवो देहधारणात्।
वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः॥ इति।

(शार्ङ्गधर, पूर्वखण्ड, ५।२०)।

चरकसंहितायां च—

सर्वशरीरचरास्तु खलु वातपित्तश्लेष्माणः सर्वस्मिन् शरीरे कुपिताकुपिताः शुभाशुभानि

कुर्वन्ति। प्रकृतिभूताः शुभान्युपचयबलवर्णप्रसादादीनि। अशुभानि पुनर्विकृतिमापन्ना विकार-संज्ञकानि। इति। (चरक, श्लोकस्थान, २० अध्याय)।

रसप्रदोषजा रोगा वक्ष्यन्ते रक्तदोषजाः।

इत्यादिरसादिदोषजा अपि रोगाः श्रूयन्ते यद्यपि, तथापि ते वातपित्तकफान्नाति-गच्छन्ति। उक्तं च चरके—

यथा हि शकुनिः सर्वा दिशः अपि परिपतन् स्वां छायां नातिवर्तते, तथा स्वधातुवैषम्य-निमित्ताः सर्वे विकारा वातपित्तकफान्नातिवर्तन्ते। इति। (चरक, श्लोकस्थान १९ अध्याय)।

एषां शरीरचराणां वातपित्तश्लेष्मणां स्थानानि, स्थानभेदात् नामानि कर्माणि च भिद्यन्ते। तथा चोक्तं भावप्रकाशे—

उदानस्तदनु प्राणः समानोऽपान एव च।
व्यानश्चेतानि नामानि वायोः स्थानप्रभेदतः॥
पाचकं रञ्जकं चापि साधकालोचके तथा।
भ्राजकं चेति पित्तस्य नामानि स्थानभेदतः॥
कफस्यैतानि नामानि क्लेदनश्चावलम्बनः।
रसनः स्नेहनश्चापि श्लेषणः स्थानभेदतः॥

तेषां स्थानानि यथा—

कण्ठे हृदि तथाधस्तात् कोष्ठवह्नेर्मलाशये।
सकलेऽपि शरीरेऽसौ क्रमेण पवनो वसेत्॥
अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये।
त्वचि सर्वशरीरेषु पित्तं निवसति क्रमात्॥
आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु।
स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात्॥

तेषां कर्माण्यपि वक्ष्यन्ते। तद्यथा—

उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः।
तेन भाषितगीतादिप्रवृत्तिः, कुपितस्तु सः॥
ऊर्ध्वजत्रुगतान् रोगान् विदधाति विशेषतः।
यो वायुः प्राणनामासौ मुखं गच्छति देहधृक्॥
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते।
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान्॥
आमपक्वाशयचरः समानो वह्निसंगतः।
सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि॥
स दुष्टो वह्निमान्द्यातिसारगुल्मान् करोति हि।
पक्वाशयालयोऽपानः काले कर्षति चाप्ययम्॥
समीरणः शकृन्मूत्रशुक्रगर्भार्तवान्यधः।
क्रुद्धस्तु कुरुते रोगान् घोरान् वस्तिगुदाश्रयान्॥

शुक्रदोषप्रमेहांश्च व्यानापानप्रकोपजान् ।
कृत्स्नदेहचरो व्यानो रससंवाहनोद्यतः ॥
स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि ।
गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ॥
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ।
प्रस्पन्दनं चोद्वहनं पूरणं च विरेचनम् ॥
धारणं चेति पञ्चैवाश्चेष्टाः प्रोक्ता नभस्वतः ।
क्रुद्धः स कुरुते रोगान् प्रायशः सर्वदेहगान् ॥
युगपत् कुपिता एते देहं भिन्द्युरसंशयम् ।
पाचकं पचते भुक्तं शेषाग्निबलवर्धनम् ॥
रसमूत्रपुरीषाणि विरेचयति नित्यशः ।
रञ्जकं नाम यत् पित्तं तद्रसं शोणितं नयेत् ॥
यत्तु साधकसंज्ञं तत् कुर्याद्बुद्धिं धृतिं स्मृतिम् ।
यदालोचकसंज्ञं तद्रूपग्रहणकारणम् ॥
भ्राजकं कान्तिकारि स्याल्लेपाभ्यङ्गादिपाचकम् ।
क्लेदनः क्लेदयत्यन्नमात्मशक्त्याऽपराण्यपि ॥
अनुगृह्णाति च श्लेष्मस्थानान्युदककर्मणा ।
रसयुक्तात्मवीर्येण हृदयस्यावलम्बनम् ॥
त्रिकसञ्चारणं चापि विदधात्यवलम्बनः ।
उभावपि ततः सौम्यौ तिष्ठतश्चान्तिके यतः ॥
यतो रसान्विजानीतो रसनारसनौ समौ ।
स्नेहनः स्नेहदानेन समस्तेन्द्रियतर्पणः ॥
श्लेषणः सर्वसन्धीनां संश्लेषं विदधात्यसौ ॥ इति ।

एते च वातपित्तकफाः विकृतिभावमापन्नाः विपरीतगुणैर्विपरीतगुणभूयिष्ठैर्वा द्रव्यैरभ्यस्यमानैरेव प्रशमं यान्ति । विशेषस्य ह्रासहेतुत्वात् । उक्तं च—

ह्रासहेतुर्विशेषश्च । इति । ( चरक, श्लोकस्थान १ अध्याय ) ।

## चिकित्सायाः सलक्षणम् ।

१७—आर्या भिषग्वर्याः,—चिकित्साम् अधिकृत्य किञ्चिद्वक्ष्ये । धातुसाम्यक्रिया हि चिकित्सा । सा खलु आयुर्वेदस्य प्रयोजनम् । उक्तं च चरके—

धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् । इति ।
( चरक, श्लोकस्थान, १ अध्याय ) ।

तत्र चिकित्सायां भिषक् भेषजद्रव्यं परिचारको रोगी च—एतच्चतुष्टयमपेक्ष्यते । उक्तं च—

भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।
गुणवत् कारणं ज्ञेयं विकारव्युपशान्तये ॥ इति ।

( चरक, श्लोकस्थान, ९ अध्याय ) ।

## तत्र भिषजः प्राधान्यम् ।

१८—तत्र भिषगेव प्रधानं कारणम् । सत्यप्यातुरे सोपद्रवम् आमूलमात्मनो रोग-विवरणं विवृण्वति सत्यप्युपसन्ने आप्ते उपचारक्षमे भर्त्तरि भक्तिमति परिचरजने, उपनीतेऽपि वीर्यवति विविधकल्पनोचिते बहुले भेषजद्रव्ये, पर्यवदातश्रुतो भिषक् असन्निहितश्चेत् तत्तद्रोगप्रतिकारक्षमाणाम् औषधानामनिर्धारणात्, उपचारक्रमस्यानिर्देशात्, पथ्यापथ्यादीनामनिरूपणाच्च न विकारप्रशमो भवति । मृद्दण्डचक्रादिषु सत्स्वपि कुम्भकारमन्तरेण यथा न कुम्भः सम्भवति, तथा सत्स्वपि द्रव्यादिषु त्रिषु, भिषजं विना चिकित्सा न प्रवर्त्तते । तदुक्तं चरकेण—

विज्ञाता शासिता योक्ता प्रधानं भिषगत्र तु ॥
पक्तौ हि कारणं पक्तुर्यथा पात्रेन्धनानलाः ।
विजेतुर्विजये भूमिश्चमूः प्रहरणानि च ॥
आतुराद्यास्तथा सिद्धौ पादाः कारणसंज्ञिताः ।
वैद्यस्यातश्चिकित्सायां प्रधानं कारणं भिषक् ॥
मृद्दण्डचक्रसूत्राद्याः कुम्भकारादृते यथा ।
नावहन्ति गुणं वैद्यादृते पादत्रयं तथा ॥ इति ।

( चरक, श्लोकस्थान, ९ अध्याय ) ।

## भिषजो गुणाः ।

१९—भिषक् विधिवदायुर्वेदमधीत्य लब्धनिर्मलज्ञानः बहुशः परिदृष्टकर्मा भेषजाद्युपकल्पनकुशलः बहिरन्तश्च शौचवांश्च भवेत् । तदुक्तं चरकसंहितायां—

श्रुते पर्यवदातत्वं बहुशो दृष्टकर्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥ इति ।

( चरक, श्लोकस्थान, ९ अध्याय ) ।

न च केवलमधीतशास्त्रः, न वा केवलं दृष्टकर्मा, यस्तु उभयज्ञः स एव राजार्हो भिषक् चिकित्सायाम् आद्रियते । उक्तं च सुश्रुते—

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥
यस्तु कर्मसु निष्णातो धार्ष्ट्याच्छास्त्रबहिष्कृतः ।
स सत्सु पूजां नाप्नोति वधं चार्हति राजतः ॥
उभावेतावनिपुणावसमर्थौ स्वकर्मणि ।
अर्धवेदधरावेतावेकपक्षाविव द्विजौ ॥ इति ।

( सुश्रुत, सूत्रस्थान, ३ अध्याय ) ।

पुनस्तत्रैव—

यस्त्वभयज्ञो मतिमान् स समर्थोऽर्थसाधने।
आहवे कर्म निर्वोढुं द्विचक्रः स्यन्दनो यथा॥ इति।

## भिषजां त्रैविध्यम्।

२०—चरकसंहितायां भिषजां त्रैविध्यमुक्तम्।

तथा च—

भिषक्छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः।
सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजो भुवि॥ इति।

(चरक, श्लोकस्थान, ११ अध्याय)।

तेषां त्रिविधानां भिषजां लक्षणानि तत्रैव यथाक्रमम् उक्तानि।

तथा च—

वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः।
लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः॥
श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः।
वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः॥
प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः।
जीविताभिसरास्ते स्युर्वैद्यत्वं तेष्ववस्थितम्॥ इति।

(चरक, श्लोकस्थान, ११ अध्याय)।

इह केचिदनधीतशास्त्राः केवलं चिकित्सापुस्तकानाम् औषधभाण्डानां च रक्षणेन वैद्यवद्वाग्विस्तरेण अवलोकनचातुर्येण च आत्मानं वैद्यं प्रख्यापयन्तः वैद्यवेशं धृत्वा इतस्ततः सञ्चरन्ति। ते भिषक्छद्मना सञ्चरणात् भिषक्छद्मचरा इत्युच्यन्ते। ते च वैद्यप्रतिरूपकाः, न तु वस्तुतो वैद्याः।

केचिच्च अज्ञाः जातु चिकित्साकर्मणा श्रियं यशः ज्ञानं तत्र सिद्धिं च अनाप्नुवन्तोऽपि मयाऽमुत्र चिकित्सया बहु धनमासादितं श्रीर्यशश्च लब्धम्, अस्ति मे चिकित्सिते भूयोदर्शिता, दुरारोग्यव्याधिष्वपि मया बहुशः, सिद्धिर्लब्धा, इत्येवम् अन्यत्र सिद्धिं व्यपदिश्य आत्मनो वैद्यत्वं साधयन्ति। ते सिद्धसाधिताः ज्ञेया।

ये पुनर्विधिवदधीतशास्त्राः, तत्र पर्यवदाताः, चिकित्साकर्मनिष्णाताः, औषधप्रयोगेण शास्त्रज्ञानेन लोकव्यवहारज्ञानेन चिकित्साकर्मसिद्ध्या च प्रख्याताः, व्याधितानाम् आरोग्यसंज्ञकसुखदाः, ते व्याधितानां जीविताय आयुषे च अभिमुखीभूय सरन्ति इति जीविताभिसरा उच्यते। त एव प्रकृतवैद्यपदवाच्याः चिकित्सायामाद्रियन्ते।

अज्ञाः आतुरैः सर्वथैव हेयाः। उक्तं च—

यस्मात्मा कुतोऽन्येन न चिकित्सा प्रवर्तिता । इति ।

( चरक, श्लोकस्थान, ९ अध्याय ) ।

तथा—

तस्माद्भिषजा युक्तं युक्तिबाह्येन भेषजम् ।
धीमता किञ्चिदादेयं जीवितारोग्यकाङ्क्षिणा ॥ इति ।

( चरक, श्लोकस्थान, १ अध्याय ) ।

भिषक्शास्त्रमनधीत्यापि भिषग्वृत्त्या वर्तमानान् वैद्यप्रतिरूपकान् मूर्खान् उद्दिश्य कमुक्तं भूतानुकम्पिना महर्षिणा चरकेण—

वरमाशीविषविषं क्वथितं ताम्रमेव वा ।
पीतमत्यन्तसन्तप्ता भक्षिता वाप्ययोगुडाः ॥
न तु श्रुतवतां वेशं बिभ्रता शरणागतात् ।
गृहीतमन्नं पानं वा वित्तं वा रोगपीडितात् ॥ इति ।

( चरक, श्लोकस्थान, १ अध्याय ) ।

## गुरुमुखादध्ययनस्यौचित्यम् ।

आयुर्वेदः खल्वतीव दुरवगाहः । स्वधिया कथं कथमपि केवलाक्षरार्थसङ्गत्या नास्य तत्त्वं केनापि विज्ञातुं शक्यते । शक्यते पुनर्गुरुमुखात् । अतो भिषग्बुभूषया धीमद्भिः प्रशान्तैरार्यप्रकृतिकैः अध्ययनार्थिभिः गुरुगृहम् अध्युष्य गुरुमुखादेव आयुर्वेदः श्रोतव्यः, तत्कर्मचर्योऽपि द्रष्टव्यः । गुरुसेवया च विद्यायाः प्रसादः, बुद्धेर्निर्मलीभावः, शास्त्रार्थे दृढ़ता, तत्त्वविज्ञानं च जायते । मन्ये तदर्थमेव अस्माकम् आद्यगुरुभिः असामान्यधीशक्तिसम्पन्नैरपि मान्यैरात्रेयादिभिर्मुनिभिः गुरुकुलवासक्लेश ऊरीकृतः । पुनरेतच्च भिषग्भिः अवश्यमनुध्येयं यत्—

मैत्री कारुण्यमार्तेषु शक्ये प्रीतिरुपेक्षणम् ।
प्रकृतिस्थेषु भूतेषु वैद्यवृत्तिश्चतुर्विधा ॥ इति ।

( चरक, श्लोकस्थान, ९ अध्याय ) ।

अन्यच्च—

तदेव युक्तं भैषज्यं यदारोग्याय कल्पते ।
स एव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत् ॥ इति ।

( चरक, श्लोकस्थान, १ अध्याय ) ।

## आयुर्वेदे शल्यतन्त्रम् ।

२२—अस्मिन्नवसरे एतदपि वाच्यं मन्ये यत् यूरोपीयचिकित्सिते जातपक्षपाताः केचित् इदानीन्तनभिषक्सम्प्रदायस्य शस्त्रोपचारेष्वप्रवृत्तेः अखिलजगतीतलमान्यानां मनीषिणाम् अव्याहतार्षज्ञानदृशाम् ऋषीणां शस्त्रकर्मविज्ञाने संशेरते । ते खलु प्रज्ञाभिमानिनः, तैः कदाप्यस्माकम् आयुराम्नायः न सम्यगालोचितः, न पठितः, न च

दृष्टः, न वापि परिश्रुतः। अस्मच्छास्त्रेषु शस्त्रोपचारो बहुश एवोपदिष्टः तथा च चरक-संहितायां द्विव्रणीयचिकित्सितेऽध्याये—

ऊर्ध्वभागैरधोभागैः शस्त्रैर्बस्तिभिरेव च।
सद्यः शुद्धशरीराणां प्रशमं यान्ति हि व्रणाः।

इत्युपक्रम्य—

पाटनं व्यधनं चैव च्छेदनं लेखनं तथा।
प्रच्छनं सीवनं चैव षड्विधं शस्त्रकर्म तत्।
नाड़ीव्रणाः पक्वशोथास्तथाक्षतगुदोदरम्।
अन्तःशल्याश्च ये देशाः पाट्यास्ते तद्विधाश्च ये॥
दकोदराणि सम्पक्वा गुल्मा ये ये च रक्तजाः।
व्यध्याः शोणितरोगाश्च वीसर्पपिड़कादयः॥
अर्शःप्रभृत्यधीमांसं छेदनेनोपपादयेत्।
उद्वृत्तान् स्थूलपर्यन्तानुत्सन्नान् कठिनान् व्रणान्॥
किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान्॥
वातासृग्ग्रन्थिपिड़काः सकोठा रक्तमण्डलाः।
कुष्ठान्यभिहतं चाङ्गं शोथांश्च प्रच्छयेद् भिषक्॥
सीव्यं कुक्ष्युदरार्थं तु गम्भीरं यद्विपाटितम्।
इति षड्विधमुद्दिष्टं शस्त्रकर्म मनीषिभिः॥ इति।

(चरक, चिकित्सितस्थान, २५ अध्याय)।

सुश्रुते विशिष्यैव शस्त्रकर्म उक्तम्। तथा च—

अस्मिन् शास्त्रे शस्त्रकर्मप्राधान्याच्छस्त्रकर्मैव तावत् प्रथममुपदेक्ष्यामः, तत्सम्भारांश्च। तच्च शस्त्रकर्माष्टविधम्। यद्यथा—छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्यं विस्राव्यं सीव्यमिति। (सुश्रुत, सूत्रस्थान, ८ अध्याय)।

सुस्रुते छेद्यादिकर्मसाधनानि शस्त्राण्यप्युक्तानि। तथा च—

विंशतिः शस्त्राणि। तद्यथा—मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधारसूची-कुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्चककुठारिकाव्रीहिमुखारावेतसपत्रकबड़िशदन्तशंकैषण्यः। इति। (सुश्रुत, सुत्रस्थान, ८ अध्याय)।

येन येन शस्त्रेण यत् यत् कर्म साध्यते तदप्युक्तम्। तथा च—

तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च। वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधाराणि छेदने भेदने च। सूचीकुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे। कुठारिका व्रीहि-मुखारावेतसपत्रकाणि व्यधने, सूची च। बड़िशं दन्तशंकुश्चाहरणे। एषणी एषणे, आनुलोम्ये च। सूच्यः सीवने। इत्यष्टविधे कर्मण्युपयोगः शस्त्राणां व्याख्यातः। इति। (सुश्रुत सूत्रस्थान, ८ अध्याय)।

येषु येषु व्याधिषु यत् यत् शस्त्रकर्मोचितं तदपि सुश्रुते सूत्रस्थाने अष्टविधशस्त्र-कर्मण्ये अध्याये—'छेद्या भगन्दरा ग्रन्थिः' इत्युपक्रम्य सविस्तरमुक्तम्—

वृद्धवाग्भटे च—

शस्त्राणि षड्विंशतिर्भवन्ति । तद्यथा—दन्तलेखनमण्डलाग्रवृद्धिपत्रोत्पलपत्राध्यर्धधारसुद्रिकाकर्तरीसर्पवक्त्रकरपत्रकुशपत्राटीमुखान्तर्मुखशरारिमुखत्रिकूर्चकुठारिकाव्रीहिमुखशलाकावेतसपत्राराकर्णव्यधनसूचीसूचीकूर्चखजैपणीवडिशनखशस्त्राणि । प्रायशश्च तानि षडङ्गुलानि सूक्ष्माग्रवर्तितायोघटितान्युत्पलपत्रनीलानि सुग्रहाणि सुरूपाणि सुधाराणि सुसमाहितमुखाग्राणि अकरालानि प्रत्येकं च प्रायो द्विशाणि स्वप्रमाणार्धचतुर्थभागफलानि । तानि व्याधिदेशवशात् प्रयुञ्जीत । इति । ( वृद्धवाग्भट, सूत्रस्थान, यन्त्रशस्त्रविध्यध्याय )

तेषां कर्माणि च द्वादश । यथा—लेखनं, पाटनं, भेदनं, छेदनं, प्रच्छानं, व्यधनं, सीवनं, कुट्टनं, मथनम्, एषणं, ग्रहणम्, उद्धरणं चेति । येषु येषु व्याधिषु यद् यच्छस्त्रम् उपयुज्यते तदपि तत्र विस्तरेण उपदिष्टम् ।

## आयुर्वेदे मूढगर्भचिकित्सा ।

२३—इदानीं यूरोपीयचिकित्साशास्त्रविदो भिषजो गर्भव्यापदि शस्त्रकर्मणा ख्यातिमर्जयन्तः स्पर्द्धन्ते । तच्चास्माकमाद्यगुरुभिर्महर्षिभिर्नाप्यविदितमासीत् । तथा च सुश्रुते मूढगर्भचिकित्सिते उक्तम्—

नातः कष्टतममस्ति यथा मूढगर्भशल्योद्धरणम् । अत्र हि योनियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म कर्तव्यं स्पर्शेन । उत्कर्षणापकर्षणस्थानापवर्तनोत्कर्तनभेदनच्छेदनपीडनर्जूकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं चाहिंसता । तस्माद् अधिपतिमापृच्छ्य परञ्च यत्नमास्थायोपक्रमेत । इति । ( सुश्रुत, चिकित्सितस्थान, १५ अध्याय ) ।

गर्भिण्याः व्यापदि अपि जीवति गर्भे शस्त्रोपचारोऽप्युक्तः । तथा च—

वस्तमारविपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक् ॥ इति ।

( सुश्रुत, निदानस्थान, ८ अध्याय ) ।

अत्र डल्लणाचार्यः—वस्तमारो मृगवन्मरणम् । एतेन ग्रीवामोटनेन आशुतममक्लिष्टं मरणमुक्तम् । वस्तमारेण विपन्नायाः स्त्रियाः कुक्षिः यदि प्रस्पन्दते । एतेन गर्भस्य जीवितत्वमुक्तम् । भिषक् तत्क्षणात् घटिकाद्वयमध्ये—ततः परं गर्भोऽपि मरिष्यतीति भावः । जन्मकाले नवमदशमादिमासे स्त्रीकुक्षिं पाटयित्वा विदार्य्य तं जीवन्तं शिशुमुद्धरेत् । इति ।

अष्टाङ्गहृदये च—

वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥ इति ।

( वाग्भट, शारीरस्थान, २ अध्याय ) ।

अत्र अरुणदत्तः—व्यापन्नायाः मृतायाः गर्भिण्याः यदि कुक्षिः प्रस्पन्दते । क प्रदेशे ? वस्तिद्वारे तत्समीपे । कदा ? जन्मकाले गर्भप्रसवोन्मुखे काले । तदा कुशलो वैद्यः शीघ्रं कुक्षिप्रस्पन्दनादनन्तरं पाटयित्वा शिशुम् उद्धरेत् । इति ।

मनस्वी श्रीमदुमेशचन्द्रकविराजः स्वरचितवैद्यकशब्दसिन्धुनामकग्रन्थस्य' भूमिकायामुक्तवान् यत्—

"The subjects of मूढ़गर्भ and अश्मरी, which relate to difficult delivery and operation of stone respectively, are treated in so masterly a manner that, Dr. Charles (the then Principal of the Calcutta Medical College), desired to see them. At his repuest, Dr. Durgadas Gupta and myself translated them into English and submitted the said for his perusal. Dr. Charles, highly praised the process of delivery in difficult cases and even confessed that, with all his great experience in Midwifery and Surgery, he nevar had any idea of the like being found in all the medical works that came under his observations." (Vaidyakashabdasindhu, Preface. page 39).

'कालिकाताराजकीयचिकित्साविद्यालयाध्यक्षे डाक्टरचार्लसमहोदये आयुर्वेदानुशिष्टं मूढ़गर्भचिकित्सितविधिम् अश्मरीचिकित्सितविधिं च बुभुत्समाने यूरोपीयचिकित्साशास्त्रविदा भिषजा दुर्गादासगुप्तेन मया च तत्तत्स्थानम् इंलण्डीयभाषायामनूद्य तस्मै दत्तम्। स च मूढ़गर्भचिकित्सितविधिमतितरां प्रशशंस, धात्रीविद्यायां शास्त्रोपचारविद्यायां च बहुशो दृष्टकर्मणापि तेन पठितेषु सर्वेष्वेव चिकित्सानिबन्धेषु नेदृशो विधिरुपलब्ध, इत्यपि व्यक्तम् उक्तवान्' इति।

## आयुर्वेदस्योत्कर्षः।

२४—माननीयाः सभासदः,—सोऽयमायुर्वेदः शाश्वतः पुण्यः स्वर्ग्यो यशस्यश्च।

युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः॥ (ऋग्वेद, १।११७।१३)।

हे अश्विनौ, युवां वृद्धं च्यवनमुनिं चिकित्सया पुनर्युवानं कृतवन्तौ।

सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम्॥ (ऋग्वेद, १।११६।१५)।

हे अश्विनौ, युवां छिन्नजङ्घायै विश्पलायै गमनार्थं लौहमयीं जङ्घां कृतवन्तौ।

आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे॥ (ऋग्वेद, १।११७।१७)।

हे अश्विनौ युवां चक्षुर्हीनम् ऋज्राश्वं चक्षुष्मन्तं कृतवन्तौ।

याभिः शचीभिर्वृषणा परावृजम् प्रान्धं श्रोणं चक्षस एतवे कृथः॥ (ऋग्वेद, १।११२।८)।

हे अश्विनौ, युवाम् अन्धं खञ्जम् परावृजं दृष्टिशक्त्या युक्तं विगतजानुकं च श्रोणम् इतस्ततः परिक्रमणक्षमं कृतवन्तौ।

घोषायै चित् पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम्॥ (ऋग्वेद, १।११७।७)।

हे अश्विनौ, युवां कुष्ठव्याधिग्रस्तां घोषां व्याधिमुक्तां कृतवन्तौ। तस्यै पतिं दत्तवन्तौ च। तां विवाहयोग्यामकुरुतम्, इत्यर्थः।

अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ।
( चरक, चिकित्सितस्थान, १ अध्याय ) ।

ओषधीनां पतिं सोममुपयुज्य विचक्षणः ।
दशवर्षसहस्राणि नवां धारयते तनूम् ॥
( सुश्रुत, चिकित्सितस्थान, २९ अध्याय ) ।

स्वयम्भुवः शिरश्छिन्नं भैरवेण रुषाऽथ तत् ।
अश्विभ्यां संहितं तस्मात् तौ जातौ यज्ञभागिनौ ॥
देवासुररणे देवा दैत्यैर्ये सक्षताः कृताः ।
अक्षतास्ते कृताः सद्यो दस्राभ्यामद्भुतं महत् ॥
वज्रिणोऽभूद्भुजस्तम्भः स दस्राभ्यां चिकित्सितः ।
सोमान्निपतितश्चन्द्रस्ताभ्यामेव सुखीकृतः ॥
विशीर्णा दशनाः पुष्णो नेत्रे नष्टे भगस्य च ।
शशिनो राजयक्ष्माऽभूदश्विभ्यां ते चिकित्सिताः ॥
( भावप्रकाश, १ भाग ) ।

## आयुर्वेदस्याधोगतिः ।

इत्याद्युक्तय एवास्माकमायुर्वेदीयचिकित्सितविधेरुत्कर्षं प्रख्यापयन्ति । मान्यैर्मुनिभिरात्मनो योगबलेन भूयोदर्शनेन धीशक्तिसम्पदा च चिकित्सिततत्त्वमवगत्य सर्वभूतहितैषया उपनिबद्धान्यायुर्वर्धनतन्त्राणि न केवलं भारतवर्षे अन्येष्वपि वर्षेषु भारतीयानामार्याणां धीसम्पदुत्कर्षं तेषां विद्याविभवञ्च उच्चैः उद्घोषयन्तितराम् । अहो बत येषां पूर्वे मनीषिणः आत्मनो बुद्धिसम्पदुत्कर्षेण लोकातिशायिनः आसन् ते खल्वद्य भारतवासिनः आत्मकृतकर्मणां दुर्विपाकेन उत कालप्रभावेण मलिनबुद्धयः पूर्वेषां निबन्धेष्वप्यनधिकारिणः अन्येषामुपहास्याः जाताः । यत् साम्प्रतं भारतवासिनः प्रायशो विविधव्याधिविकला हीनतेजसः स्वल्पायुषश्च भवन्ति, तत्र ऋषीणामार्षज्ञानोत्कर्षभूतेषु आयुर्वर्धनतन्त्रेषु वीतरागता तदुक्तविधेर्व्यतिक्रमः, एवमाद्यास्तेषामात्मापराधाः एव कारणम् । भारतभूमीललामभूतैर्भारतीयानां शरीरधातुतत्त्वज्ञैस्तपःप्रभावसम्पन्नैर्मनीषिभिर्मुनिभिरनुशिष्टा आयुर्वेदसंहिताः तथा भारतभूमीजाताः भारतीयानां प्रकृत्यनुकूलाः वीर्यवत्यः ओषध्य एव भारतीयानां रोगोपशमनेषूपयुज्यन्ते ।

येषामायुर्वर्धनतन्त्राणि अन्येषामप्युपजीव्यानि, येषां चिकित्सितमव्याहतफलं, येषां भेषजप्रभावेण प्रवया अपि तरुणायितः, मृत्युरप्युपहसितः, हा हन्त कालवशेनाद्य तेऽपि भारतवासिनः यूरोपीयचिकित्सितैकशरणाः जाताः । यूरोपीयभेषजानि प्रायशो मद्योपकल्पितानि भवन्ति । मद्यं यूरोपीयानां प्रकृत्यनुगुणमपि नैवास्माकं भारतीयानां सात्म्यम् । अतस्तदुपकल्पितान्यौषधानि कथम् अस्माकं श्रेयसे कल्पेरन् ।

## विदेशीयचिकित्साशास्त्रविदाम् आयुर्वेदानुशासने अनुरागः ।

२५—दिष्ट्या यूरोपीयचिकित्साशास्त्रविदो भिषजोऽपि अस्माकमायुर्वेदानुशासने

शनैः सानुरागाः उपलभ्यन्ते । ते च आत्मचिकित्सिते आयुर्वेदीयभेषजो बिल्वनिम्बगुडूच्यादीन्यपि उपयोजयन्ति । विकारोपशमनेषु विलासकस्तूरीभैरवादीनां वीर्यवतां आयुर्वेदीयभेषजानामप्युपयोगमाद्रियन्ते । जलं लवणानि च प्रतिषिध्य केवलं दुग्धं पेयमुपदिशन्ति । पूर्वमनङ्गीकृताया शुक्राश्मर्याः सम्भवमिदानीमङ्गीकुर्वन्ति ।

तदानीं कलिकाताराजकीयचिकित्सालयाध्यक्षः इदानीं राजकीयचिकित्स नायकश्रेष्ठः महोदारहृदयः लिडकिस्महोदयः ( Dr. Lukis ) कलिकातानगर्यां तपादैश्चिकित्स्यमानमुदरिणमुद्दिश्य जललवणवर्जनमुपदिश्य व्यक्तमुक्तवान् यत्—

"We have many things to learn from the people o this country in respect of medicine."

'भेषजे चिकित्साविज्ञाने च भारतवासिनां सकाशाद् अस्माकमपि बहु शिक्षितव्यमस्ति' इति ।

उदररोगे जललवणवर्जनं दुग्धपानविधानं च चरके चिकित्सितस्थाने उदररोगचिकित्सिते उक्तम्—

औदकानूपजं मांसं शाकं पिष्टकृतांस्तिलान् ।
व्यायामाध्वदिवास्वप्नं यानयानञ्च वर्जयेत् ॥
तथोष्णलवणादीनि विदाहीनि गुरूण्यपि ।
नाद्यादन्नानि जठरी जलपानञ्च वर्जयेत् ॥
शोकानाहार्तितृण्मूर्च्छापीडिते कारभं पयः ।
शुद्धानां क्षीणदोषाणां गव्यं छागं समाहिषम् ॥ इति ।

( चरक, चिकित्सितस्थान, १३ अध्याय ) ।

वङ्गविभागे वस्तुसंयोगतत्त्वपरीक्षाकर्मणि लब्धप्रतिष्ठो धीमान् रायबहादुरोपनामा डाक्टरचुन्नीलालवसुमहोदयः अधुनातनविज्ञानविधिना आयुर्वेदोक्तानि कानिचित् भेषजानि सम्यक् परीक्ष्य तेषां गुणवीर्यप्रभावानधिकृत्य भारतीयपत्रिकायां "मया यद् यत् परीक्षितं तत् तथैव इत्युक्तवान् ।

## पाश्चात्यचिकित्साशास्त्रे आयुर्वेदस्य उपजीव्यत्वम् ।

२६—आयुर्वेदविहितचिकित्सितानां समुत्कर्षादस्माकं आयुर्वर्धननिबन्धाः अन्यदेशभाषाभिरनूदिताः लब्धप्रसरास्तेषु तेषु देशेष्वपि चिकित्साविज्ञानस्य उपजीव्या आसन् ।

तथा च श्रीमता गोण्डालाधिपतिना स्वरचितचिकित्साविज्ञानेतिहासनामके ग्रन्थे ( History of the Aryan Medical Science )—

"The great works of Charaka and Susruta were translated into Arabic under the patronage of Kaliph Almansur

in the 7th Century. The Arabic version of Susruta is known by the name of "Kelale-Shaw-shoore-ul-Hindi." These translations were, in their turn, rendered into Latin. The Latin versions formed the basis of European medicine wnich remained indebted to the Eastern Science of Medicine down to the 17th Century." ( History of the Aryan Medical Science, Page 196—Quoted in the Introduction, Page X,, of Kaviraj K. L. Bhishagratna's English Translation of the Susruta Samhita ).

'ख्रीष्टीयसप्तमशताब्द्यां अलमञ्जरनाम्नः अरबभूमिपतेरनुकम्पया चरकः सुश्रुतश्च आरब्यभाषया अनूदितौ। तत्र सुश्रुतस्यानुवादग्रन्थः "केलाले-शओसुरि-उल-हिन्दी" इति नाम्ना प्रसिद्धः। तावनुवादग्रन्थौ लैटिनभाषया पुनरनूदितौ। तावेव यूरोपीय-चिकित्साविज्ञानविधेर्मूलम्। अतः स यूरोपीयचिकित्साविज्ञानविधिः सप्तमशताब्दी-मारभ्य सप्तदशशताब्दीं यावत् प्राच्यचिकित्साविज्ञानस्याधमर्णः' इत्युक्तवान्।

डाक्टर वाइज ( Dr. Wise ) साहेबमहोदयः आत्मनो हिन्दुभेषजविधिविवृति-नामकनिबन्धे ( Commentary on the Hindu System of Medicine )—

"The native practice of medicine may now be said in this lamentable state of depression over all Hindustan; but it was far otherwise as cultivated by the ancient Hindus." ( Introduction, Page V. Dr. Wise's Commentary on the Hindu System of Medicine ).

'हिन्दुचिकित्सितं हन्त अधुना हिन्दुस्थानं परितः अतीव शोच्यां दशामुपागतम्। तत्तु पुरा प्राचीनैर्हिन्दुभिरात्मनो धीशक्तिसम्पदा सुतरामुत्कर्षं प्रापितम्' इत्यभिधाय ततः पुनः—

"A people, who had distinguished themselves at such an early age, by their power and riches, as well as by their successful cultivation of the Science, may be, supposed to have studied with much care the means of succouring the wounded and maimed, of alleviating pain and curing diseases. The Hindu history of Medicine proves this to have been the case." ( Dr. Wise, Introduction, Page Vii ).

'ये च तादृशे पुराकालेऽपि आत्मनः शौर्येण वीर्येण धनसम्पदा तथा अमोघ-विज्ञानानुशीलनेनापि अतीव प्रसिद्धिं गताः ते खलु यद् अतिमहता प्रयत्नेन आत्मनः घातादिशोधनस्य व्याधिवैकल्यप्रशमनस्यापि अनुशीलनं चक्रुः तत् तेषां चिकित्सा-विधिरेव प्रमाणयति इत्युक्त्वापुनः—

"Arrian informs us that in the expedition of Alexander to India, the Greecian Physicians found no remedy against the bites of snakes; but the Indians cured those who happened to fall under the misfortune."

'आरियाननामा विद्वान् अस्मान् ज्ञापयति यत् आलेकजाण्डार इत्याख्यया सुविश्रुतस्य ग्रीसभूपरिवृढस्य भारतवर्षाभियानसमये ग्रीसदेशीयैर्भिषग्भिः सर्पविषशमनमगदम् अज्ञातमासीत्। तदा ये च सर्पैर्दष्टाः तेषां विषोपशमनं भारतीया भिषज एव चक्रुः।' इत्युक्त्वा पुनरपि—

"Professor wilson is of opinion that the Arabians of the 8th Century cultivated the hindu works on Medicine before those of the Greeks; and that the Charaka, the Susruta and the treatises called Nidana, &c, were translated and studied by the Arabians in the days of Harun and Mansur (A. D. 773), either from the originals, or more probably from translations made at a still earlier period into the language of Persia." (Dr. Wise. Introduction, Page xvii).

'अध्यापकः विलसनसाहवसहोदयो मन्यते यत् आरबदेशीयाः अष्टमशताब्द्यां ग्रीसदेशीयचिकित्साग्रन्थानुशीलनात् प्रागेव भारतीयान् चिकित्सानिन्धानानुशीलयामासुः। त्रिसप्तत्यधिकसप्तशततमेऽब्दे हारुणअल्-रसिद इत्याख्ये तथा मञ्जर इत्याख्ये च भूमिपतौ आरबभूमि परिपालयति मूलसंस्कृतग्रन्थान् उत अतिपुरैव पारसीकैः पारसीकभाषया कृतानुवादग्रन्थानेव आलम्ब्य तैश्चरकः सुश्रुतो निदानाख्यः संग्रहग्रन्थश्च आरव्यभाषया अनूदिताः अधीताश्च' इत्युक्तवान्।

श्रूयते च आलेकजाण्डारनाम्ना ग्रीसभूमिपतिनापि आहतसैनिकानां क्षतसंशोधने आयुर्वेदविदो भिषज एव नियोजिता आसन् इति।

डाक्टरक्लार्क (Dr. Clarke) साहेबसहोदयेनाप्युक्तम्—

"If the Physicians of tne present day would drop off from the pharmacopia all the modern drugs and chemicals and treat their patients according to the methods of Charaka, there would be less work for the undertakers and fewer chroanic invalids in the world."

'सम्प्रति चिकित्सकाश्चेत् इदानीन्तनानि सर्वाणि भेषजानि रसायनानि च वर्जयित्वा चरकमतमनुसृत्यैव व्याधितान् चिकित्सेयुः तदा पृथिव्यां मृत्युः क्षीणप्रभावः जीर्णाः व्याधयश्च विरला भवेयुः' इति।

अधुना जर्मनदेशीयैर्भिषग्भिर्यक्ष्मिणां यश्छागोपयोगचिकित्साविधिः ( goat-tretment ) प्रवर्तितः स चास्माकं

छागं मांसं पयश्छागं छागं सर्पिः सशर्करम् ।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत् ॥ इति ।
( चक्रदत्त, यक्ष्मचिकित्सा ) ।

तथा—

आजं क्षीरं घृतं मांसं क्रव्यान्मांसं तु शोषजित् ॥ इति ।
( वाग्भट, चिकित्सास्थान, ५ अध्याय ) ।

इत्याद्यायुर्वेदानुशासनान्नातिरिच्यते ।

अपि च युरोपीयानां सीजेरियन् सेक्सन् ( Caesarian section ), लिथोटोमिक आपरेशन् ( Lithotomic operation ), सर्कुलेशन् अफ् व्लड ( Circulation of blood ) इत्याद्याश्चिकित्साविधयोऽपि अस्माकम् आयुर्वेदोक्तान् मूढ़गर्भ-नेत्र-कर्णरोगादिचिकित्साविधीन् तथा सुश्रुतोक्तरक्तसञ्चरणविधिं च नातिवर्त्तन्ते ।

इदानीं युरोपीयचिकित्सकाः वातपित्तश्लेष्मणां विकारकर्तृत्वं नाङ्गीकुर्वन्ति । मन्ये ते च जात्वपि तदेवापि मतम् उपजीव्य नवाविष्कृतव्याधिनिदानविषय इव भविष्यन्ति ।

डाक्टरवाइज ( Dr. Wise ) साहेवमहोदयेनोक्तम्—

"The Hindu philosophers undoubtedly deserve the credit of having though opposed by strong prejudice, entertained sound and philosophical views respecting the use of the dead to the living, and were the first scientific and successful cultivators of the most important and essential of all the departments of medical knowledge, practical anatomy." ( Dr. Wise, Quoted in Kunja Lal Bhishagratna's English Translation of the Susruta Samhita, Introduction, Page. XX. )

'आर्यशास्त्रविदः सत्यपि वलवति शवस्पर्शनिषेधविधौ जीवितानां मृतदेहव्यवहारमनुमत्य असंशयं प्रशंसनीयाः सन्ति । ते हि आद्याः विज्ञानविदस्तथा चिकित्साविद्यायाः शारीरतत्त्वविद्यायाश्च विभागेषु अमोघम् अतिहितं सारं मूलतत्त्वमुद्भावितवन्तश्च ।' इति ।

अहो वत इत्थमत्यारूढ़िमधिगतोऽपि सोऽयमायुर्वेदः भारतीयानां दुरदृष्टवशात् सम्प्रति नितरां शोचनीयो जातः । यस्य प्राधान्यं देशान्तरेष्वपि धीमद्भिरवनतेन शिरसोररीकृतं, मतमनुसृतं, विधिरनुकृतः भेषजोपयोगश्च अनुमोदितः । यश्च यमनियमवतामस्माकम् ऋषीणां योगप्रभावः, तपसः फलम्, आर्षज्ञानस्य परिणतिः, धीशक्तेः प्रकर्षः, भूयोदर्शितायाः पराकाष्ठा, विज्ञानस्य चरमोत्कर्षः, हा हन्त हन्त

सोऽयमायुर्वेदः उपरक्तपार्वणशर्वरीश्वर इव मन्दीभावमुपगतः। आयुर्वेदस्य पठनपाठने शनैर्मन्दायमाने तदुक्तचिकित्सितमपि ह्रीयमानप्रभावं क्षीयमाणाधिकारञ्च। आयुर्वेदस्य मन्दीभावाद् भारतभूमिवासिनः खल्वल्पमेधसश्चाल्पायुषो जाताः। एवं दुर्दिनेऽपि महामान्येन मुम्वइभूभागगवर्नमेण्टेन कथं कथमपि लब्धात्मनः आयुर्वेदीयचिकित्सा-विधेः प्रसरो यदुपरुद्धः, तन्न युक्तमाचरितम्। अन्यच्च युरोपीयचिकित्साप्रसारपक्षपाति-भिरपि राजपुरुषैः एतच्चिन्तनीयं यद् यूरोपीयचिकित्साशास्त्रविदां भिषजामननुरूप-संख्यकत्वाद् भारतीयानां चिकित्सितेषु अद्यापि अत्यन्त्येषां भिषजामपेक्षा। अपि च यूरोपीयचिकित्सायां प्रसह्य प्रसरमधिगच्छन्त्याम् अपि अद्यापि बहवो भारतीया यथा आयुर्वेदचिकित्सायां सानुरागाः न तथा यूरोपीयचिकित्सायामुपलभ्यन्ते।

कलिकातावीडनोद्याने मत्तातपदानां प्रतिष्ठितप्रस्तरमूर्त्तेरावरणोन्मोचनोत्सवपरिषदि सभापतिः कलिकाताप्रधानविचारालयस्य प्रधानविचारपतिपदे लब्धप्रतिष्ठो माननीयो मनस्वी सर लारेन्स जेङ्किन्स् ( Sir Lawrence Jenkins ) साहेवमहोदयः प्रोक्तवान् यत्—

"This at least I may safely say that the Kaniraj of to-day is the inheritor of observations of Centuries and the collective experience of ages, and it is difficult to suppose that in that heritage nothing of good is to be found; rather would I believe that it embodied much that is high utility and worthy of investigation of the modern scientist. ❀ ❀

In India, with all its hundreds of millions, if we exclude the few, who have come under the spell of Western influence, it is to the Kaviraj and the Hakim that the sick men turn in their sufferings and their ailments, for their mental consolation; and it is in the method of their healing art and in their words of hope that the paients' confidence is placed." ( Reported in the Bengalee of the 30th June, 1912, Town Edition. )

'अहमिदानीमसंशयं शंसामि यदिदानीन्तनाः आयुर्वेदविदो भिषजः शताब्दीभिर-र्जितस्य शास्त्रानुशीलनज्ञानस्योत्तराधिकारिणः बहुदिवससमाहृतबहुदर्शितायाः समवा-याश्च भवन्ति। अनेनोत्तराधिकारित्वेन न किञ्चित् हितं साध्यते एतन्नैव वक्तुमुचितम्। अहं पुनर्मन्ये इत्थमुत्तराधिकारित्वम् इदानीन्तनविज्ञानानुशीलनकृतां गवेषणायोग्यं श्लाध्यविज्ञानानुशीलनस्य च अङ्गम्। ❀ ❀ ❀ असंख्यैर्भारतीयैरध्युष्यमाणायामस्यां भारतभूमौ व्याधिताः यूरोपीयचिकित्साविधौ परिनिष्णातेषु केषुचिद्भिषक्षु श्रद्धालवोऽपि आत्मनो व्याध्युपशमनार्थं प्रायशः आयुर्वेदविदस्तथा हकीम इत्याख्यानगदङ्कारानु-

प्रतिष्ठन्ते। तेषां च भेषजद्रव्याण्याद्रियन्ते। आयुर्वेदविदां हकीमाख्यभिषजां च चिकित्सितविधिः तैरुक्तम् आश्वासनवचनञ्च तेषां व्याधितानां मनःशान्तये विश्वासाय च भवति' इति।

## इदानीं कर्तव्यम्।

२७—माननीयाः भिषजः,—कालप्रभावात् उत दुर्ग्रहवशात् भारतवासिनाम् आत्मकृतकर्मणां दुर्विपाकाद् वा येन केनापि जातायामायुर्वेदस्येत्थमधोगतौ वयमत्र-पराद्धाः निरवशाः इत्यपि वक्तुमस्माभिर्नैव शक्यते, यतोऽयमायुर्वेदः अनर्घरत्नमिव अस्मास्वेव न्यासीकृतः। अस्य योगक्षेममस्माभिः खल्वनुचिन्तनीयम्। यथाऽस्य पठनं पाठनञ्च भूयो भूम्ना प्रवर्त्तितप्रसारं बहुलं भवेत्, तदुक्तचिकित्सितेष्वपि सर्वेषामनुरागो वर्धेत तथाऽस्माभिः सर्वदा सर्वथैव प्रयतितव्यम्।

तत्रायुर्वेदस्याध्ययनाध्यापनयोर्बहुलप्रवृत्तये तदुक्तचिकित्सितविधीनां च प्रकर्षाय आदौ तावदितस्ततः आयुर्वेदविद्यालयाः आयुर्वेदचिकित्सालयाः आयुर्वेदीयभेषजालयाः आयुर्वेदविद्यापरीक्षालयाश्च प्रतिष्ठापयितव्याः।

तत्रविद्यालयेषु वृत्तिपुष्टाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः क्लेशक्षमाः ज्ञापन-समर्थाः शिष्यवत्सलाः अध्यापकाः प्रशान्तान् आर्यप्रकृतिकान् धृतिस्मृतिमतः शील-चेष्टावतो मेधाविनोऽत्यमनिनोऽनलसान तद्विद्यकुलजानन्तेसदः आहूय आयुर्वेदोपसेवा-गुणकीर्तनेन प्रवर्त्तयन्तो वृत्त्या पोषयन्तो वात्सल्येन गुरुभक्तिमुत्पादयन्तः आक्षेपसमाधिना शास्त्रानुरागं जनयन्तः अनधिगम्यमानमर्थमसकृद् आवेदयन्तः तथा अध्यापयेयुर्यथा तेषां शास्त्रावगतिः शास्त्रार्थे दृढता तत्त्वविज्ञानम् अभिधानसौष्ठवं च जायेत। एवं कृते पठनपाठनयोर्बहुला प्रवृत्तिर्भवेत्। अपि च अधुना मुद्रायन्त्रप्रभावात् पुस्तकानां सौलभ्येऽपि मुद्रितेषु पुस्तकेषु प्रायशः अशुद्धिबाहुल्यमुपलभ्यते। अतस्तत्संशुद्धये तत्त्वावगतये च लिखितानि पुरातनानि कालस्य लीलावैचित्र्यसाक्षीणि पुस्तकानि अति-महता यत्नेन बहुभिः परिश्रमैः विपुलवित्तव्ययैर्लोकप्रेषणैश्च नानादिग्भ्यः नानादेशेभ्यश्च समाहृत्य तेषु विद्यालयेषु संरक्षितव्यानि।

चिकित्सालयेषु चिकित्स्यमानानामातुराणां निदानपूर्वरूपलिङ्गादिभिर्व्याधिनिरूपणं तेषु तेषु व्याधिषु तत्तद्भेषजप्रयोगाः हिताहितयोरायुष्यानायुष्ययोर्विधप्रतिषेधौ च इत्येवं भिषक्कर्माणि, तथा भेषजालयेषु देशकालगुणवीर्यप्रभावसम्पन्नैः मात्रावद्भिर्द्रव्यैर्विविध-भेषजकल्पनानि भिषक्सहचरा एवान्तेमन्दो भूयो भूयः पर्यवेक्षेरन्। ततः समाप्तविद्येषु विद्यार्थिषु गृहं प्रस्थातुकामेषु आचार्यास्तान् परीक्षागृहेष्वाहूय तेषां शास्त्रार्थविज्ञानं चिकित्सिते भेषजकल्पने च कौशलं सम्यक् परीक्ष्य तान् भिषग्वृत्तये अनुमन्येरन्। एवमाचार्यैरनुमतेषु एव भिषग्वृत्तौ प्रवर्त्तमानेषु चिकित्साविधेरुत्कर्षः अज्ञानाञ्चोपरोधो भवेत्।

## तत्र उपायाः ।

२८—अथ इत्थं गुरुकर्माणि विपुलवित्तैरेव साध्यानीति चेत् ? नात्राप्यस्माभिर्निराशामलीमसैर्भवितव्यम् । इदं भारतं वर्षं आत्मश्रियैव सुविश्रुतम् । अस्य धनधान्यसम्पदमन्यदेशीयाः अपि कामयन्ते । उपजीव्य वर्तन्ते च । अत्र बहवः कारुण्यपुण्यपीयूपनिष्यन्दिहृदयाः शान्तप्रकृतयो महान्तः पुण्यश्लोका धनवन्तः सन्ति । ते चास्माभिः प्रारिप्सिते कर्मणि धौरेयाः भविष्यन्ति । अन्यच्च पाकशासनसमानशासनः अनवरतम् अवनतसामन्तनृपतिवृन्दमौलिमालालालितचरणयुगलः उद्धतवैरिवंशदावायमाननिजभुजप्रतापः विद्योत्साही गुणग्राही निखिलभारतभूमिचक्रवर्त्ती अस्माभिरुपस्थानीयः । स चास्माकं पुण्ये कर्मणि सहायो भविष्यति । राजा हि प्रजानां धनस्य धर्मस्य जीवितस्य च रक्षिता । स एव प्रजानां योगक्षेमकरः । अपि च अन्यथापि राजा भिषग्भिरुपाचरणीयः । तथा च सुश्रुते मूढगर्भचिकित्सिते—

उत्कर्षणापकर्षणस्थानापवर्तनोत्कर्तनभेदनच्छेदनपीडनर्जूकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं चाहिंसता । तस्मादधिपतिमापृच्छ्य परं च यत्नमास्थायोपक्रमेत । इति । ( सुश्रुत, चिकित्सितस्थान, १५ अध्याय ) ।

सभ्याः, इत्यास्तां विस्तरः । केवलमाशास्महे—

स्निग्धैः स्निग्धैर्दतिकरुणापुण्यपीयूपवर्षैः कामं कामं सुचिरमभवत् तर्पितः सर्वलोकः ।
आयुर्वेदो ग्रहपरिगतः पार्वणः शर्वरीशः सोऽयं भूयः प्रकटितरुचिर्जीवजीवातवेऽस्तु ॥

इति शम् ।






श्रीमान् वैद्य पं. यादवजी त्रिकमजी आचार्य, बम्बई.
संपादक, आयुर्वेदीयग्रन्थमाला।
अध्यक्ष, नि. भा. व. १५ वैद्यसंमेलन हरिद्वार ( सन १९२५ )
नि. भा. व. २१ वैद्यसंमेलन ग्वालियर ( सन १९३१ )

॥ श्रीः ॥

निखिलभारतीयपंचदशवैद्यसम्मेलनाधिवेशन हरद्वारके सभापति

# श्रीमान् आयुर्वेदमार्तण्ड वैद्य यादवजी त्रिकमजी आचार्य महोदयका जीवन चरित्र।



श्रीमान् आचार्यजीका शुभ जन्म संवत् १९३८ में मार्गशीर्ष शुक्ल प्रतिपदाके दिन पोरवन्दर (काठियावाड़) में हुवा। आपके पिता श्रीत्रिकमजी आचार्य पोरवन्दरके राणासाहवके राजवैद्य थे। आप वंबई में संवत् १९४५ में पधारकर वैद्यक-व्यवसाय करने लगे। हमारे चरित्र नायकका विद्याभ्यास अपनी जन्मभूमिमें यज्ञोपवीतके उपरान्त पोरवन्दरराज्यकी संस्कृत पाठशालामेंही प्रारंभ हो गया था; किन्तु वंबई आनेपर आपने प्रसिद्ध पंडित श्रीवासुखीमजी वालजी, और व्यास घेलाराम मथुरादासजी, और शास्त्री जीवराम लल्लु भाईसे क्रमशः व्याकरण काव्य आदि पढ़कर पंडित श्रेणी में प्रवेश किया। आप वाल्यकालसे ही प्रतिभाशाली थे।

आपने संस्कृत साहित्यकी समाप्तिकर अपने कुल-परंपरागत चिकित्सा-व्यवसाय की ओर ध्यान दिया और अपने पूज्य पिताजीसे और राजस्थान निवासी श्रीमान् पं० गौरीशंकरजी वैद्यके पास आयुर्वेदशास्त्रका अध्ययन किया एवं साथही साथ वंबईमें प्रयाग निवासी प्रवासी श्रीमान् हकीम रामनारायणजीसे युनानी वैद्यकका आवश्यकज्ञान प्राप्तकर चिकित्सा व्यवसायमें प्रवृत्त हुवे। आपके पूज्य पिताजीका स्वर्गवास आपकी १८ वर्षकी अवस्था होनेके समयमेंही हो गया था—इसलिये आप पर सारे परिवारके भरण-पोषणका भार आ पड़ा। आपने सन् १८९९ में माधव-निदान मधुकोश व्याख्यासहितका संशोधनकार्य प्रारंभ किया और सन् १९०१ में प्रथम संस्करण निर्णयसागरप्रेसवालोंने प्रकाशित किया। उस समय आपकी अवस्था केवल १९ वर्षकी थी, इसी समय आपके आयुर्वेद-ग्रन्थ-संशोधन-कार्यका श्रीगणेश हुआ और वह सिलसिला आजतक निरतंर चला आ रहा है। आपने अवतक अनेक ग्रन्थ संशोधित व प्रकाशित किये हैं। संशोधन-कार्यके लिये आपने अनेक प्राचीन हस्तलिखित ग्रन्थोंका संग्रह किया और आयुर्वेदीय ग्रन्थमाला के प्रकाशन कार्यमें लग गये, जिसमें सन् १९१० से आजतक निम्नलिखित ग्रन्थ प्रकाशित हुए हैं।

१ रसहृदय तंत्र, २ रसप्रकाश सुधाकर, ३ गदनिग्रह, ४ राजमार्तंड, ५ नाड़ी-परीक्षा, ६ वैद्य-मनोरमा, ७ धारा-पद्धति, ८ आयुर्वेद-प्रकाश, ९ रसायन खंड, १० रस-पद्धति, ११ लौह-सर्वस्व, १२ रस-सार, १३ रस-संकेत-कलिका, १४ रस-कामधेनु ३ पाद, और १५ क्षेमकुतूहल।

इसके अतिरिक्त निर्णयसागरप्रेसके अध्यक्षको नीचे लिखे ग्रन्थ संशोधन कर प्रकाशनार्थ दिये हैं—माधवनिदान मधुकोश और आतङ्कदर्पण व्याख्यासहित, सुश्रुत श्रीडल्हण विरचित, निबंधसंग्रह व्याख्यासहित, चरकसंहिता श्री चक्रपाणि दत्त विरचित, श्री शिवदास सेन कृत व्याख्यासहित।

इसी प्रकार पं० जेठाराम मुकुन्द जी पणिया, बुकसेलर (बंबई) को निम्नलिखित ग्रन्थ

प्रकाशनार्थ दिये—सिद्ध मंत्र निघन्टु श्री केशव विरचित, श्री पं० वामदेव कृत व्याख्या समेत, वातप्रत्वादि निर्णय पं० नारायण विरचित, त्रिशती रावल शार्ङ्गधर विरचित।

गुजराती न्यूज प्रिंटिंग प्रेसके अध्यक्षको नीचे लिखे ग्रन्थ संशोधन कर प्रकाशनार्थ दिये—अनङ्गरंग, पंचसायक, कंदर्प चूड़ामणि।

इसके अतिरिक्त स्वर्गीय डा० श्रीमान् वामन गणेश देसाई बी. एस्. सी. (लन्दन) एल. एम. एन्ड एस्. (बंबई) एम्. बी. (लन्दन) विरचित औषधि संग्रह और भारतीय रसशास्त्र मराठी भाषाके परम उपदेय ग्रन्थ अपने ही व्ययसे प्रकाशित किये और "कर्म क्षेत्र" नामक बंगला ग्रन्थ श्रीमान् पं० शशिभूषण सेन विरचितका गुजराती अनुवाद करके प्रकाशित किया। आपका अनुवाद इतना सुन्दर हुआ कि हिन्दीमें भी उसका भाषान्तर हो गया है।

आप इतने उदार हैं कि अत्यन्त व्यय और कठिनता से संग्रह किये हस्त लिखित ग्रन्थ निम्नलिखित सज्जनोको प्रकाशनार्थ दे दिये—१ रसेन्द्र चूडामणि सोमदेव विरचित, मोतीलाल बनारसीदास संस्कृतबुक्‌डिपो लाहोर को दिया। २ काक चंडीश्वर कल्पतन्त्र, ३ रसाध्याय सटीक, चौखभा संस्कृतपुस्तकालय काशीके अध्यक्षको दिया। ४ वसवराजीय वैद्य-चिन्तामणि (यंत्रस्थ) श्रीमान वैद्यभूषण गोवर्धनजी छांगाणी नागपुर निवासीको दिया।

श्रीमान कविराज ठाकुरदत्तजी मुलतानी (लाहोर) को रसरत्नप्रदीपिका नामक पुस्तक दी। जिसे उन्होंने प्रकाशित किया।

श्रीमान् वैद्य पं० हरिप्रपन्नजीको 'रसयोगसागर'के संग्रहके लिये नीचे लिखी हस्तलिखित पुस्तकें आपने दीं—

१ चिकित्सारत्नाभरण, २ चिकित्सारहस्य, ३ भैषज्यसारामृतसंहिता, ४ योगसमुच्चय, ५ रसकंकालीय, ६ रसकल्पलता, ७ रसकामधेनु, ८ टोडरानंद, ९ रसकौमुदी (ज्ञानचन्द्रकृत), १० रसज्ञान, ११ रसदीपिका, १२ रसपद्धति, १३ रसप्रदीप, १४ रसपारिजात, १५ रसरत्नमणिमाला, १६ रसमुक्तावली, १७ रसरत्नदीपिका, १८ रसराजलक्ष्मी, १९ रसराजशंकर, २० रसराजशिरोमणि, २१ रससागर, २२ रसायनसंग्रह, २३ रसावतार, २४ रसावतार (माणिक्यचंद जैन), २५ रसालंकार, २६ रसेन्द्ररत्नकल्पद्रुम, २७ रसेन्द्रचूड़ामणि, २८ रसेन्द्रमंगल, २९ रसेन्द्ररत्नकोश, ३० लोहपद्धति, ३१ लोहसर्वस्व, ३२ योगचन्द्रिका, ३३ वसवराजीय, ३४ वैद्यचिन्तामणि, ३५ वैद्यचिंतामणि (लघु), ३६ वैद्यदर्पण, और ३७ स्त्रीविलास।

महामहोपाध्याय श्री कविराज गणनाथ सेन महोदय विरचित प्रत्यक्षशारीरका गुजराती अनुवाद डा० बालकृष्ण अमरजी पाठक एम. बी. बी. एस. द्वारा कराकर वैद्य जुगतराम शंकर प्रसाद भट्ट (झन्डु फार्मसीके संस्थापक) के साथ मिलकर छपवाकर प्रकाशित किया। आप नेपालके अति प्रवल गोरखा दक्षिणवाहु मान्यवर हेमराज शर्मा पंडित ज्यू महोदयसे प्राप्त कौमारभृत्य विषयक काश्यप संहिता वा वृद्धजीवकीयतंत्र मुद्रण करा रहे हैं जो शीघ्र ही प्रकाशित होगा।

निबंधसंग्रह व्याख्या सहित सुश्रुत संहिताका तृतीय संस्करण कर रहे हैं। उसके निदान स्थानमें गयदास कृत न्यायचन्द्रिका नामक और पत्रिका नामक व्याख्या भी सम्मिलित कर रहे हैं।

आप दो वार नि. भ. वैद्य सम्मेलनके प्रमुख हो चुके हैं, और आप कई वार नि. भा. आयुर्वेदविद्यापीठके प्रधान रह चुके हैं।

आपको महामना मालवीयजी महाराजने काशी हिन्दू विश्वविद्यालयके आयुर्वेदिक कालेजका प्रथम प्रिंसिपल नियत किया; किन्तु अस्वस्थ्य हो जानेके कारण आप बंबई वापस चले गये।

आपको लाहोर, अमृतसर, कानपुर, पटना, कलकत्ता, बनारस और थाना जिलाके गुजरात प्रान्तीय पंचम वैद्य सम्मेलनके अवसर पर सम्मान पत्र दिये गये हैं।

आपको नि. भा. वैद्य सम्मेलनने मथुरा (यू. पी.) के वार्षिक अधिवेशनके अवसर पर "आयुर्वेदमार्तंड"की पदवी प्रदान कर गौरवान्वित किया।

आप चुपचाप कार्य करनेवालोंमें से हैं। आपने आजतक अपने नामके साथ वैद्य शब्दके अतिरिक्त किसी पदवी आदिका प्रयोग नहीं किया।

रसयोगसागरके प्रणेता वैद्य पं० हरिप्रपन्नजीके साथ मिलकर सन् १९११ में मुंम्बई आयुर्वेदीय पाठशाला स्थापित की जो अबतक चल रही है।

काशीके त्रिदोष और पंचमहाभूत परिषदके अधिवेशनके आप प्रधान मंत्री थे। आपकी उपस्थितिसे सारे देशके दार्शनिक और विद्वान वैद्य एकत्रित होकर ८ दिनतक कार्य करते रहे।

आप बड़े मिलनसार सरल और मृदुस्वभावके हैं। आप सदाही विद्यार्थियों की हितचिन्तना करते रहते हैं। आपका यह विचार रहता है कि काम करनेवाले वैद्य सारे देशमें तैयार करते रहना चाहिये। आपके उपदेशोंसे अनेक योग्य विद्वान इस समय कार्यक्षेत्रमें प्रवेश कर चुके हैं।

आप आयुर्वेदीय अनेक संस्थाओंके उच्चपरिक्षाओंके परीक्षक नियुक्त होते रहे हैं।

आपका आयुर्वेदीय औषधालय, बंबई-जैसे महानगरमें धनाढ्योंके साथही साथ असंख्य दीनजनोंकी निस्वार्थ सेवा करा रह है।



# १५

निखिलभारतीय पंचदश वैद्यसम्मेलनाधिवेशन हरद्वारके सभापति, बम्बईके स्वनामधन्य चिकित्सक, श्रीमान् आयुर्वेदमार्तण्ड वैद्य

## यादवजी त्रिकमजी आचार्य महोदयका भाषण।

दिव्यो गन्धर्वो भुवनस्य यस्पतिरेक एव नमस्यो विक्ष्वीड्यः।
तं त्वा यौमि ब्रह्मणा दिव्य देव नमस्ते अस्तु दिवि ते सधस्थम्॥
ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट संराधयन्तः सधुराश्चरन्तः।
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान् वः संमनसस्कृणोमि॥

परममाननीय धन्वन्तरितुल्य वैद्यमहोदय तथा अन्य उपस्थित सभ्यगण!

आज इस सभामें मेरेसे अधिक ज्ञानवृद्ध और वयोवृद्ध वैद्य महोदयोंके विद्यमान होनेपर भी आप लोगोंने मुझे इस आसनके ग्रहण करनेकी जो आज्ञा दी है उसके योग्य न होनेपर भी आप महानुभावोंकी आज्ञाका पालन करना अपना परम कर्तव्य समझकर ही मैं इस आसनको ग्रहण करता हूँ।

यह हरद्वार क्षेत्र वही पुण्यभूमि है जहाँ हिमालयके पवित्र प्रदेशमें हमारे पूर्वज महर्षिगण जगत्‌हितकी कामनासे आयुर्वेदकी पुण्यकथा करनेके लिये एकत्रित होते थे और आयुर्वेदके गूढ़ तत्त्वोंपर विचार करते थे, तथा अपने तप और बुद्धिके प्रभावसे आयुर्वेदको सर्वसम्मानित शास्त्र बनाये थे, आज उसी आयुर्वेदवर्धिनी पुण्यभूमिपर हम लोग उस आयुर्वेदकी रक्षाके लिये तथा उसकी अवनत दशाको उन्नत करनेके लिये एकत्रित हुए हैं।

आयुर्वेदकी—जगत्‌के सर्वचिकित्साशास्त्रोंकी अपेक्षा प्राचीनता, आयुर्वेदका इतिहास, आयुर्वेदके सिद्धान्तोंकी प्रामाणिकता, आयुर्वेदके विषयमें विदेशीय विद्वानोंके उत्तम अभिप्राय, आयुर्वेदीय चिकित्सापद्धतिकी और चिकित्सापद्धतिओंकी अपेक्षा विशेषता इत्यादि विषयोंका पूर्वसम्मेलनोंके सभापति महोदयोंने बड़ी विद्वत्ता और प्रामाणिकतासे विवेचन किया है। उन विषयोंमेंसे मेरे लिये कोई वक्तव्य बाकी नहीं रह गया है। अतः उनहीं बातोंकी-पुनरुक्ति करके आपके बहुमूल्य समयको मैं व्यर्थ लेना नहीं चाहता, किन्तु आयुर्वेदकी वर्तमान अवनतदशासे उसको फिर उन्नतिके पथपर लानेके लिये वर्तमान समयमें हमको क्या-क्या करना चाहिए इस विषयपर

मैं थोड़ेसे कुछ अपने विचारोंको आप लोगोंकी सेवामें उपस्थित करता हूँ। आशा है कि उसपर आप लोग अवश्य ही विचार करेंगे।

## आयुर्वेदके अध्ययन-अध्यापनका प्रचार।

आयुर्वेदकी रक्षा और उन्नतिके लिये यह बात अति आवश्यक है कि आयुर्वेदके पठन-पाठनका प्रचार करके सुशिक्षित और अनुभवी वैद्य तैयार किये जाँय। ऐसे वैद्य तैयार करनेके लिये भारतवर्षके सब प्रान्तके बड़े-बड़े शहरोंमें आयुर्वेदके विद्यालय और महाविद्यालय स्थापित किये जाँय। आयुर्वेदके एक सर्वाङ्गपूर्ण और आदर्श महाविद्यालके स्थापन करनेका प्रस्ताव इस सम्मेलनने किया था और इस कार्यके लिए भारतवर्षके कुछ अग्रगण्यवैद्य महोदयोंने कुछ प्रयत्न भी किया था; परंतु बड़े खेदकी बात है कि हमारे दुर्भाग्यवश वह प्रस्ताव अभीतक कार्यरूपमें परिणत नहीं हुआ है। मेरी रायसे भातवर्षके बड़े-बड़े शहरोंमें जहाँ चार पाँच भी पठित और अनुभवी वैद्य हों, वहाँ विद्यालयका स्थापित होना आवश्यक है। जहाँ पढ़ानेके साथ प्रत्यक्षकर्मदर्शनका भी प्रबन्ध हो, वहाँके स्थानीय वैद्य आपसमें मिलकर उस विद्यालयमें अवैतनिक कार्य करें तो थोड़ेही खर्चमें अच्छा विद्यालय चल सकता है। उन विद्यालयोंमें अध्यापनोपयोगी पुस्तकसंग्रह, शारीरके नकशे और प्रतिकृति ( Models ) अस्थिकंकाल ( Skeleton ) बाजारमें मिलनेवाली खनिज और उद्भिज औषधियाँ तथा विद्यार्थी और अध्यापकोंके बैठने पढ़ाने योग्य फर्नीचर इतनी सामग्रियाँ हों। वहाँ स्थानीय वैद्य नियत समयपर आकर विद्यार्थियोंको पढ़ाया करें और औषधप्रयोग बनाना तथा रोगीको देखकर उसकी चिकित्सा कराना इन कार्योंको सायं प्रातःकाल अपने घरपर दिखलावें। छुट्टीके दिन विद्यार्थियोंको शहरके बाहर लेजाकर हरी वनस्पतियोंका भी परिचय करावें। यदि इतना प्रबन्ध किया जाय तो अच्छे, सुशिक्षित और अनुभवी वैद्य तैयार हो सकते हैं। विद्यालयका स्थान किसी वैद्यके घर न रख कर उसे स्वतंत्र रखना चाहिए। इतना कार्य करनेके लिये कोई विशेष धनकी भी आवश्यकता नहीं है। केवल प्रारंभिक खर्च—हजार, दो हजार रुपयोंसे ही कार्यका आरंभ हो सकता है। इतना व्यय स्थानीय वैद्य स्वयं या उस शहरके धनी लोगोंकी सहायतासे कर सकते हैं। इसके लिये केवल इतनी ही बातकी जरूरत है कि वहाँके स्थानीय वैद्य आपसके वैमनस्यको छोड़कर प्रेमभावसे मिलकर कार्य करें, तो अच्छी सफलता मिलेगी। ऐसे कार्योंमें स्थानीय विद्वान् वैद्योंको अपना कर्तव्य समझकर अवैतनिकभावसे कार्य करना चाहिए। तभी ऐसे कार्य चल सकते हैं, अन्यथा इन कार्योंके लिये वैतनिक अनुभवी और पठित वैद्योंका मिलना मुश्किल है। ऐसे विद्यालय चलानेसे वैद्योंको कई प्रकारके लाभ होंगे। एक तो उनकी पढ़ी हुई विद्या उपस्थित रहेगी, ( व्यवसायमें पड़े हुए विद्वानोंको अपनी विद्याको उपस्थित रखनेके लिये अध्यापनसे उत्तम उपाय

कृपीवलान् नितान्तं चेखिद्यते स्वान्तम्। विद्यच्चा पुनरस्याः भूमेः शार्मण्यादिदेशान्तरमाश्रितवती। परकीयैः सत्यमेव पादाघातक्षुण्णांगप्रत्यंगायाश्चास्याः कुतः पुनरपि रामराज्यसंदर्शने प्रत्याशा। प्राचीना धर्मप्रवर्तकास्तु अधर्मनिरतानां भारतपुत्राणां स्मृतिशेषतां गताः। हा धिक् कष्टम्। "सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः"। एवं च परद्वीपस्थैः साम्राज्यचालकैः समाक्रान्तेषु तेषु तेषु भारतभूमिभागेषु साकमेव स्वातन्त्र्यलोपेन अस्मत्संस्कृतिलोपोऽपि अवश्यंभावित्वेन समजनि। प्राचीनानि शास्त्राणि चास्मदीयानि न केवलं प्रतिरुद्धप्रगतिपथानि अपि तु लुप्तपराक्रमाणि छिन्नांगप्रत्यंगानि च समभूवन्। एवञ्चायुर्वेदोऽपि नैकविधामापदं अवाप्नोत्।

बहव एव आयुर्वेदग्रन्थाः सर्वंधस्मरस्य कालस्योदरे विलीनाः। याः काश्चन संहिता अवाशिषन् तासामपि कानिचिदंगानि छिन्नभिन्नानि कानिचित्तु जीर्यमाणानि जीर्णशीर्णानि चेति पुनः प्रकल्पितानीति दृश्यन्ते। 'कायबालग्रहोर्ध्वांगशल्यदंष्ट्राजरावृषानिति' अष्टौ अंगानि आयुर्वेदस्य पुरातनानि। तेषां मध्यात् शल्यशालाक्यतन्त्रं बौद्धराजशासनस्य अहिंसैकतत्त्वानुचरस्य काले प्रायो विनष्टम्। शारीरज्ञानार्थमपि कृतस्य मृतशरीरव्यवच्छेदनस्य 'हिंसा' इति संज्ञां प्रापितस्य कृते महानेव राजदण्ड आसीदादिष्टः दंष्ट्राचिकित्सापि नवीनागतेन राजाधिराजेन पुत्रीकृतस्य पाश्चात्यवैद्यकस्य प्रसारात् आर्यवैद्यहस्ताद्गलिता। इतराण्यपि अंगानि कालप्रातिकूल्याद्वा वैद्यानां औदासीन्याद्वा विस्मृतिपथं गतानि। एकमेवावशिष्यते तस्यायुर्वेदस्यांगं कायचिकित्सेति, येन खल्वायुर्वेदवणाः संप्रति कामपि वृत्तिं लभन्ते। तदेतत्साम्प्रतिकानां वैद्यानां एतावदेव वैभवं यच्चैः सामान्यतः केषांचित्कायिकानामेव रोगाणां वमनविरेचनात्मकैरुपायैरुपद्रवान् क्लेशकरान् दूरीकृत्य स्वास्थ्यं प्रतिष्ठाप्यते। या हि आयुर्वेदस्य विविधांगी चिकित्सा तास्ताः सूक्ष्मसूक्ष्मा अवस्थाः समवलोक्य क्रियमाणा पूर्ववैद्यानां यशोदायिनी समभवत्तस्याः सूक्ष्मतरं ज्ञानं अनुबन्धप्रणाशाद्विलुप्तप्रायम्। प्रागेवास्य चिकित्साकार्यस्य, आदौ तावदुपक्रम्यस्य रोगस्य यथावन्निदानं करणीयं भवति। निदानं त्वायुर्वेदान्तर्गतं सर्वथा त्रिदोषज्ञानायत्तम्। ते च त्रिदोषाः कथं कदा कुत्र च प्रादुर्भवन्ति, किं स्वरूपाः, कथं च तेषां कार्याणि सकलशारीरचेष्टाव्यापकानि भवन्ति, विकृताश्च ते कथं कुत्र च प्रतीयन्ते, विषयेऽस्मिन् निखिलभारतीयवैद्यानां तु का कथा, एकप्रान्तीयानाम्, एकग्रामस्थानां वा, किं बहुना सतीर्थ्यानामपि आयुर्वेदवणानामैकमत्यं न दृश्यते। अत एव सत्स्वपि आसेतुहिमाचलं चिकित्साकर्मकुशलेषु पण्डितप्रकाण्डेषु आयुर्वेदमार्तंडेषु चिकित्सापद्धतिरेषा न निश्चितफलवती भवति, न चापि शास्त्रसंज्ञामर्हतीत्येवंविधा आक्षेपाः सर्वत्र वैद्यमहोदयानामभिमुखमुपस्थाप्यन्ते।

## २ विद्यापीठ-स्थापना

एतादृशेऽस्मिन् करालकलिकाले, परदास्यनिमग्ने च भारते वर्षे छिद्यमाने च



श्रीमान् पं. एन. माधव मिनोन आयुर्वेदाचार्य, मद्रास।
भूतपूर्व मन्त्री, नि. भा. व. आयुर्वेदविद्यापीठ।
अध्यापक, गवर्नमेन्ट स्कूल ऑफ इन्डियन मेडिसिन, मद्रास।

भारतीये वैभवे, निःशस्त्रीकृते च आर्यशास्त्रजाते, अस्तंगते चायुर्वेदकीर्तिगभस्तिमालिनि यैर्महोदयैरप्रार्थितस्वार्थैरायुर्वेदोन्नतिनिरतैर्भरतखण्डव्यापि आन्दोलनं सकलवैद्यवर्याणां संघटनं कर्तुं वैद्यमहासंमेलनस्योपक्रमो व्यधायि ते पदेकुलावतंसाः महामहोपाध्यायाः स्वर्गीय शंकरशास्त्रि-महाभागाः अद्यतनीयानां सकलवैद्यानां हार्दिकधन्यवादानर्हन्ति । तेषामसीमप्रयत्नैः ( १९०७ ) ईसवीय वर्षे गोदावरी तीरे नासिकक्षेत्रे प्रथमं निखिलभारतं वैद्यमहासंमेलनं सुमहोत्सवेन समजायत ।

पण्डिताः ! द्विविधं किल भवति कार्यं आयुर्वेदपरिपाटीपरिपालनार्थं विधेयम् । प्रथमं तावत् आयुर्वेदशास्त्रपद्धत्या व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणं चेति । द्वितीयं तु तस्यैव शास्त्रस्य पठनपाठनपूर्वकं परंपरारक्षणमिति । द्विविधमिदं कार्यं भारतवर्षीयाः सर्वेऽपि वैद्याः कुर्वन्ति स्म अद्ययावदपि च कुर्वन्ति । किन्तु चिकित्साकर्मप्रवीणानां तेषां पारस्परिकमैकमत्यं न कदापि दृष्टिपथमागतं न चापि तैरध्यापितानां छात्राणां ज्ञाने एकसूत्रता दृष्टा । अथ प्रचलिते च सर्ववैद्यानां संमेलने पारस्परविचारविनिमयेन शास्त्रचर्चया चानुभूतयोगानां कथनश्रवणेन चैतेषामेकवाक्यता भवितुं प्रभवेदित्यासीदाकांक्षा तत्प्रवर्तकानां मनसि । तथा च वैद्यविद्याव्यवहारे नूतनत्वेन प्रविविक्षूणां छात्राणां आयुर्वेदज्ञाने कथमेकसूत्रता स्यादिति चिन्तयतां तेषां संमेलनधुरीणानां तत्र तत्र प्रचलितानां आयुर्वेदाध्यापनपद्धति विशेषाणां तस्मिन् समये एकीकरणं अशक्यप्रायमिति दृष्ट्वा ईदृशी मतिरभवत् तत् आयुर्वेदछात्राणां परीक्षाग्रहणार्थं समुत्तीर्णेभ्यश्च पदवीप्रमाणपत्रादिवितरणार्थं निखिलभारतीयमेकं विद्यापीठं प्रतिष्ठापनीयमिति विचारमेनमनुसृत्य संवत्सरद्वितीयान्तरे अद्यतनीयस्य निखिलभारतायुर्वेदविद्यापीठस्य प्राणप्रतिष्ठापनं कृतम् । सुयोग्यमेकं पाठ्यक्रमं सुनिपुणतया निश्चित्य यथासर्वेषां कर्णपथं गच्छेत्तथा तस्य उद्घोषणमपि कृतम् । तदनुसारेण १९१२ ईसवीये संवत्सरे कर्णपूरसंमेलनप्रसंगे छात्रस्यैकस्य ( श्री० चतुरसेनवर्मा देहली ) आयुर्वेदविशारदपरीक्षा गृहीता । विद्यापीठस्य प्रथमस्नातकोऽयं प्रथमश्रेण्यामुत्तीर्य स्वर्णपदकमप्येकमलभत । १९१४ चेसवीयवर्षे अल्पसंस्कृतज्ञानां हितकारिणी मातृभाषालेखनानुमोदिनी "प्राकृत वैद्यपरीक्षा" प्रचलिता । आयुर्वेदाचार्यपरीक्षा तु १९१५ वत्सरे समारब्धा । स्नातकचतुष्टयं च तस्यां समुत्तीर्णम् । अनया रीत्या धृतमूलस्य विद्यापीठवृक्षस्य पंचविंशतिवत्सरात्मके काले कियानेव विस्तारः संजात इत्येतद्दृष्ट्वा प्रमोदनिर्भरं भवति चेतः । द्वादशे वर्षे एको विशारद एव विद्यापीठतः समुत्तीर्णः । त्रयोदशे तु तेषां पंचकं संजातम् । चतुर्दशे वत्सरे विशारदानां नवकेन सह नवीन-प्रचलितायां प्राकृतवैद्यपरीक्षायां चत्वारश्छात्राः समुत्तीर्णाः, एवं च त्रयोदश स्नातका अभवन् । पंचदशे चास्मिन्नब्दे चत्वार आचार्याः, षोडश विशारदाः, चतुर्दश वैद्याश्च एवं चतुस्त्रिंशत् स्नातका विद्यापीठतो निष्क्रान्ताः । इत एव प्रारब्धं विद्यापीठस्य परीक्षात्रैविध्यं यद्याद्ययावत् प्रचलति । अथ प्राकृत "वैद्य" परीक्षायाश्चास्या ( १९२२ ) संवत्सरात्प्रभृति

"आयुर्वेदभिषक्" इति नामान्तरं संजातम्। विद्यापीठस्नातकेभ्यश्च त्रिविधेभ्यः पदवीवितरणेन साकमेव प्रमाणपत्रमपि तत्तत्परीक्षायाः पृथक् पृथक् दीयते। प्रमाणपत्राणां चैतेषां, मूललिपिः आदितस्तदानींतनैः विद्यापीठसभापतिमहोदयैः महामहोपाध्यायेत्याद्यनेकप्राच्यपाश्चात्त्योच्चपदवीविभूषितैः श्रीगणनाथसेन सरस्वती महोभागैर्विनिर्मिता, सैव अद्ययावत् प्रचलति। वार्षिकीस्नातकसंख्या तु विद्यापीठस्य संप्रति ( पंचदशवत्सरापेक्षया ) दशगुणा संजाता। विद्यापीठ कार्यक्षेत्रमपि साधारण्येन निखिले भरतखण्डे प्रसृतमिति दृश्यन्ते।

## ३ वैद्यसंमेलनपत्रिका

निखिलभारतवैद्यमहासंमेलनस्य मुखपत्रमिति वैद्यसंमेलनपत्रिकाख्यस्य संमेलनवार्तापुस्तकस्य जनुः प्रयागक्षेत्रे ( १९१५ ) ई० वत्सरे समभूत्। ततः प्रभृति पत्रिका चैषा नियतकाले "संमेलनस्थायिसमितिः"—इत्याख्यस्य 'आयुर्वेदमहामण्डलम्" इत्यपरनामधेयस्य तथा आयुर्वेदविद्यापीठस्य च कार्यालयतः प्रकाश्यते। महामहोपाध्यायाः परमश्रद्धेयाः पदेशास्त्रिणस्त्वस्याः पितृपदे स्थिता आसन्। पण्डितवरेण्याः किशोरीदत्तशास्त्रिणः, वाजपेयि सूर्यप्रसादशास्त्रिणः, जगन्नाथप्रसादशुक्लाश्च सम्पादकत्वेनैनामलमकुर्वन्। ततश्च काले काले बहूनां पण्डितानां सम्पादकत्वे स्थितायाश्चैतस्याः पत्रिकायाः। अद्य यावत् प्रकाशनं भवति। आरम्भकालेत्वे तस्याः त्रैमासिकं रूपमासीत्। अनन्तरं च संवत्सरद्वयादब्दत्रयपर्यन्तं द्वैमासिकी अभवत्। ( १९२० ) ई० संवत्सरादारभ्य च अद्ययावत् सा मासिकी संजाता। अस्यामेव पत्रिकायां सर्वोऽपि विद्यापीठीयो वृत्तान्तः साधारण्येन प्रकाशं नीयते काले काले च इतराण्यपि पुस्तकानि स्वतन्त्रतया मुद्राप्यन्ते। तथापि यथा महामण्डलस्य तथैव विद्यापीठस्यापि इयमेव मुखपत्रिकेति संज्ञामर्हति।

## ४ विद्यापीठकार्यालयः

वार्षिकपरीक्षाणां पूर्वोत्तरकार्यप्रबन्धः, परीक्षोदर्कनिर्माणं, तत्प्रकाशनं चेत्येवमादिकं यत्कार्यजातं विद्यापीठ कर्तव्यत्वेन निश्चितं तन्निर्वाहार्थं विद्यापीठकार्यालयस्य स्थापना विहिता। स च कार्यालयः आदितः ( १९१८ ) ई० संवत्सरं यावत् प्रयागक्षेत्रे व्यवस्थित आसीत् अनन्तरं च स मद्रपुरमगमत्। तत्र च षट्समावधि स्थित्वा ( १९२४ ) वत्सरे च कर्णपूरं प्राप्तः। संवत्सरसप्तकं च तत्र तस्य व्यतीतम्। तदनन्तरं ( १९३० ) ई० वत्सरे एकविंशे च वैद्यमहासंमेलने महीशूरनगरे सर्वसम्मत्या निश्चितं यत् तेषु तेषु प्रान्तेषु विद्यापीठकार्यप्रचारः सम्यक्तया भवेदिति कार्यालयस्य संक्रमणमावश्यकमिति। अथ महाराष्ट्रे प्रत्यक्षतस्तु पुण्यपत्तने तस्य स्थापना करणीयेत्यत्र सर्वेषां सम्मत्या तदानींतनैः सम्मेलनसभापतिभिः महामहोपाध्यायश्रीगणनाथसेनमहाभागैर्निर्णीतम् विद्यापीठकार्यनिर्वाहणाय च सकलद्वैद्यसेव-

कोऽयं जनः मंत्रिपदे नियोजितोऽद्यावधि एतत्कार्ये व्यापृतोऽस्मि । विद्यापीठस्य अध्यक्षोपाध्यक्षादयश्च ये चान्येऽपि पदाधिकारिणः अद्यतनीया भूतपूर्वाश्च सन्ति तेषां नामावलिः १ परिशिष्टे द्रष्टव्या ।

## ५ विद्यापीठपरीक्षाः

विद्यापीठस्य किल परीक्षात्रितयं विद्यते । तत्रादितः 'वैद्य' परीक्षार्थं स्वास्थ्य-विज्ञानं, निदानं, शारीरं, निघण्टुः, चिकित्सा रसशास्त्रंचेति षड्विषया नियुक्ता आसन् । विशारदपरीक्षार्थिनां कृते तु विषयषट्कमेतदासीदेव । चिकित्साविषयके च प्रश्नपत्रे कौमारभृत्यरसायनवाजीकरणानामपि आसीदन्तर्भावः । अपि च शल्यशाला-क्यागदतन्त्राणां पत्रद्वितयं आधिक्येन दीयते स्म । आचार्यपरीक्षाविषयास्तु स्वास्थ्य-विज्ञानं, रोगनिदानं, कौमारभृत्यं, प्रसूतितन्त्रं, कायचिकित्सा, रसशास्त्रं, शल्यशा-लाक्यं, मानसरोगाधिकारश्चेति अष्टौ प्रकल्पिता आसन् । वाक्परीक्षास्तु प्रारम्भतः सांप्रतं यावद्विद्यन्त एव । 'वैद्य' परीक्षा च आयुर्वेदभिषगित्यपरनामधेया अनन्तरं शल्यतन्त्रागदतन्त्राभ्यामुपबृंहिता । आचार्यपरीक्षायां व्यवहारायुर्वेद ( Medical juresprudence ) विषयस्य उपयुक्तता सर्वेषामेव प्रतीता आसीत्, किन्तु तद्वि-षयप्रधानग्रन्थस्याभावे आदौ तत्परीक्षणमशक्यप्रायमभूत् । परन्तु विरचिते चैत-द्विषयके पुस्तके विषयस्यास्यापि परीक्ष्यत्वेन संग्रहो जातः । ततोऽपि आयुर्वेदाचार्य-परीक्षेयं सर्वासां वरिष्ठा, उत्तीर्णाश्च आयुर्वेदाचार्याः, आयुर्वेदप्रवीणा इत्येवं सर्वजन-सम्मानार्हा भवेयुरिति कृत्वा याः किल आयुर्वेदस्य मूलसंहिताः 'बृहत्त्रयी' इत्याख्या-तास्तास्वपि विद्यापीठस्नातकैः पारंगतैर्भाव्यमिति मनसि निधाय विद्यापीठाभिमानिभिः चरकसुश्रुताष्टांगसंग्रहेषु तिस्रः प्रश्नपत्रिकाः, आचार्यपरीक्षायां आवश्यकत्वेन प्रवेशिताः ।

आयुर्वेद-भिषक्-परीक्षायां स्वकीयप्रान्तीयभाषायामुत्तरलेखनमादौ प्रकल्पितं तत्तथैव अद्य यावत प्रचलति । विशारदाचार्ययोरपि छात्राः कंचित्कालं संस्कृतेतर-भाषायामपि उत्तराणि लिखितुं प्रभवन्ति स्म । परं तु ( १९१८ ) ई० वर्षतः संस्कृत-भाषामवलम्ब्यैव उत्तरं लेखनीयमिति विद्यापीठेन नियमः कृतः । अत्रापि स्त्रीपरीक्षा-र्थिनां कृते हिंदीभाषालेखनं कंचित्कालं स्वीकृतमासीत् , कालान्तरे तदपि परिवर्तितम् । ततः प्रभृति सर्वेषामेव आचार्यविशारदानां गीर्वाणभाषयैव लेखनं निरपवादमावश्यक-मस्ति । किं बहुना सांख्यकारिकातर्कसंग्रहयोरपि सम्यगध्ययनं विद्यापीठस्य उपस्नात-कानां आवश्यकमिति एकोनविंशे संमेलने ( १९२८ ई० वत्सरे ) निश्चित्य सांख्य-कारिकातर्कसंग्रहसंस्कृतभाषाज्ञानं चेत्ययं नवीनो विषयः विशारदपरीक्षायां दशमः समावेशितः । स च ( १९३२ ) ई० वत्सरात्प्रभृति कतिपयेषु विषयेषु प्रागु-त्तीर्णानां चापि विशारदपरीक्षार्थिनां कृते अवश्यमेव दीयमानो जातः । वाचिकपरी-क्षायां तु प्रान्तीयभाषायामुत्तराणि साम्प्रतमपि स्वीक्रियन्ते, तथापि उपरिनिर्दिष्टया योजनया छात्राः संस्कृतभाषायामपि मुख्यत उत्तराणि दातुं प्रभवन्तीति दरीदृश्यते ।

## ६ विद्यापीठस्नातकाः

अधुनैव कृतान्निर्देशाज्ज्ञायते किल यत् विद्यापीठेन यद्यपि परीक्षाकार्यं (१९१२) ई० वर्षे प्रारब्धं तथापि तिसृणामपि परीक्षाणां कार्यं (१९१५) ई० वत्सरात्प्रभृति प्रतिसंवत्सरं यथोचितं प्रचलितमिति। एतावत्कालपर्यन्तं विद्यापीठात्पंचदश विशारदाः, चत्वारश्च भिषजः, एवमेकोनविंशतिश्छात्रा एव स्नातकत्वेन बहिर्निर्गता आसन्। अतोऽनन्तरं यावदष्टादशवत्सरं विद्यापीठेन प्रयागक्षेत्रे वसतिः कृता। निर्गते च तत्क्षेत्रात् विद्यापीठकार्यालये (१८) अष्टादश आचार्याः (९५) पंचनवतिर्विशारदाः, (८५) पंचाशीतिश्च भिषजः, एवं पूर्वान् एकोनविंशतिस्नातकान् संयोज्य (२१७) सप्तदशाधिकं शतद्वयं स्नातकानामपि निर्गतम्। ततस्ततः मद्रपुरीये पंचवत्सरात्मके काले आचार्यविशारदभिषजो यथाक्रमं (४७ + १७४ + २३४) एवं निर्दिष्टाः (४५५) पंचपंचाशदधिकचतुःशतं निष्क्रान्ताः। स्नातकयोगस्तु (६७२) द्विसप्तत्यधिकषट्शतपरिमितोऽभूत्। ततः परं कर्णपुरे स्थापितेन विद्यापीठकार्यालयेन त्रिविधेभ्यः (१०७ + ३२२ + ५९५ = १०२४) चतुर्विंशत्यधिकदशशतसंख्याकेभ्यः स्नातकेभ्यः जनुः प्रदत्तम्। प्राग्जनितैश्च सह मिलित्वा स्नातकसंख्या (६७२ + १०२४ = १६९६) साधारण्येन सप्तदशशतमिता कृता। अतोऽनन्तरं विद्यापीठकार्यालयः पुण्यपत्तनं पुण्यतरमकरोत्। तत्र च सः (१९३१) अब्दं प्रारभ्य अद्यावधिकालं (१९३५) उषित्वा पंच वर्षाणि, कार्यं समपादयत् स्नातकांश्च (५२ + २८७ + ७१२ = १०४५) सामान्यतः सार्धदशशतमितान् पदवीप्रमाणपत्रवितरणपूर्वकं समभावयत्। अद्यतनीया पुनर्विद्यापीठस्नातकसंख्या (२७४१) सप्तविंशतिशतादपि अधिका वर्तते।

## ७ विद्यापीठपरीक्षाकेन्द्राणि

विद्यापीठस्य प्रथमे परीक्षावर्षे (१९१२) परीक्षादित्सूनां सप्ताष्टानां छात्राणां आवेदनपत्राणि समागतानि। परं च एक एव छात्र उपस्थितोऽभूत्। स च यथाविधि लिखितवाचिकपरीक्षां दत्त्वा यथानियममेव प्रथमश्रेण्यां उदतरत्। तत्कृते एकमेवाद्वितीयमासीत्केन्द्रस्थानम्। अनन्तरं च यथा यथा परीक्षार्थिनां भिन्नभिन्नस्थानगतानां संख्या परिवृद्धा तथा तथा विद्यापीठेनापि विभिन्नस्थानेषु केन्द्राणि स्थापितानि। छात्राणां सौकर्यार्थं नियमोऽप्येवंविधो व्यधायि यद्दशाधिकानां छात्राणामुपस्थितिसंभवे तत्स्थाने केन्द्रमेकं व्यवस्थापयित्वा परीक्षाप्रबन्धः कार्य इति। एवं च केन्द्रसंख्यावृद्धिः संजाता। साम्प्रतं यानि केन्द्राणि विद्यन्ते तेषां मध्यात् कानिचित् आदित एव निर्मितानि, अन्यानि कानिचिन्नवीनानि सन्ति। कानिचित्तु प्राङ्निर्मितान्यपि कालान्तरे कारणान्तरैरपावृतानि सन्ति। केन्द्रनामावलिः ३ परिशिष्टे द्रष्टव्या। प्रतिसंवत्सरं प्रतिकेन्द्रं नियुक्ते परीक्षासप्ताहे प्रत्यहं प्रातः सायमिति कृत्वा प्रश्नपत्रद्वितयं प्रदीयते। अन्ते च वाचिकपरीक्षा गृह्यते। प्रचलितायां च लेखनपरीक्षायां विद्यापीठनिर्वाचिता



श्रीमान् आयुर्वेदमार्तण्ड पं. रघुवरदयालु भट्ट कानपुर।

भूतपूर्व मंत्री नि. भा. व. आयुर्वेदविद्यापीठ।

निरीक्षका अवेक्षणकार्यं कुर्वन्ति, तथा अन्यदपि आवश्यकं साहाय्यं केन्द्राध्यक्षाय प्रददति। वाचिकपरीक्षा च केन्द्राध्यक्षः स्वयं अन्यैश्च मुखपरीक्षकैः सह गृह्णाति। एवं च केन्द्रव्यवस्थायां केन्द्राध्यक्षस्यैव वर्तते सर्वाधिकारः। तस्य कार्यजातमपि बहुविधं वर्तते। परीक्षासप्ताहे तथा प्राक्पश्चाच्च केन्द्राध्यक्षः विद्यापीठकार्यव्यापृतो भवति। एवंप्रकारेण यैः किल विद्यापीठस्य तेषु तेषु केन्द्रस्थलेषु सर्वमपि प्रबन्धं कृत्वा परीक्षाकार्यं प्रतिवर्षं यथावत्संपाद्य विद्यापीठं नितान्तमुपकृतं ते अतीव धन्यवादार्हाः, यतो हि सर्वमेतत्साहाय्यं विनामूल्यमपि सशरीरक्लेशमपि आयुर्वेदप्रेम्णैव कृतवन्तः कुर्वन्ति च। तेषां नामावलिः २ परिशिष्टे मुद्रितास्ति।

## ८ विद्यापीठस्य परीक्षणकार्यम्

विद्यापीठस्य तिसृणां परीक्षाणां (क्रमशः ११+१०+८) एकोनत्रिंशत् प्रश्नपत्रकाणि साम्प्रतं विद्यन्ते। तेषां च कृते प्रतिवर्षं सुयोग्यास्तत्तत्प्रान्तललामभूताः परीक्षका निर्वाच्यन्ते, तेषां कृते विद्यापीठविहिताः परीक्षणनियमास्तत्फलप्रकाशनादिनियमाश्च पूर्वप्रकाशितायां विद्यापीठ नियमावल्यां द्रष्टव्याः। योऽयं विशेषोऽस्मदीये विद्यापीठे दृश्यते यश्च नान्यत्र क्वचिदपि विश्वविद्यालयेषु दृष्टिपथमायाति सोऽपि विद्यापीठनियमावल्यां (७ नियमस्य 'व'—अंशे) द्रष्टव्यः। विद्यापीठस्य सर्वेऽपि परीक्षकाः विद्यापीठपरीक्षकत्वं शास्त्रभक्त्या एव स्वीकुर्वन्ति। न किमपि दक्षिणारूपेण तेभ्यो दातुं विद्यापीठं प्रभवति। उत्तरपुस्तकसंख्या तु साम्प्रतं प्रतिविषयं त्रिशतस्यापि समीपं गच्छति। अतश्चैतेषां परीक्षकमहाभागानामुपकृतिभरान् कैः शब्दैः प्रकटीकुर्यामिति नाहं जानामि। एतेषां च शुभनामानि ४ परिशिष्टे प्रदर्शितानि सन्ति।

## ९ विषयप्रधानग्रंथाः

प्राचीने काले गुरव एव स्वशिष्येभ्यः अन्नवस्त्रप्रदानपूर्वकं विद्या वितरणं कुर्वन्ति स्म। अनन्तरं तु तत्कठिनं अनुदिनम कठिनतरं संजातम्। साम्प्रतं विद्याप्राप्त्यर्थं शुल्कप्रदानप्रचारः सर्वत्रापि दृश्यते। प्रभवन्ति च शिष्याः शुल्कं प्रदातुम्। निःशुल्का च विद्या न समीचीनतया दीयते स्वीक्रियते चेति सार्वजनिकं मतं दरीदृश्यते। अतो व्यक्तिशः संघशो वा आयुर्वेदाध्यापकैः महाविद्यालयाः विद्यालयाः पाठशालाश्च कश्चित् स्थापिताः, स्थाप्यन्ते च प्रत्यब्दं काश्चिन्नवीनाः। एतद्देशेषु विद्यावितरणमंदिरेषु श्रमविभागेनैव विद्याप्रदानं क्रियते, युज्यते च तदेव कर्तुम्। अथ यदा सकलमायुर्वेदशास्त्रमध्यापयितुं नैके आचार्या अध्यापका वा नियुज्यन्ते तदा विषयप्रधानेनैव अध्यापनेन सर्वेषां सौकर्यं भवति। आर्षसंहितासु एकैकस्यां सर्वेऽपि विषयाः संगृहीताः सन्ति। अतस्तस्य तस्य विषयस्य कृते तासु संहितासु अन्येषु च ग्रंथेषु ये ये पाठ्यमानाः योग्याः भवेयुः तांस्तांश्च ततस्ततः संकलय्य स्वकीयां टिप्पणपुस्तिकां निर्माय तदनुसारेण अध्यापकः पाठयति। अनया च रीत्या बहुतिथं कालं

अध्यापनकार्यं कुर्वतां आचार्याणां एतादृशीः टिप्पणपुस्तिकाः सर्वा एकीकृत्य तस्य तस्य विषयस्य स्वतन्त्रं ग्रंथं निर्मातुं सुशकं भवति। एतादृशाः केचन विषयप्रधाना-ग्रंथाः गीर्वाणभाषायां प्रान्तीयभाषासु वा निर्मिताः संगृहीताश्च सन्ति। यथा—व्यवहारायुर्वेदः पं. किशोरीदत्तशास्त्रिणां आयुर्वेदमार्तण्डनां, योनिव्यापत्तन्त्रं कौमारभृत्यं प्रसूतितन्त्रं च डॉ. म्हसकर महोदयानां, शल्यतन्त्रं पं. धर्मानन्दशास्त्रिणां आयुर्वेदाचार्याणां, स्वस्थवृत्तं पं. राजेश्वरदत्तशास्त्रिणां आयुर्वेदाचार्याणां, अन्यदपि स्वस्थवृत्तं डॉ. भा. गो. घाणेकरमहाशयानां आयुर्वेदाचार्याणां, प्रत्यक्षशारीरं म. म. श्रीगणनाथसेनसरस्वतीमहोदयानां, तथा च विषतन्त्रं नानलशास्त्रिणां आयुर्वेदाचार्याणाम्। अन्यांश्चाप्येतादृशान् विषयप्रधानान् ग्रंथान् निर्मातुं संग्रहीतुं च केचन विद्वांसः प्रयतमानाः सन्ति। आशास्यते च नातिदूरस्थे भविष्यति काले सर्वेष्वेव आयुर्वेदीयविषयेषु स्वतन्त्राः ग्रंथा भवेयुः अध्यापनसुलभाः।

## १० विद्यापीठपदवीप्रमाणपत्राणि

मान्याः, सुविज्ञातमेव सर्वेषां यद्विद्यापीठपरीक्षोत्तीर्णेभ्यः आयुर्वेदभिषक्, आयुर्वेदविशारदः, आयुर्वेदाचार्यः, इत्येवंविधास्तिस्रः पदव्यः समर्प्यन्त इति। निखिलभारतायुर्वेदविद्यापीठस्य प्रतिष्ठापनायाः पूर्वमेव काश्चन आयुर्वेदाध्यापनसंस्था आसन्। आनन्तरिके च काले काश्चिन्नवीनाः संस्थापिताः सन्ति। सर्वाभिरेताभिः स्वकीयपाठ्यक्रमानुसारं समुत्तीर्णेभ्यश्छात्रेभ्यः स्वकीयाः पदव्यः समर्प्यन्ते प्रमाणपत्राणि वा वितीर्यन्ते। विद्यापीठपरीक्षास्तु सकलभारतीयवैद्यसम्मतपाठ्यक्रमानुसारेण भवन्ति, अतः परीक्षाणामेतासां किमपि वैशिष्ट्यं विद्यते इति सर्वे मन्यन्ते। तत्तत्प्रान्तीयेभ्यः पाठशालाविद्यालयेभ्यः तत्तत्प्रान्तस्थेभ्यो वा व्यक्तिशो गुरुभ्यः छात्राः समागत्य विद्यापीठपरीक्षां ददति पदवीश्च प्राप्नुवन्ति। परारि ( १९३३ ) ई० वर्षस्य मार्चमासि संयुक्तप्रान्तीयया 'बोर्ड ऑफ इंडियन् मेडिसिन्" इत्याख्यया राजशासनसंस्थया निखिलभारतीयविद्यापीठपदवीप्रमाणपत्राणि सम्मानितानि। अन्यप्रान्तीयाश्चापि राजशासनसंस्थाः एवमेव अचिरान् कुर्युरिति सुस्पष्टं प्रतिभाति। मद्रपुरे तु सुमहानेक आयुर्वेदविद्यालयः राजकीयधनव्ययेन प्रचाल्यते। अथ भविष्यति काले सर्वाभिरनेकाभिर्वा प्रान्तीयराजकीयसंस्थाभिः सम्मानितासु विद्यापीठपदवीषु विद्यापीठपरीक्षाणां वैशिष्ट्यं अधिकतरत्वेन मन्यमानाः निखिलभारतीयाश्छात्राः विद्यापीठीया एव पदवीः कामयमानाः भिषग्विशारदाचार्यपरीक्षास्तितीर्षवो विशेषतो भविष्यन्ति। अखिले भारते वर्षे आयुर्वेदाध्यापनपद्धतिरेकसूत्रा भवितुमर्हतीति सम्यग् विचार्य तत्तदायुर्वेदशिक्षणसंस्थानां कथमेकीकरणं विधेयं, विद्यापीठेन सह तासां सम्बद्धता च कथं करणीया इत्येतद्विषये विद्यापीठेन उपक्रमः कृत एव। तस्मिन्नेव यथापूर्वं किन्तु दीर्घतरप्रयत्नैः प्रचाल्यमाने कश्चन एतादृशः कालः उपस्यते यदा सर्वा अपि आयुर्वेदशिक्षण-

संस्थाः विद्यपीठेन सह सम्बद्धा भवेयुः, सर्वत्र च एक एव पाठ्यक्रमः प्रचलेत्, विद्यापीठनिर्मितानि च पदवीप्रमाणपत्राणि सर्वमान्यानि भवेयुः। भिन्नभिन्नसंस्थानां स्वकीयोपाधिवितरणलोभोऽपि तदा नश्येत्। क्षुद्रहेतुं मनसि निधाय याभिः संस्थाभिः साम्प्रतं पदवीप्रमाणपत्राणां विक्रय इव क्रियते तासां तु तत्कर्म यद्यैव विद्वज्जनतिरस्कृतं संजातं तत्तदानींतने काले अवश्यमेव उपहास्यतां गच्छेत्। याश्च संस्थाः विद्यापीठेन संबद्धाः सन्ति, याभिश्च अधुनैव सम्बद्धता प्रार्थिताऽस्ति, तासां नामावलिः ८ परिशिष्टे द्रष्टव्या।

'श्रीधूतपापेश्वर आयुर्वेदट्रस्ट पनवेल' इत्याख्यया संस्थया स्वकीयनियमानुसारेण एवं निश्चितं तदनुरोधाच्च उपक्रमोऽपि व्यधायि यद्विद्यापीठस्य तिसृषु परीक्षासु प्रतिवत्सरं ये स्नातकाः सर्वप्रथमा भवन्ति तेभ्यश्च आचार्यविशारदभिषग्भ्यः क्रमेण १ श्रीधूतपापेश्वर पारितोषिकं (२५ मुद्रात्मकं) २ कै. विष्णुशास्त्रिपुराणिक पारितोषिकं (२१ मुद्रात्मकं) तथा च ३ कै. कृष्णशास्त्रिपुराणिक पारितोषिकं (१५ मुद्रात्मकं) वितरणीयम्। एवं संस्थया चानया गतसंवत्सरत्रितयं स्वकीयप्रशस्तिपत्रप्रदानपुरःसरं वैद्यमहासम्मेलनसभापतिहस्तेनैव एतत्पारितोषिकप्रदानं नियोजितम्। तदर्थं च संस्थेयं नितरां धन्यवादार्हा। तथा च यैः किल विद्यापीठस्नातकेभ्यः स्वर्णरौप्यपदकानि प्रदत्तानि तेषामपि नैकसज्जनानां उपकारभरं विद्यापीठं शिरसि धारयति। तेषां च तालिका ५ परिशिष्टे दर्शिता।

## ११ विद्यापीठोत्कर्षोपायाः

पण्डितवरेण्याः, परिस्थितिमेतादृशीं विद्यापीठीयां समवलोक्य यान् खलु उत्कर्षोपायान् प्रदर्शयितुं उद्युंजते मनः, तेषां दिग्दर्शनमेव क्रियते।

१ पूर्वेतिहासो विद्यापीठस्य परमोज्ज्वल इति नास्त्यत्र कोऽपि संशयलेशः। किन्तु भारते वर्षे नवनवीनानां समागतानां शास्त्रीयत्वादेव प्रसारं प्राप्तवतीनां आयुर्वेदेतरचिकित्सापद्धतीनां प्रमुखतोऽपि आयुर्वेदोत्कर्षचिकिर्षूणां वैद्यानां एतदवश्यं करणीयं वर्तते यत्तैः अन्येषु चिकित्साशास्त्रेषु यत्किंचिदुपयुक्ततरं भवेत्तत्सर्वं आत्मसात् करणीयम्। तथा च प्रयतेत यथा आयुर्वेदः सर्वेषां प्रत्ननूत्नानां व्याधीनां प्रतीकारं कर्तुं प्रभवेत्।

२ आदित एव विद्यापीठेन आयुर्वेदछात्राणां केवलं परीक्षाग्रहणमेव अंगीकृतम्। परं च विद्याप्रसारार्थं तस्य प्रमुखं कर्तव्यमेतदेव विद्यते, यत्तेषु तेषु प्रान्तेषु विद्यापीठाधिकृताः आयुर्वेदाध्यापनसंस्थाः संस्थापनीयाः प्रचालनीयाश्च। स्वाधिकारिविद्यालयाभावे सम्बद्धविद्यालयेनापि अंशतः कार्यं भवेत्। अतस्तदर्थमचिरादेव कश्चित् दृढतरः प्रयत्नो विधेयः।

३ 'वैद्यसम्मेलनपत्रिका' नियमेन प्रतिमासमेव प्रकाशनीया, तथा च तस्यां आयु-

वेदसंशोधनात्मकं आयुर्वेदोपबृंहणात्मकं च विषयजातं विवेचनीयं नान्यत्किंचित् चर्वितचर्वणं पिष्टपेषणं धूलिप्रक्षेपणं वा ।

४ विद्यापीठकार्यस्य सम्यक् सम्पादनार्थं कार्यालयस्य चिराय एकस्थलस्थापनमेव वरम् । वारंवारं च तस्य संक्रमणेन नित्यस्यैव कार्यस्य सम्पादने अधिकारिणां नवीनत्वेन संयोजितानां शक्तिह्रासो भवति विशेषं किमपि कार्यं कर्तुं नावसरोऽवशिष्यते । तेषु तेषु प्रान्तेषु व्यवस्थितानां पाठशालाविद्यालयानां प्रत्यक्षत एव सम्यगवलोकनं कृत्वा तेषां एकीकरणार्थं प्रयतमानस्य विद्यापीठमन्त्रिणः, समितेर्वा एतदर्थं नियुक्तायाः, सर्वविधं सौकर्यं यथा भवेत्तथा करणीयम् ।

५ विद्यापीठपरीक्षास्तु एवंविधाः करणीयाः पाठ्यक्रमश्च एतादृशो रक्षणीयः, यत् स्नातकैः आयुर्वेदपारंगतैरपि केवलमेव एकं शास्त्रमधीयानैः, अत एव एकाक्षैरिव न कदापि भाव्यं, प्रत्युत यतो हि प्राणिनां जीवनमरणसंलग्नं आयुर्वेदशास्त्रं सर्वेषां शास्त्राणां मूर्ध्नि तिष्ठति तस्मात् तदनुयायिभिर्भिषग्भिर्वैद्यैः यत्सत्यं बहुश्रुतैर्भाव्यम् ।

६ अनुदिनं वर्धत एव विद्यापीठस्नातकानां संख्या । नियतं सा इतोऽप्यधिकतरां वृद्धिं यास्यति । प्रतिवर्षं विद्यापीठपरीक्षाः कठिनतरा जायन्ते इति केचिद्वदन्ति । केचित्तु तासां इतोऽपि काठिन्यं वाञ्छन्ति भवतु नाम किंचित्काठिन्यं वा सौलभ्यं वा, किन्तु स्नातकाः सर्वे स्वकर्मकुशलाः ज्ञानविज्ञानयुक्ताश्च भवेयुः, इत्येवंविधा विद्यते विद्यापीठस्य अपेक्षा । दातव्यौषधालयाः, रुग्णालयाः, औषधिनिर्माणशालाः, रसशालाः, विद्यालयाः, अन्ये चापि एतादृशाः कार्यालयाः राजकीयधनव्ययेन, अथवा लोकलबोर्ड, म्युनिसिपालिटी इत्याख्याभिर्लोकनिर्मिताभिः संस्थाभिः प्रचालिता वा बहवः सन्ति सर्वेषु प्रान्तेषु । ऐतेषु स्थानेषु यथा विद्यापीठस्नातका एव नियोजिता भवेयुस्तथा विद्यापीठेन प्रयतितव्यं तेन च तेषां वृत्तिलाभो भवेत्, लभ्येत च तैः स्वकर्मकुशलतां प्रकटयितुमवसरः ।

७ केन्द्रस्थानानि विद्यापीठपरीक्षाणां साम्प्रतं यावन्ति सन्ति तानि प्रायः सर्वासामेव परीक्षाणां कृते निर्मितानि सन्ति । तन्माऽभूत् । भिषक्परीक्षार्थं नियमानुसारेण यद्यपि बहूनि केन्द्राणि भवेयुस्तर्हि न कापि हानिः । किन्तु विशारदाचार्यपरीक्षयोः कृते विशिष्टान्येव केन्द्राणि रक्षणीयानि । येषु नगरेषु अत्युच्चशिक्षणव्यवस्था भवेत तेषु एव नगरेषु आचार्यपरीक्षा ग्राह्या । नान्यत्र । केन्द्रव्यवस्था च विद्यापीठेन सर्वत्र विनापि दक्षिणां क्रियते सा न चिराय कार्यकारिणी भवेत् ।

८ विद्यापीठस्य परीक्षकाः सर्वेऽपि विनामूल्यमेव परीक्षणकार्यं कुर्वन्ति । सर्वेऽपि प्रायः विपुलव्यवसायिनो वैद्याः सन्ति । अस्तैरेतत्परीक्षणकार्यं स्वकीयव्यवहारसम्पादनादनन्तरं यथावसरमेव क्रियते । किन्तु बहुधा विद्यापीठेन नियोजिते कालावसरे एतत्परीक्षणं न समाप्तिं गच्छति । केचन परीक्षकाः उत्तरपुस्तकानि निरीक्ष्यापि गुणपत्रके गुणांकलेखनं गुणांकयोजकस्य लेखकस्यैवैतत् कर्म इति मत्वा उपेक्षन्ते ।

उत्तरपुस्तकानां प्राप्तये परीक्षकाः नैकवारं मन्त्रिणा सांञ्जलिवद्धं दण्डवत् प्रणिपत्य च पुनः सूचनापत्रद्वारा प्रार्थ्यन्ते। तथापि कानिचिदुत्तरपुस्तकानि परीक्षाफलप्रकटन-दिवसे एव कार्यालयं प्राप्तानीति वर्तते अनुभवः। इतरविद्यापीठानि यथा कुर्वन्ति तथैवैतत्कार्यं यदि दक्षिणाप्रदानपूर्वकं क्रियेत तर्हि तद्यथानियमं सम्पद्येत इति दृश्यते।

९ विषयप्रधानग्रंथाभावे आयुर्वेदाध्यापनं सर्वत्र त्रुटितं भवति। एतावत्काल-पर्यन्तं यानि खलु एतादृशानि पुस्तकानि विरचितानि सन्ति तानि न विद्यपीठस्या-पेक्षामनुसृत्य कृतानि चापि पर्याप्तानि सन्ति। ये किल विद्वांसः एतत्कार्यं कर्तुं प्रभवन्ति तेभ्यो विद्यापीठेन इत उत्तरं अधिकतरं प्रोत्साहनं प्रदेयम्।

१० आदौ तावत् विद्यापीठेन स्वकीयपाठ्यक्रमः। सर्वथा कार्यक्षमो यथा स्यात्तथा प्रयतितव्यम्। अनन्तरं च आयुर्वेदसंस्थाः तास्ताः स्वसम्बद्धाः करणीयाः। सम्बद्धता-विषये नवीना निश्चिता नियमा अवश्यमेव विधातव्याः। अतोऽनन्तरं इतरसंस्थाभिः पदवीप्रमाणपत्रवितरणं न करणीयं इति नियमः कर्तुं युज्यते। अनेनैव मार्गेण विद्या-पीठीयान्येव पदवीप्रमाणपत्राणि भारतवर्षे सर्वमान्यानि भवेयुः।

श्रेष्ठाः, एतावन्तं विद्यापीठस्य पंचविंशतिवत्सरात्मकं वृत्तान्तं श्रीमतां पुरस्तात् प्रतिष्ठाप्य आयुर्वेदोद्धारपरान् वैद्यवरान् नमस्कृत्य "उद्धरेदात्मनात्मानं नात्मानमव-सादयेत्" इति श्रीमद्भगवदुक्तेः स्फूर्तिदायिनीं स्मृतिं कृत्वा विरम्यते।

पूना } भिषगाचार्यः, त्र्यम्बक शास्त्री आपटे



# पदाधिकारिणः*

## ( प्रथमं परिशिष्टम् )

१९१७ सभापति—वैद्यरत्न पं० डी० गोपालाचार्लु मद्रास ।

उपसभापति—१ आयुर्वेदमार्तंड पं० लक्ष्मीरामस्वामी जयपुर। २ वैद्यरत्न कविराज योगीन्द्रनाथसेन एम० ए० विद्याभूषण कलकत्ता ।

उपमंत्री—१ पं० गिरिजाशंकरशर्मा वैद्य प्रयाग । २ डॉ० लक्ष्मीकांतमणि वैद्य एल० एम० पी० प्रयाग ।

मंत्री—चि० चू० पं० ठाकुरप्रसादमणि वैद्य, प्रयाग ।

१९१९-१९२४ सभापति—वैद्यरत्न कविराज योगींद्रनाथसेन विद्याभूपण ए० ए० कलकत्ता ।

उपसभापति—आयुर्वेदमार्तंड लक्ष्मीरामस्वामी जयपुर। २ वैद्य पं० जगन्नाथ-प्रसाद शुक्ल, प्रयाग ।

उपमंत्री—१ आयुर्वेदभूषण ए. दुरायस्वामी अयंगार एम. एस. सी. मद्रास । २ राजवैद्य ए. सुब्रह्मण्य अय्यर, बी. ए. एम. बी. बी. एस. मद्रास ।

मंत्री—आयुर्वेदाचार्य एन० माधव मेनन. आयुर्वेदभूषण एम. एस. सी. मद्रास ।

१९२६-२७—उपमंत्री पं० प्रसादीलाल झा, कानपुर ।

मंत्री—पं० किशोरीदत्तशास्त्री, कानपुर ।

१९२७ उपमंत्री—सत्यदेवपांडेय वैद्यरत्न आयुर्वेदाचार्य, वेदान्तशास्त्री ।

१९२९ उपमंत्री—पं० सत्यनारायणमिश्र ।

मंत्री—पं० रघुवरदयालुभट्ट काव्यतीर्थ वैद्यशास्त्री ।

१९३० उपमंत्री—पं० सत्यदेवपांडेय ।

वर्षम् १९३१ वत्सरस्य कृते महीशूर संमेलने निर्वाचिताः—सभापतिः पं० यादवजी त्रिकमजी आचार्य आयुर्वेदमार्तण्ड बम्बई ।

उपसभापतिः—१ पं० कृष्णशास्त्री देवधर प्राणाचार्य नासिक । २ पं० गणेश-शास्त्री जोशी वैद्यभूषण पूना ।

विद्यापीठोपमंत्री—१ पं० वामनशास्त्री दातार वैद्यभूषण नासिक । २ पं० अनंतशास्त्री जोशी आयुर्वेद-विशारद पूना ।

वर्षम् १९३२ ग्वालियर संमेलने निर्वाचिताः सभापतिः—पं० कृष्णशास्त्री देव-धर प्राणाचार्य नासिक ।

---

* विद्यापीठ मंत्री-द्वारा प्राप्त यह सूची अपूर्ण है ।

उपसभापतिः—१ पं० गंगाधरशास्त्री गुणे वैद्यपंचानन अहमदनगर। २ पं० गणेशशास्त्री जोशी वैद्यभूषण पूना।

विद्यापीठोपमंत्री—१ अनंतशास्त्री जोशी आयुर्वेदविशारद पूना। २ पं० भास्करशास्त्री धर्माधिकारी वैद्यराज, पाचोरा।

वर्षम् १९३३ बीकानेर संमेलने निर्वाचिताः सभापतिः—पं० लक्ष्मीरामस्वामी आयुर्वेदमार्तण्ड, जयपुर।

उपसभापतिः—१ पं० रामप्रसादजी वैद्यरत्न राजवैद्य पटियाला। २ पं० गंगाधरशास्त्री गुणे वैद्यपंचानन, अहमदनगर।

विद्यापीठोपमंत्री—१ पं० अनंतशास्त्री जोशी आयुर्वेदविशारद, पूना। २ पं० भास्करशास्त्री धर्माधिकारी पाचोरा ( खानदेश )।

वर्षम् १९३४ शिकारपूर संमेलने उपरिनिर्दिष्टा एव निर्वाचिताः।

वर्षम् १९३५ संमेलन न संजातम्। गतसंवत्सरीया एव पदाधिकारिणः।

---

## द्वितीयं परिशिष्टम् केंद्र व्यवस्थापकाः

डॉ. ए. लक्ष्मीपति भिषग्रत्न बी. ए. एम. बी. सी. एम., मद्रास। पं. किशोरीदत्त शास्त्री आयुर्वेदाचार्य, कानपूर। पं. कृष्णविनायक फडके एम. ए., कानपूर। पं. कृष्णशास्त्री कवडे बी. ए. वैद्यपंचानन, पूना। पं. केशव अय्यर, मंगलोर। पं. के. सुब्रह्मण्य शास्त्री, नंद्याल। पं. ख्यालीराम द्विवेदी, इंदोर। कविराज म. म. गणनाथसेन सरस्वती विद्यासागर एल. एम. एस., कलकत्ता। पं. गणेशदत्तशास्त्री, ग्वालेर। पं. गंडीकोटा श्रीनिवासराव वैद्य, राजमहेंद्री। प. गा. हनुमच्छास्त्री, नेल्लोर। पं. गोवर्धनशर्मा छांगाणी वैद्यभूषण भिषक्केसरी, नागपूर। पं. गोपालजी कुवरजी ठक्कर, कराची। पं. चावलीराम मूर्तिशास्त्री आयुर्वेदाचार्य, राजमहेंद्री। पं. जगन्नाथप्रसाद शुक्ल आयुर्वेदपंचानन, प्रयाग। पं. जानकीरामराव, राजमहेंद्री। पं. जे. लक्ष्मीनरसिंह शास्त्री, शिमोगा। पं. टी. रामभद्रय्या, नंद्याला। पं. ठाकुरदत्तवर्मा मुलतानी राजवैद्य, लाहोर। पं. त्र्यंबक भिकाजी हर्डीकर एम. ए., पूना। पं. दयानिधि स्वामी आयुर्वेदाचार्य, बनारस। पं. नारायणदत्त वैद्यराज, देहली। पं. नोरीरामशास्त्री ए. के. ए. सी. आयुर्वेदभूषण, बेजवाडा। पं. पंढरीनाथ दामोदर मुळे, अमरावती। प. प्रतिवादी भयंकर श्रीनिवासाचार्य, राजमहेंद्री। पं. पाध्ये शास्त्री, हैद्राबाद। प्रिंसिपल डूंगर कॉलेज, बीकानेर। पं. बी. एल. सार्नेलिस सिल्वा आयुर्वेदभूषण, कोलम्बो। पं. बी. एल. सासोमन सिल्वा बी. एस्-सी., कोलम्बो। पं. भिकाजी विनायक डेंगवेकर, एम्. ए. एल-एल. बी. एम्. एस्-सी, जबलपूर। पं. मगूनि मिश्र, पुरी। पं. म. शं. गोडबोले एम. ए., पूना। पं. मस्तरामशास्त्री आयुर्वेदाचार्य, रावलपिंडी। पं.

महाकाली सुब्रह्मण्य पंतुलु, राजमहेंद्री। प० मुरलीधर मिश्र व्याकरणाचार्य, मथुरा। प० रघुवरदयालु भट्ट आयुर्वेदाचार्य, कानपूर। प० रविशंकर त्रिवेदी राजवैद्य, अहमदाबाद। प० रामनारायण मिश्र आयुर्वेदभूषण, लखनऊ। प० रामचंद्रजी साहब राजवैद्य, अजमेर। प० रामप्रसादजी राजवैद्य आयुर्वेदाचार्य, मथुरा। प० रामदयालु शर्मा राजवैद्य, अजमेर। प० रामेश्वरशास्त्री शुक्ल आयुर्वेदाचार्य, ग्वालेर। प० रंगलाल ओझा, कराची। प० व्रजविहारी चतुर्वेदी आयुर्वेदरत्नाकर, वाँकीपूर। प० वामनशास्त्री दातार वैद्यभूषण, नासिक। प० वासुदेवशास्त्री ऐनापुरे प्राणाचार्य, मुंबई। डॉ० वाय पार्थनारायण पंडित, शिमोगा। प० श्याममनोहर मिश्र, कराची। प० श्रीपादशास्त्री हसूरकर काव्यव्याकरणवेदान्ततीर्थ, इंदोर। प्रो० शंकर वामन दांडेकर एम० ए०, पूना। प० सेवाराम चतुर्भुज, कराची।

## तृतीयं परिशिष्टम् ( केंद्राणि )

पुरातनकेंद्राणि—१ अकोला, २ आजमगढ़, ३ अवोहर, ४ अमृतसर, ५ अम्वाला, ६ अलीगढ़, ७ इस्लामनगर, ८ गढ़मुक्तेश्वर, ९ गोहाना, १० चंदौसी, ११ जम्भू, १२ जाफना, १३ पीलीभीत, १४ पुरी, १५ वदायूं, १६ वरेली, १७ वलिया, १८ बुलंदशहर, १९ महेंद्रगढ़, २० मिश्रिक, २१ मुजफ्फरनगर, २२ मुरादाबाद, २३ मैनपुरी, २४ रायगढ़, २५ लुधियाना, २६ सांवरलेक, २७ हरिद्वार, २८ हाथरस, २९ हिसार, ३० हैद्राबाद ( सिंध )

प्रचलितकेंद्राणि—१ अजमेर, २ अमरावती, ३ अहमदाबाद, ४ इंदोर, ५ कराची, ६ कलकत्ता, ७ कानपूर, ८ कोलम्बो, ९ ग्वालियर, १० जवलपूर, ११ देहली, १२ नागपूर, १३ नासिक, १४ पूना, १५ प्रयाग, १६ वंगलोर, १७ वनारस, १८ वम्बई, १९ वांकीपूर, २० वीकानेर, २१ वेजवाड़ा, २२ मथुरा, २३ मद्रास, २४ राजमहेंद्री, २५ रावलपिंडी, २६ लखनऊ, २७ लाहोर, २८ शिलोन, २९ हृषीकेश।

उपकेंद्राणि—१ नेल्लोर, २ नंयाला, ३ हैद्राबाद ( सिंध )

## चतुर्थपरिशिष्टम् ( परीक्षकाः )

पं० अनंत यज्ञेश्वरजोशी आयुर्वेदाचार्य, पूना। पं० अनंताचार्य आद्य-काव्यतीर्थ, विजापूर। पं० अमृतलाल प्राणशंकर पट्टणी वैद्यराज, लिमडी। पं० अंबाशंकरजी त्रिवेदी राजवैद्य, अहमदाबाद। डॉ० आसानंद एम. वो. वी. एस., लाहोर। पं० उपेंद्रनाथ दास आयुर्वेदाचार्य, देहली। डॉ० ए. लक्ष्मीपति भिषग्रत्न वी. ए.

एम. बी. सी. एम., मद्रास। डॉ० एल. रामकृष्ण; मद्दीशूर। पं० एम. दुराई स्वामी आयुर्वेदभूषण, मद्रास। डॉ० ए. रामन् आयुर्वेदाचार्य, कलकत्ता। डॉ० एम. आर. स्वामी एम. डी. पी. एच. डी, बंगलोर। डॉ० एन. माधव मेनन ए. एम. ए. सी. आयुर्वेदाचार्य, मद्रास। प० कन्हैयालाल आयुर्वेदाचार्य, मुंबई। प० किशोरीदत्तशास्त्री आयुर्वेदाचार्य, कानपूर। प० कृष्णशास्त्री कवडे बी. ए. वैद्यपंचानन, पूना। प० कृष्णशास्त्री देवधर प्राणाचार्य, नासिक। प० कृष्णलालजी वाजपेयी, मेरठ। प० कृष्णाजी बलवंत रिसबूड, ब्रह्मावर्त बिठूर। प० कृ. श्री. म्हसकर एम. ए. बी. एस-सी. एम. डी. डी. पी. एच. डी. टी. एम. एच., मुंबई। प० ख्यालीराम द्विवेदी आयुर्वेदाचार्य, इंदोर। डॉ० ग. द. आपटे एम. बी. बी. एस., पूना। प० गणेश-शास्त्री जोशी वैद्यभूषण, पूना। कविराज गणनाथसेन सरस्वती, विद्यासागर महा-महोपाध्याय, एल. एम. एस, कलकत्ता। प० गोपालजी कुवरजी ठक्कर, कराची। प० गोविन्दप्रसाद शास्त्री, जबलपूर। प० गंगाधरशास्त्री गुणे वैद्यपंचानन, अहमद-नगर। प० गोवर्धनशर्मा छांगाणी वैद्यभूषण भिषक्केसरी, नागपूर। प० गंगाविष्णु पांडेय विद्याभूषण, जबलपूर। प० घनानंदपंत वैद्य साहित्याचार्य, देहली। प० चावलीराममूर्ति शास्त्री आयुर्वेदाचार्य, राजमहेंद्री। प० चंद्रशेखरशास्त्री, कानपूर। प० छोटेलालजी वैद्य, कराची। प० जी० श्रीनिवासमूर्ति कॅप्टन. बी. ए. बी. एल. एम. बी. सी. एम., मद्रास। प० जगन्नाथप्रसाद शुक्ल आयुर्वेदपंचानन, प्रयाग। प० जगन्नाथप्रसाद वाजपेयी, बनारस। डॉ० जे. डी. ध्रुव. एफ. आर. सी. एस्., बम्बई। प० ठाकुरदत्तवर्मा मुलतानी वैद्यराज, लाहोर। प० त्र्यंबकशास्त्री आपटे भिषगाचार्य, पूना। प० दत्तात्रय अनंत कुलकर्णी आयुर्वेदाचार्य एम. एस. सी., बनारस। प० दामोदरप्रसाद वैद्यराज, मुंबई। प० दुर्गाप्रसादजी, जयपूर। प० दुर्गाशंकर के. शास्त्री, मुंबई। प० दुर्गादत्तशास्त्री आयुर्वेदशास्त्राचार्य, बनारस। डॉ० दुर्गाप्रसादजी दवे एम. बी. बी. एस., मुंबई। प० नरसिंह नरहर जोशी, रुड़ीहळी। प० नानकचंदशर्मा आयुर्वेदाचार्य, लाहोर। प० नारायणशंकर देवशंकर वैद्यशास्त्री प्राणाचार्य, अहमदाबाद। प० नारायणदत्तजीशर्मा, देहली। प० नोरीराम-शास्त्री ए. के. ए. सी. आयुर्वेदभूषण, बेजवाड़ा। प० नागरलाल मोहनलाल पाठक आयुर्वेदाचार्य, पाटण। प० नारायणशास्त्री वाडीकर, पूना। प० पुरुषोत्तमशास्त्री नानल आयुर्वेदाचार्य, पूना। श्री प्रतापसिंहजी कविराज रसायनाचार्य, बनारस। प० पोपटप्रभुराम, मुंबई। प० बलदेवशास्त्री आयुर्वेदाचार्य, लाहोर। प० बी. एल. सार्नेलिससिल्वा आयुर्वेदभूषण, कोलंबो। डॉ० बालकृष्ण अमरजी पाठक एम. बी. बी. एस, अहमदाबाद। प० भागीरथस्वामी महामहोपाध्याय रसायनाचार्य आयुर्वेदाचार्य, कलकत्ता। प० भगवानलाल त्रिभुवन भट्ट, मुंबई। प० भि. वि. डेगवेकर एम. ए. एल. एल. बी. एम. एस. सी, जबलपूर। डा० भा. गो.

घाणेकर एम. बी. बी. एस. आयुर्वेदाचार्य, बनारस। प० भानुशंकर निर्भयराम, भावनगर। प० मनोहरलाल वैद्यराज, देहली। प० मगूनि मिश्र, पुरी। डॉ० म. वि. आपटे एम. बी. बी.' एस. बी. एस्-सी., पूना। प० मणिशंकर नानालाल आयुर्वेदाचार्य, मुंबई। प० मणिशंकर मूवजी शास्त्री, मुंबई। प० मनीराम शर्मा आयुर्वेदाचार्य, रामगढ़। प० महाशंकर नरोत्तम वैद्यराज, भूज। प० मूलशंकर मोतीराम वैद्यराज, ध्रांगध्रा। प० मस्तराम शास्त्री आयुर्वेदाचार्य, रावलपिंडी। प० माधवप्रसाद एन. शास्त्री विद्याभूषण, अहमदाबाद। प० माधवजी गोपालजी दवे, मुंबई। प० यादवजी त्रिकमजी आचार्य आयुर्वेदमार्तंड, मुंबई। प० योगी रामनाथ शास्त्री, रावलपिंडी। प० रघुनाथशास्त्री जोशी, पूना। प० रामेश्वरशास्त्री शुक्ल आयुर्वेदाचार्य, ग्वालेर। प० रामनारायण मिश्र वैद्यशास्त्री, लखनऊ। प० राजेश्वरदत्त शास्त्री, बनारस। प० रंगलाल ओझा, कराची। प० रामशास्त्री शिकरकर, येवले। प० रामनारायण घनशाम, बड़ोदा। प० रामशंकर मालवीय राजवैद्य, बनारस। प० लक्ष्मीराम स्वामी आयुर्वेदमार्तंड, जयपूर। प० लक्ष्मीशंकर रामकृष्णशास्त्री आयुर्वेदाचार्य, अहमदाबाद। प० ब्रजविहारी चतुर्वेदी आयुर्वेदरत्नाकर, पटना। प० वामनशास्त्री दातार वैद्यभूषण, नासिक। प० वामदेवजी मिश्र, पटना। प० वामनदीनानाथ वैद्य, मुंबई। डॉ० वाय लक्ष्मी नरसिंहशास्त्री आयुर्वेद भिषक् चूडामणि एल. एम. बी., मैसूर। डॉ० वि. म. भट बी. ए. एम. बी. एस., येवले। प० विद्यारत्न त्रिपाठी आयुर्वेदाचार्य, हर्दोई। प० शिवशर्मा आयुर्वेदाचार्य, लाहोर। प० शिवशर्मा, पटियाला। प० शिवचंद्र शर्मा, मुजफ्फरपूर। प० शिवकंठजी मिश्र आयुर्वेदाचार्य, कानपूर। प० श्याम मनोहर मिश्र रसवैद्य, कराची। प० शालिग्राम शास्त्री आयुर्वेदाचार्य, लखनऊ। प० श्रीदत्त वैद्यराज, भिवानी। प० सुखरामदास टी. ओझा प्राणाचार्य, कराची। प० सुरेंद्र मोहन बी. ए. आयुर्वेदाचार्य, लाहोर। प० हरिप्रपन्नजी वैद्यराज, मुंबई। प० हरिशंकर शर्मा, हरिद्वार। प० हरिदत्तजी पांडेय वैद्यरत्न, पिलीभीत। प० हरीशास्त्री पराडकर, अकोला। प० हरीरंजन मजुमदार एम. ए., देहली। प० हाराणचंद्र चक्रवर्ती कविराज, कलकत्ता। प० हरीनारायण शर्मा कविराज, काव्यतीर्थ आयुर्वेदाचार्य, प्रतापगढ़। प० हजारीलाल शुक्ल, पटना। प० ज्ञानेन्द्रदत्त त्रिपाठी, सीतापुर।



## पंचमं परिशिष्टम्

अद्यावधि दत्तानां पदकानां पारितोपिकानां च तालिका

| | आचार्येभ्यः | | विशारदेभ्यः | | भिषग्भ्यः | | |
|---|---|---|---|---|---|---|---|
| ईशवीयः वत्सरः | स्वर्ण | रौप्य | स्वर्ण | रौप्य | स्वर्ण | रौप्य | |
| १९१२ | ... | ... | १ | ... | ... | ... | |
| १९१३ | ... | ... | ... | २ | ... | ... | |
| १९१४ | ... | ... | १ | २ | ... | १ | |
| १९१५ | ... | ... | १ | ४ | ... | १ | |
| १९१६ | १ | ... | १ | १ | ... | १ | |
| १९१७ | ... | ... | १ | १ | ... | १ | |
| १९१८ | ... | ... | ... | ... | ... | ... | |
| १९१९ | १ | ... | ... | ... | २ | ... | स्वर्णपदद्वयं स्त्रियोरेवदत्तम् । |
| १९३१ | | | | | | | |
| १९३२ | | | | | | | |
| १९३३ | १ | | १ | | १ | | श्रीधूतपापेश्वर पारितोपिकानि । |
| १९३४ | १ | | १ | | १ | | |
| १९३५ | १ | | १ | | १ | | |





## षष्ठं परिशिष्टम्

ईशवीय १९१२ वर्षदारभ्य अद्यावधि ( १९३५ ) विद्यापीठस्य विविधासु परीक्षासु प्रविष्टानां परीक्षार्थिनां तथा उत्तीर्णानां स्नातकानां च संख्या विवरणम् ।

| | | आचार्य | | विशारद | | भिषक् | |
|---|---|---|---|---|---|---|---|
| क्रम | वर्षम् | उपस्थिताः | उत्तीर्णाः | उपस्थिताः | उत्तीर्णाः | उपस्थिताः | उत्तीर्णाः |
| १ | १९१२ | ... | ... | १ | १ | ... | ... |
| २ | १९१३ | १ | ... | १६ | ५ | ... | ... |
| ३ | १९१४ | २ | ... | १४ | ९ | ९ | ४ |
| ४ | १९१५ | ८ | ४ | ४८ | १६ | ३५ | १४ |
| ५ | १९१६ | १० | ८ | ७७ | ४० | ४४ | १३ |
| ६ | १९१७ | २० | ४ | ६० | ३२ | ७९ | ४५ |
| ७ | १९१८ | ३३ | २ | ५३ | ७ | ९७ | १३ |
| ८ | १९१९ | २७ | ६ | ६२ | ११ | १०१ | १५ |
| ९ | १९२० | ४६ | १४ | ९० | २० | १८९ | ४८ |
| १० | ९१२१ | २७ | ११ | १०९ | २८ | १८१ | ३९ |
| ११ | १९२२ | २५ | ३ | १२३ | ३९ | १७४ | ५५ |
| १२ | १९२३ | ४१ | १३ | १६५ | ७६ | २०१ | ७७ |
| १३ | १९२४ | ६८ | ११ | १८५ | ७३ | २५६ | ७३ |
| १४ | १९२५ | ७२ | १७ | १२७ | ४५ | २२४ | ७१ |
| १५ | १९१६ | ७४ | १४ | १४९ | २३ | २५२ | ९७ |
| १६ | १९२७ | ८० | १५ | २०७ | ३९ | २८९ | ८६ |
| १७ | १९२८ | ६२ | २१ | १९३ | ४६ | ३०७ | ७३ |
| १८ | १९२९ | ६० | १५ | १८९ | ३९ | ३१७ | ६७ |
| १९ | १९३० | ८३ | १४ | २६९ | ५७ | ३८३ | १२८ |
| २० | १९३१ | ५९ | ५ | २४६ | ३७ | ३४४ | ८४ |
| २१ | १९३२ | ७७ | ६ | २७९ | ३४ | ३७६ | १०५ |
| २२ | १९३३ | ६० | ९ | ३१४ | ६४ | ४४९ | १५८ |
| २३ | १९३४ | ८३ | १७ | ३४० | ६७ | ५६४ | १११ |
| २४ | १९३५ | १०५ | १५ | ३२२ | ७९ | ७३७ | २५४ |
| | | ११२३ | २२४ | ३६३८ | ८८७ | ५६०८ | १६३० |

सर्वे उपस्थिताः १०३६९ सर्वे उत्तीर्णाः २७४१

स्थानाभावके कारण विद्यार्थियोंकी नामावली नहीं दी जा सकी है ।

## सप्तमं परिशिष्टम्

उत्तीर्णानां परीक्षार्थिनीनां संख्या

| वत्सरः | विशारद | भिषक् |
|---|---|---|
| १९१९ | ... | २ |
| १९२० | ... | २ |
| १९२३ | २ | २ |
| १९२४ | ३ | १ |
| १९२५ | ... | १ |
| १९२७ | १ | १ |
| १९२८ | १ | १ |
| १९३० | ... | १ |
| १९३१ | १ | ३ |
| १९३२ | ... | १ |
| १९३३ | ... | ४ |
| १९३४ | ... | १ |
| १९३५ | ... | ४ |
| | ८ | २४ |

## विद्यापीठसंबद्ध संस्थाः, अष्टमं परिशिष्टम्

१ बाबा कालीकमलीवालेका आयुर्वेदविद्यालय, हृषीकेश। प० दयानिधिस्वामी, आयुर्वेदाचार्य।

२ बनवारीलाल आयुर्वेदविद्यालय, देहली। प० सूरजनारायण।

३ मोहता आयुर्वेदविद्यालय, बीकानेर। प० चंद्रशेखरशर्मा आयुर्वेदाचार्य।

४ आयुर्वेदविद्यालय, अजमेर। प० लक्ष्मीनारायणशर्मा आयुर्वेदभूषण।

५ संस्कृतमहाविद्यालय, इंदोर। न्याय-व्याकरण-वेदान्ततीर्थ प० श्रीपादशास्त्री हसूरकर।

६ आयुर्वेदपाठशाला, लक्ष्मीदासस्ट्रीट, कराची। प० कृष्णदास ओझा।

७ विदर्भ आयुर्वेदविद्यालय, अमरावती। प० पंढरीनाथदामोदरमुवे वैद्य।

८ वाशिष्ट आयुर्वेदविद्यालय, कराची। चि० चू० प० होरामशर्मा वाशिष्ट।

९ गंगाराम छबीलदास आयुर्वेदविद्यालय; येवलें। डा० वि. भ. भट, बी. ए. एम. बी. बी. एस.।

१० आयुर्वेदमहाविद्यालय, अहमदनगर। वैद्यपंचानन गंगाधरशास्त्री गुणे।

११ आयुर्वेदविद्यालय, इतवारी, नागपूर। क० लक्ष्मीकांतदामोदर पुराणिक।

१२ आयुर्वेदविद्यालय कर्नलगंज, कानपूर। प० युगलकिशोरशास्त्री आयुर्वेदाचार्य।

१३ वेद संस्कृत कलाशाला आयुर्वेदशाखा, नेल्लोर। प० जी. हनुमच्छास्त्रीगारु।

१४ बी. एस. ए. केमिकल कॉलेज गोंदिया सी. पी.। राजवैद्य प० शिवबालक-द्विवेदी वैद्यशास्त्री।

१५ तक्षशिला अष्टांगायुर्वेदविद्यालय, रावलपिंडी। प० मस्तरामशास्त्री, आयुर्वेदाचार्य।

१६ महाराष्ट्र आयुर्वेदविद्यालय कांदावाड़ी, मुंबई। वैद्य रा. म. पुराणिक।

---

## प्रार्थितविद्यापीठसम्बद्धताः संस्थाः

१ आयुर्वेदविद्यालय राजुला। राजवैद्य धीरजराम दयारामशास्त्री।

२ विश्वनाथ आयुर्वेदविद्यालय मेस्ट्रीट, कलकत्ता। म. म. क. गणनाथसेन सरस्वती विद्यासागर एम. ए. एल. एम. एस.।

३ निखिलभारतवर्षीय सं० साहित्य विद्यापीठ महादारुएस्ट्रीट, जालंधर। प० वेदव्यासशर्मा।

४ संस्कृतपाठशाला पचपुखरा, फर्रुकाबाद। प० हीरालालशास्त्री आयुर्वेदाचार्य।

५ आयुर्वेदविद्यापीठ बेलगाँव ( कर्नाटक लिंगायत एजुकेशन सोसायटी )। प० एन्. सी. नंदीमठ।

६ शिवकैलाश आयुर्वेदविद्यालय बागेश्वर, अलमोडा। डॉ० के. डी. तलवीयन्. एच्. एल. एम. एस.।



श्रीमान् स्वर्गीय महामहोपाध्याय कविराज श्रीद्वारिकानाथसेनजी कलकत्ता ।

# भारत-सरकार-द्वारा सम्मानित वैद्य

भारतवर्षमें जबसे ब्रिटिश राज्य स्थापित हुआ है, तबसे आयुर्वेदके प्रति राज्य-की सदा उदासीनता ही रही है। राज्यका चिकित्सा-विभाग पाश्चात्य चिकित्सकोंके हाथमें होनेके कारण समय-समयपर आयुर्वेदकी उन्नतिका प्रलोभन देकर मेडिकल कालिजोंके लिये चन्दे एकत्र किये गये। और कहीं-कहीं आयुर्वेद पढ़ानेकी आयोजना भी की गई। किन्तु अवसर मिलते ही सब बाद कर दिये गये। और मेडिकल रजिस्ट्रेशन ऐक्ट बनाया गया। उसमें आयुर्वेद संस्थाओंके साथ कार्य करनेवाले पाश्चात्य चिकित्सक भी अयोग्य समझे गये। एवं उसके फलस्वरूप आयुर्वेदीय संस्थामें कार्य करनेवाले डाक्टरोंको राज्यके न्यायालयोंकी शरणमें जाकर अपने सम्मानकी रक्षा करनी पड़ी। उसके बाद कुछ राज्यकी नीतिमें परिवर्तन हुआ। और वैद्योंके सम्मान करनेकी योजना व्यवहारमें आने लगी। इसका वर्णन आगे किया जावेगा।

यह अवश्य है कि वैद्योंने जहाँ तहाँ चिकित्सामें अत्यन्त प्रतिभा प्रकाशित की है। और उपरोक्त नीतिके परिवर्तनके पूर्व भी कलकत्तेके प्रसिद्ध कविराज स्वर्गीय द्वारकानाथसेन महोदयको महामहोपाध्यायकी पदवी प्रदान कर सरकारने सम्मानित किया था। कविराज विजयरंजनसेनको भी महामहोपाध्यायकी पदवी प्रदान की थी। आप भारतमें सर्वख्याति प्राप्त चिकित्सक थे। आप इतने लोकप्रिय थे कि आपके दिवंगत होनेपर कलकत्ताकी जनताने विडन् स्कायरमें आपकी संगमरमरकी मूर्ति स्थापित कर आपके यशको चिरस्थाई किया। आपके परिवारमें परम्परागत वैद्यक व्यवसाय चला आ रहा है। आपके सुपुत्र श्रीमान् कविराज योगीन्द्रनाथसेन एम. ए., महोदयको भी "वैद्यरत्न" की पदवी प्रदान कर सम्मानित किया।

बंगालमें इस समय जगत प्रसिद्ध कविराज गणनाथसेन सरस्वती, विद्यासागर, प्राणाचार्य, एम. ए., एल. एम. एस. महोदयको महामहोपाध्यायकी पदवी प्रदान कर सम्मानित किया है।

महामहोपाध्याय कविराज द्वारकानाथसेन महोदयस्य प्रतिमूर्तिः।
जन्मतिथिः—भाद्रपद शुक्ला अष्टमी वै० सं० १९००।
स्वर्गवासतिथिः—माघ कृष्णा षष्ठी वै० सं० १९६४।

आयुर्वेदैकदीक्षागुरुरमलमतिर्मन्दरः शास्त्रसिन्धोः
शिष्येषु स्नेहपूर्णः सुविमलचरितः कोविदानाम् वरेण्यः।
पृथ्वीप्रख्यातकीर्तिर्गुणिगणसहितः पुण्यकारुण्यराशि-
रासीत् सद्वैद्यवृन्दामलमुकुटमणिर्द्वारकानाथ सेनः॥१॥

प्रतिमूर्तिरियं तस्य स्मृत्यै प्रस्तर-निर्मिता।
स्थापिता गुण संमुग्धैर्भक्त्या तद्देशवासिभिः ॥२॥

निम्नलिखित वैद्योंको भी "वैद्यरत्न" की उपाधिसे सम्मानित किया गया है—

श्रीमान् प० डी. गोपालाचार्लु महोदय प्रिंसिपल, मद्रास आयुर्वैदिक कालेज—(स्वर्गीय)।

श्रीमान् प० गोपालाचार्लु महोदय, वहरामपुर, मद्रास प्रेसिडेंसी।

श्रीमान् कैप्टन जी० श्रीनिवासमूर्ति महोदय, प्रिंसिपल गवर्नमेंट स्कूल आफ इण्डियन मेडिसिन, मद्रास।

श्रीमान् वैद्यभूपण प० दुरै स्वामी अयंगर महोदय, मद्रास।

श्रीमान् ब्रह्म श्री मांगूनी मिश्र महोदय, पुरी (उडीसा, स्वर्गीय)।

श्रीमान् प० रामप्रसादजी राजवैद्य महोदय, पटियाला स्टेट (पंजाव)।

श्रीमान् कविराज कालिदास सेन महोदय, कलकत्ता।

श्रीमान् प० त्र्यम्बकजी शास्त्री महोदय, काशी।

श्रीमान् प० रामरतनजी वैद्यराज महोदय, स्यालकोट।

श्रीमान् प० टी. परमेश्वरन् मूसः कोडाकरम्, दक्षिण मलावार।





श्रीमान् स्वर्गीय महामहोपाध्याय कविराज श्रीविजयरत्नसेनजी कलकत्ता ।

# प्रान्तीय वैद्यसम्मेलनोंका वृत्तान्त

## संयुक्तप्रान्तीय वैद्य सम्मेलन

निखिलभारतवर्षीयवैद्यसम्मेलन स्थापित होनेके बाद विहार, बंगाल, आन्ध्र और द्रविड़ प्रान्तोंमें भी प्रान्तीय वैद्यसम्मेलन स्थापित हो गये; किन्तु संयुक्तप्रान्तमें संवत १९७५ के पहले स्थापित नहीं हो सके।

प्रधान सम्मेलनका कार्यालय बदलनेके बाद संयुक्तप्रान्तका ध्यान प्रान्तिकसम्मेलन करनेकी ओर भी आकर्षित हुआ। अतएव संयुक्तप्रान्तका प्रथम सम्मेलन कानपुर नगरमें हुआ। प० रघुवरदयालुभट्ट वैद्यशास्त्री और प० सत्यदेवपाण्डेय आयुर्वेदाचार्यने मन्त्रीके रूपमें इस प्रान्तिकसम्मेलनको बराबर उन्नतदशामें पहुँचाया है।

संयुक्तप्रान्तीय वैद्यसम्मेलनका प्रथम अधिवेशन—पौष कृष्ण ५ रविवार सं० १९७५ तदनुसार २२ दिसम्बर सन् १९१८ से तीन दिनों तक काशीके सुप्रसिद्ध विद्वान् चिकित्सक पण्डित गणेशदत्तजी शास्त्रीके सभापतित्वमें हुआ। सम्मेलन बड़ी सफलता और उत्साहसे तथा ठाठके साथ हुआ। स्वागतकारिणीके सभापतिकी वक्तृता संयुक्तप्रान्तीय वैद्यक कार्योंका दिग्दर्शन करानेवाली और प्रधान सभापतिकी वक्तृता समयोचित और विद्वत्तापूर्ण थी। कई अच्छे निवन्ध पढ़े गये। संयुक्तप्रान्तीय म्युनिसिपलवोर्ड और डिस्ट्रिक्टवोर्डोंमें आयुर्वेदिक औषधालय खोलने, वैद्योंके सार्टिफिकेट स्थानिक संस्थाओं और सरकारी विभागोंमें मान्य कर, संयुक्तप्रान्तमें एक अष्टांगआयुर्वेदविद्यालय खोलने, रियासतों और श्रीमानों द्वारा आयुर्वेदिकऔषधालय खोलने, म्युनिसिपल-हेल्थकमिटियोंमें वैद्योंको भी सम्मिलित करने आदिके कई प्रस्ताव स्वीकृत हुए। इसकी स्वागतकारिणीके सभापति प० कालकाप्रसाद तिवारी वैद्य कानपुर थे। कानपुर म्युनिसिपलवोर्डने अपनी हेल्थकमिटीमें अव वैद्य लेना आरम्भ कर दिया है। इलाहाबाद म्युनिसिपलवोर्ड भी मेडिकल रिलीफ कमिटीमें वैद्य और हकीम लेता है। इसी अवसरपर सम्मेलन सभापतिके करकमलों द्वारा आयुर्वेदविद्यालय कानपुरका भी उद्घाटन हुआ।

संयुक्तप्रान्तीय वैद्यसम्मेलनका दूसरा अधिवेशन—हरदोईमें सं० १९७६ पौष कृष्ण १४ तदनुसार २१ दिसम्बर सन् १९१९ ईस्वीमें तीन दिनों तक बड़े उत्साहके साथ हुआ। स्वागतसभापति वहाँके सिविलसर्जन सुप्रसिद्ध डाक्टर वङ्किमचन्द्र सान्याल थे। नगर और जिलेके रईस, जमीन्दार तथा ताल्लुकेदारोंकी खासी उपस्थिति थी। पण्डित मूलचन्द्रत्रिपाठी राजवैद्यके अथक परिश्रम और उद्योगसे सम्मेलन बहुत ही शानदार हुआ। स्वागतसभापतिका भाषण आयुर्वेदप्रेम और आयुर्वेदकी महिमा

वर्णन करनेवाला था। आपने अस्पतालोंमें भी देशी औषधियोंके व्यवहारकी सलाह दी थी। सम्मेलनके सभापति श्री जगन्नाथप्रसादशुक्ल थे। इस सम्मेलनमें विशेष जोर इस वातपर दिया गया कि सम्मेलनकी ओरसे जो आयुर्वेदविद्यालय वने वह इसी प्रान्तमें वने। मद्रास सरकारकी इस नीतिका विरोध किया कि वह डिस्ट्रिक्टवोर्ड और म्युनिसिपलवोर्डोंको आयुर्वेदिक औषधालयोंको सहायता देनेसे रोकती है। इस सम्मेलनने इण्डियन नेशनल कांग्रेसके पास एक तार भेजा कि देशी चिकित्सापद्धतिके प्रति सरकारी नीति वहुत घातक और हानिकारी होरही है। अतएव कांग्रेस इस विषयको अपने हाथमें ले। इसके परिणामस्वरूप कांग्रेसने पहले पहल देशी चिकित्सापद्धतिके सम्वन्धमें प्रस्ताव पास किया। उस सालकी कांग्रेसका २९ वां प्रस्ताव यों था "(क) यह कांग्रेस आयुर्वेदिक और यूनानी ढंगकी औषधियाँ और चिकित्सापद्धतिका महत्व तथा उपयोगिता वैसेही निश्चित साधनोंका अवलम्वन करे जैसा कि वह पश्चिमी ढंगकी औषधियों और चिकित्सापद्धतिकी रक्षा और प्रचारके लिये करती है। (ख) यह कांग्रेस विगत वर्षके शिमला इम्पीरियल लेजिस्लेटिव कौंसिलके इस निर्णयको कि औषधियोंके सन्तोषजनक ढंगपर प्रचारके लिये स्थानीय सरकारोंकी सम्मति ली जाय, तव तक स्थगित रखनेका विचार प्रकट करती है जवतक कि सरकारसे निर्वाचित वैद्यों-हकीमों तथा आयुर्वेदके अनुभवी विद्वानोंकी एक कमिटी इस विषयमें पूर्ण तरहसे अनुसन्धान न करले।" इसके वाद और भी एक अधिवेशनमें कांग्रेसने देशी चिकित्सापद्धतिका समर्थन किया है।

संयुक्तप्रान्तीय तृतीय वैद्यसम्मेलन—उन्नाव नगरमें लखनऊके वैद्यराज पण्डित रमापति वापेयीके सभापतित्वमें १२ और १३ फरवरी सन् १९२१ में हुआ। स्वागताध्यक्ष पण्डित विश्वम्भरनाथ वाजपेयी वकील थे। स्वागतसभापतिने कहा कि वैद्योंको एक अपना वड़ा विद्यालय अवश्य खोलना चाहिये। यदि उद्योग करें तो हमारे औषधालय वड़े वड़े अस्पतालोंसे कहीं अधिक उपयोगी ठहर सकते हैं।

संयुक्तप्रान्तीय चतुर्थवैद्यसम्मेलन—हरिद्वारमें जव नि. भा. वैद्यसम्मेलनका पन्द्रहवाँ अधिवेशन सन् १९२५ ईस्वीमें हुआ उसी समय संयुक्तप्रान्तीय वैद्यसम्मेलनका चतुर्थ अधिवेशन हरिद्वारमें ही लखनऊके राजवैद्य पण्डित रामनारायण मिश्र आयुर्वेद-भूषणके सभापतित्वमें हुआ। इस सम्मेलनमें प्रस्ताव पास हुआ कि संयुक्तप्रांतीय सरकार देशी चिकित्सापद्धतिकी जाँचके लिये एक इनकायरी कमिटी वना रही है। उसमें वैद्यसम्मेलनका भी प्रतिनिधि होना चाहिये। इस जाँच कमेटीके सभापति स्वर्गीय जस्टिस पण्डित गोकर्णनाथ मिश्र थे। आप देशी चिकित्सापद्धतिके प्रेमी थे। सम्मेलन अपने उद्योगमें सफल हुआ, और श्रीजगन्नाथप्रसाद शुक्ल सम्मेलनके प्रति-निधिरूप इस कमिटीमें सम्मिलित हुए। कमिटीकी रिपोर्टमें आयुर्वेद और यूनानी पद्धति पूर्णरूपसे वैज्ञानिक प्रतिपादित की गयी। इनकी उन्नतिके लिये आयुर्वेद-

विद्यापीठके पाठ्यक्रमके आधारपर पाठ्यक्रम तैयार हुआ। एक स्थायी बोर्ड आफ इण्डियन मेडिसिन्सकी स्थापना हुई। जिसमें अबतक वैद्यसम्मेलनका प्रतिनिधि लिया जाता है।

संयुक्तप्रान्तीय पञ्चम वैद्यसम्मेलन—बरेली नगरमें १९२६ में पीलीभीतके ललितहरि आयुर्वेदविद्यालयके आयुर्वेदाध्यापक आयुर्वेदभूषण पण्डित हरिदत्त पाण्डेय वैद्यराजके सभापतित्वमें हुआ।

संयुक्तप्रान्तीय वैद्यसम्मेलनका छठा अधिवेशन—ऋषिकुल हरिद्वारके वार्षिक उत्सवके समय पं० नारायणदत्तजी शर्मा वैद्यराजके उद्योगसे हरिद्वारमें ज्येष्ठ शुक्ल १० सं० १९८५ तदनुसार २९ मई सन् १९२८ ईस्वीको हुआ। इसके सभापति चिकित्सक-सम्पादक कानपुरके पण्डित किशोरीदत्त वैद्यशास्त्री हुए थे। सभापति महोदयने संभाषाविधिको उत्तेजन देकर आयुर्वैदिक चर्चाका विस्तार करनेपर जोर दिया। ऊर्ध्वाङ्ग चिकित्सापद्धतिकी ओर वैद्योंको विशेष ध्यान देनेके लिए उत्साहित किया गया। वैद्यसम्मेलनके पाठ्यक्रममें उपवैद्य (कम्पौडर) श्रेणीका पाठ्यक्रम रखना और परीक्षाका प्रबन्ध करना आवश्यक बतलाया गया। इसी तरह परिचारक और धात्री शिक्षाके पाठ्यक्रम और परीक्षापद्धति प्रचलित करनेपर भी जोर दिया गया। ऐसी परीक्षाओंके लिये उपयुक्त पुस्तकें तैयार करनेकी ओरभी लेखकोंका ध्यान आकर्षित किया गया।

संयुक्तप्रान्तीय सप्तमवैद्यसम्मेलनका अधिवेशन—आगरा नगरमें सन् १९२९ ईस्वीमें हुआ। आगरेके वैद्यराज पण्डित ब्रह्मानन्दजी दीक्षित आयुर्वेदालंकार आयुर्वेदाचार्यके उद्योगसे यह सम्मेलन बहुत सफल और धूमधामके साथ हुआ। इसके सभापति कानपुरके चिकित्सक चूड़ामणि पण्डित रामेश्वरमिश्र वैद्यशास्त्री थे। आपने इस बातपर जोर दिया कि वैद्यलोग अपनी चिकित्सापद्धति सरल और सबके लिये सुलभ बनानेका प्रयत्न करें। कौमारभृत्यकी शिक्षा और चिकित्साप्रणालीका नये ढंगसे प्रचार करना आवश्यक बतलाया।

संयुक्तप्रान्तीय वैद्यसम्मेलनका आठवाँ अधिवेशन—सीतापुर नगरमें फाल्गुन शुक्ल १ संवत १९८९ में हुआ। इसके लिये सीतापुरके पण्डित मधुसूदनजी दीक्षित वैद्यराजने बड़ा उद्योग किया था। इसके सभापति काशी हिन्दूविश्वविद्यालयके आयुर्वेदाध्यापक पण्डित जगन्नाथप्रसाद बाजपेयी बी. ए. (अब एम. ए.) हुए थे। हिन्दीमें आवश्यक विषयोंकी पुस्तकोंका निर्माण क्रमशः हो रहा है, इसपर सन्तोष प्रकट किया।



## विहारप्रान्तीय वैद्यसम्मेलन ।

विहार प्रान्तीय वैद्यसम्मेलन २० वर्षोंसे विहारमें स्थापित है। आजतक भिन्न-भिन्न स्थानोंमें उसके १३ वार्षिक अधिवेशन हो चुके हैं। अधिवेशनोंके स्थान, सभापति तथा प्रधान मन्त्रीके नाम निम्न निर्दिष्ट हैं—

प्रथम अधिवेशन—वेदरत्न विद्यालय, मुस्तफापुर, पो० खगौल पटना। सभापति—आयुर्वेद पंचानन पं० श्री जगन्नाथप्रसाद शुक्ल भिषङ्मणि, सुधानिधि—सम्पादक—प्रयाग।

द्वितीय सम्मेलन—पटना। सभापति—श्रीमान रायवहादुर कृष्णसहायजी साहव पटना।

तृतीय सम्मेलन—आरा। सभापति—श्रीमान जस्टिस ज्वालाप्रसाद साहव जज हाइकोर्ट पटना।

चतुर्थ सम्मेलन—गया। सभापति—श्रीमान राजा हरिहरप्रसादनारायण सिंहजी अमावाँ नरेश।

पंचम सम्मेलन—मुजफ्फरपुर। सभापति—श्रीमान् महाराजाधिराज सर रमेश्वर सिंहजी, जी. सी. आई. ई., के. बी. ई., वहादुर दरभंगा।

षष्ठम सम्मेलन—डाल्टनगंज, ( पलामू )। सभापति—भिषगाचार्य प० व्रज-विहारी चतुर्वेदीजी आयुर्वेद-रत्नाकर, पटना।

सप्तम सम्मेलन—गया। सभापति—श्रीमान् कविराज प० शारदाचरण सेनजी, दरभंगा।

अष्टम सम्मेलन—वाढ़ ( पटना )। सभापति—प० देवताचरण मिश्रजी वैद्यरत्न, गया।

नवम सम्मेलन—मुंगेर। सभापति—प० शिवचन्द्र मिश्रजी आयुर्वेदाचार्य का० सां० तीर्थ, मुजफ्फरपुर।

दशम सम्मेलन—पटना। सभापति—श्रीमान् प० श्यामनारायण चतुर्वेदीजी, वैद्यराज, प्रोफेसर संस्कृत कॉलेज छपरा।

एकादश सम्मेलन—छपरा। सभापति—भिषङ्मणि प० हरिनारायण चतुर्वेदीजी आयुर्वेदाचार्य, प्रिंसिपल, गवर्नमेंट आयुर्वेदिक कालेज पटना।

द्वादश सम्मेलन—हाजीपुर। सभापति—कविराज प० विधुभूषण सेन आयु-र्वेदाचार्य, कविभूषण, व्याकरणतीर्थ—प्रोफेसर गवर्नमेंट आयुर्वेदिक कालेज पटना।

त्रयोदश सम्मेलन—आरा। सभापति—विद्यालंकार, वैद्यरत्न, चिकित्सा चूड़ा-मणि प० चंद्रशेखरधर शर्मा मिश्र कवीन्द्र-रत्नमाला-वगहा चम्पारन।

प्रधानमंत्री—प्रथमसे दशम विहार प्रान्तीय वैद्यसम्मेलन तक वैद्यभूषण प०

